बोधं विना निषेधवाक्यार्थबोधाऽसंभवाच्च । एतेन 'न विभक्तौ तुस्माः' इति विभक्तिपदबोध्य-सुप्तिङ्बोधो 'हलन्त्य'मिति वाक्यार्थबोधोत्तरं, तद्बोधश्चाऽपवादवाक्यार्थबोधोत्तरमित्यन्योन्याश्रयस्तदवस्थ एवे'त्यपास्तम् ।

यद्यप्यत्र 'हलन्त्य'मित्यनेन लक्ष्यसंस्कारे सुप्तिङ्रूपविभक्तिपदार्थज्ञानोत्तरं'न विभक्तौ'वित्यस्य वाक्यार्थज्ञानं, ततस्तद्विषयपर्यालोचनोत्तरमुत्सर्गेण लक्ष्यसंकार इति,—आद्यस्य न्यायस्य व्यभिचारस्तथापि न दोषः । 'तुस्मा'इत्यस्याऽसन्दिग्धतया तज्जन्योपस्थितिमात्रेण प्रथमान्तस्यैत्र प्राय उद्देश्यसमर्पकतायाः क्लृप्तत्वेन च पकारादावपवादविषयत्वाऽभावनिर्णयात् ।

विभक्तिपदवाच्यानां तुस्मा इतो नेत्यापाततो वाक्यार्थबोधसम्भवात् । 'हलन्त्य'मित्यत्र हल्पदवाच्यमिदिति वाक्यार्थबोधेपि तस्य लक्ष्यसंस्कारकत्वाऽभावेन, विशिष्य बोधस्यैव तथात्वेन तस्य च लकारेत्संज्ञाबोधं विना कथमप्युपपादयितुमशक्यत्वेन वैषम्यादिति दिक् ] ।

न च सह आ = समन्तात् ( एति = ) गच्छतीत्यर्थात्सहेता = मध्यमवर्ण इत्यतो नान्योन्याश्रयः । सिद्धान्तेऽपि सूत्राऽनित्यत्वावश्यकत्वेन नाऽतिप्रसङ्ग इति वाच्यम् । अन्योन्याश्रयतत्परिहारादीन्वदता भाष्यकारेण'कटी वी'त्यत्र प्रश्लिष्टात्, ईङ्तावित्यतश्च सहाऽऽङ्पूर्वात्तृजभावबोधनात् । इण आङा 'एत्येधतो'ति वृद्धेर्दुर्वारत्वाच्च । ( इत्पदाऽभावे 'हयवर'डिति रेफादिभिः प्रत्याहाराऽऽपत्तेश्च । सूत्रत्वाद्युपाध्यवच्छिन्नाऽन्त्यग्रहणे मानाऽभावात् । आदेरपि तादृशस्यैव ग्रहणापत्तौ यणादिसंज्ञाद्यसिद्ध्यापत्तेश्च । 'र'प्रत्याहाराऽसिद्ध्यापत्तेश्च ) । 'अतः सूत्राऽऽवृत्त्या तं परिहरति—हलन्त्यमिति ।

अत एव भाष्येऽपि 'लकारनिर्देशात्सिद्धं, हलन्त्यमित्संज्ञं भवति, लकारश्चेति वक्तव्य'मित्युक्त्वा, 'एकशेषनिर्देशाद्वा सिद्धम्' । हल् च हल् च हल्,

---

१ ग. पाठः । २ 'सह आगच्छती' क. ग. पाठः ।

३ क. ग. पाठः । ४ 'प्रश्लिष्टस्य' ख. क. पाठः ।

५ 'वित्यस्य च तृज' क. ख. पाठः । ६ क. ग. पुस्तके नास्ति ।

हलन्त्यमित्संज्ञं भवती'त्युक्तम्। तस्याऽयं भावः–कृतैकशेषेण हल्पदेन संबन्धसामान्यषष्ठ्या समासः। अन्त्यशब्दस्य द्वन्द्वान्ते श्रूयमाणस्येवोभयत्राऽन्वयः। [स[1] चाऽत्र क्रमिकबोधादावृत्त्यैव वाच्यः]। एवं च'हल्सूत्रान्त्यं,' 'हल्रूपान्त्यं चेद्भवती'ति वाक्यार्थद्वयम्। नच द्वितीयार्थे षष्ठ्यनुपपन्ना। 'राहोः शिर'इतिवदुपपत्तेः। 'हसमीपो लकार इद्भवति, हल्रूपान्त्यमि'दिति कैयटोक्तव्याख्याया इष्टत्वे हि 'हल् इत्संज्ञं भवति, हलन्त्यं[2] चेत्संज्ञं भवती'ति वदेत्। प्राग्वत्—'हसमीपो[3] लकार'इत्यस्याऽर्थोऽसङ्गतिरित्यपि मनोरमायां स्पष्टम्। एवं च पदद्वयावृत्तेरावश्यकत्वे, षष्ठ्यर्थान्वयक्लेशमसहमानो मूलकृत्संपूर्णसूत्रं पृथगावर्त्तितवानिति सुधीभिर्विभावनीयम्।

हलिति सूत्रे इति। ( हलि[4]—अन्त्यमिति 'सप्तमी'ति योगविभागात्समासः। ननु–उक्तरीत्या सप्तमीसमासाऽप्राप्तिः। 'हली'त्यस्य क्रियान्वयित्वेनाऽन्त्यपदेन सामर्थ्याऽभावः। यथा कथञ्चित्सामर्थ्याश्रयेणैतत्प्रवृत्तौ मानाऽभावात्। एतेन 'सुप्सुपे'ति समास इत्यपास्तमिति चेत्।

एवं तर्हि—) हलः=हल्सूत्रस्याऽन्त्यमिति सूत्रे षष्ठीतत्पुरुषः। 'षष्ठी स्थाने' इत्यस्य तु 'ऊदुपधाया गोह'इत्यादाविव, प्रागुक्तयुक्त्या चाऽप्रवृत्तिः।

अत्राऽप्युपदेश इति संबध्यते। तद्बललभ्यं—सूत्रे इति।

**आदिरन्त्येन।** आदिरिति किम्?। इगादिप्रत्याहारेष्वकारादीनामपि ग्रहणापत्तेः। अन्त्यशब्देन पूर्वेषामाक्षेपात्। अन्त्येनेति किम्?। इर्णादि[6]प्रत्याहारे ञकारादीनामपि ग्रहणापत्तेः। आदिशब्देन परेषामाक्षेपात्। उभयोपादाने तु न दोषः। लोके'ऽयमादिरन्तो वे'त्युक्तेऽवशिष्टमपि किञ्चिदस्तीति नियमेन प्रत्ययात्—'परस्मिन्सति यस्मात्पूर्वो नास्ति स आदिः','पूर्वस्मिन्सति यस्मात्परो नास्ति सोऽन्त्य' इति लक्षणस्य

---

१ क. पुस्तके नास्ति। २ 'चेत्संज्ञं' ग. पाठः।
३ ग. ख. पुस्तके नास्ति। ४ क. पुस्तके कुण्डलितोऽयं पाठः।
५ ग. ख. पुस्तके नास्ति। ६ 'रप्रत्या' ख. पाठः।

आवश्यकत्वेऽकारादिग्रहणे इकार-णकारादीनामाद्यन्तत्वस्यैवाऽनापत्तेः ।

इतेति किम्?। 'अमङणने'त्यादिणकारादिभिः प्रत्याहाराऽऽपत्तेः।([1]यदि त्वनित्यत्वावश्यकत्वेन तेनैवाऽनतिप्रसङ्ग इत्युच्यते, तदा इतेति[2]–'नाऽसूया कर्त्तव्या यत्रानुगमः क्रियते' इति न्यायेन बोध्यम्)। ( नच[3] 'मध्यगाना'-मित्यधिकमिति वाच्यम् )। तत्र[4] विनिगमकाऽभावादवयवत्वेन बोधकाऽऽद्य-न्तशब्दाभ्यामाक्षिप्तावयवविभूतसमुदायघटकाऽऽदिवर्णात्परभूता, अन्त्य-वर्णात्पूर्वभूता, आदिवर्णश्चेति—सर्व इह गृह्यन्ते। तेनाऽऽदिसहितमध्यगाः संज्ञिन इति फलितम्। समुदायस्य तु न संज्ञा, फलाऽभावात्[5]। सहग्रहणात्तु समुदाय एव सञ्ज्ञेति समुदायादेव विभक्त्युत्पत्तिरिक इत्यादौ, ना-ऽऽदिमात्रात् । नन्वन्त्यशब्देन स्वघटितसमुदायाऽऽक्षेपेणाऽन्त्यस्यापि समुदायघटकत्वात्संज्ञित्वं स्यात्। नचेत्संज्ञा-लोपाभ्यामपहारात्कथं तस्य संज्ञाप्राप्तिरिति वाच्यम्। वर्णसमाम्नायेऽपहारेऽपि[6] इकुशब्दादौ तस्य सत्त्वात्[7] । अकः सवर्णे इत्यादिसूत्रेष्वश्रवणापत्तेः, 'आदिरन्त्येने'ति सूत्रस्याऽसङ्गततापत्तेश्च, अत्रेत्त्वेऽपि[8] लोपाऽभावात्। नच संज्ञास्वरूप-बोधनेन सङ्केतकाल एव तस्य पारार्थ्यनिर्णयेन न संज्ञित्वम्। आदेरपि तर्हि तत्त्वाऽनापत्तेरिति चेन्न। आदिपदमावर्त्त्या[9]'ऽन्त्येन सहोच्चार्यमाण आदिर्मध्यगवर्णा–ऽऽदिवर्णा–ऽभिन्न'इत्यर्थः। तेषां स सञ्ज्ञेति यावत्।

[[10]लाघवा'दादिरन्त्य इच्च सहे'त्येव न्यासे कर्त्तव्ये, 'आदिरन्त्येने'ति-गुरुभूतन्यासेनाऽन्त्येऽप्रधानत्वबोधनद्वारा आदेः प्राधान्यबोधनेन, परार्थत्वेऽपि संज्ञित्वबोधनात्। एवं च[6] 'स्वं रूप'मिति प्रत्याख्यानेऽपि न दोषः।

१ क. ग. पाठः । २ 'इतेति चिन्त्यप्रयोजनं' ग. पाठः ।

३ क. नास्ति । ४ 'तत्रे'ति क. पाठः । ख. ग. नास्ति ।

५ 'प्रयोगाऽभावात्' क. ग. पाठः । ६ क. ग. नास्ति ।

७ क. ग. पाठः । ८ क. ग. पाठः ।

९ क. पाठः । १० [] एतदन्तर्गतः पाठः क. पुस्तके कुण्डलितः ।

केचित्त्वाद्यन्तयोरुभयोः[1] संज्ञास्वरूपबोधकतया पारार्थ्येऽपि, 'स्व'-मित्यनुवृत्त्या न दोषः। स्वं रूपं चाऽऽदेरेव, नान्त्यस्य। अप्रधानतृतीया-निर्देशात्। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वादित्याहुः]।

इदं सूत्रमनित्यम्। 'अचि श्नुधात्वि'तिसूत्रे 'इण' इत्येव सिद्धे 'य्वो'-रिति निर्देशात्[2]। ('शास इदङ्हलो'[3] रित्यत्रोभयोपादानात्। तत्राऽङ्गादौ, हलादावित्यर्थे उभयवैयर्थ्यम्[4]। 'व्यतिशासै' इत्यत्र क्ङित्त्वमेव नास्ति। आटा सहैकादेशस्य स्थानिवद्भावाच्च। अतो नाऽतिप्रसङ्गः)–इति दिक्।

हलन्त्यम्। अत्र पदद्वयम्। समासे ह्यन्त्यशब्दस्य पूर्वनिपातः स्यादित्याहुः। 'कर्मधारययोग्यपदानां समासाऽभावः सूत्रकारशैलीसिद्ध'-इत्यपि वदन्ति। यद्यपि सर्वोऽपि हल् तं तमवधिं प्रत्यन्त्यो भवति, तथा-प्यन्त्यग्रहणादुपदेश इत्यनुवृत्तेश्च प्रत्यासत्त्याऽज्ञातज्ञापकोच्चारणविषय-समुदायं प्रत्यन्त्य इह गृह्यते। अत एव थमोरुकारो, (णौ गमेरिकारश्च)[5] मकारेत्संज्ञापरित्राणार्थश्चरितार्थः। समुदायोपदेशे एव सर्वत्र ऋषि-तात्पर्येण, अवयवानां नान्तरीयकतया च तेषामज्ञातज्ञापकत्वाऽभावात्। (अत्र गमेर्मकारो नोपदेशाऽन्त्यः)।

(नचैवमिकारस्येत्त्वे[6] 'इदित' इति नुमापत्तिः। अनुनासिकत्वे मानाऽभावात्। उच्चारणार्थेनाऽप्यन्त्यत्वविघातस्य कर्त्तुं शक्यत्वात्। वस्तुतोऽयमिका निर्देशः स्थानिवद्भावलब्धधातुत्वमादायेति न दोषः)।

'उपदेशे' इति प्रधानक्रियान्वयि। तदन्वयस्य न्याय्यत्वात्[7]। तत्रो-च्चारणेनाऽभिव्यक्तस्य[8] तदुत्तरं संज्ञा युक्तेति,—तेन तदुत्तरकालो लक्ष्यते।

---

१ 'उभयोरपि' ख. पाठः। २ क. ग. पाठः। 'निर्देशादिति दिक्' क. पाठः।
३ ख. पाठः क. पाठस्थाने। ४ क. ग. नास्ति।
५ ख. नास्ति। ६ () एतदन्तर्गतः पाठः क. नास्ति।
७ इतोऽग्रे—'उपदेशशब्देन चोपदेशो यस्मिन्निति बहुव्रीहिणा काल उच्यते' —अयं ख. पाठः। क. ग. तु नास्ति। ८ 'तत्रोच्चारणकालेना' ख. पाठः।

(स च[1]ऽव्यवहित एव)। अत एव 'उपदेशस्तावत्, उपदेशोत्तरकाला इत्संज्ञे'त्यादिवाक्याऽपरिसमाप्तिन्यायप्रतिपादक—'नाज्झलौ'—विति सूत्रस्थभाष्यं सङ्गच्छते। तत्र (प्रायोऽन्त[2]रङ्गत्वादुपदेशाऽव्यवहितोत्तरे) पदपर्यालोचनकाले यथोद्देशपक्षाश्रयणेनेत्संज्ञा। पदार्थोपस्थितिरनुबन्धविनिर्मुक्तस्यैव। स्प[3]ष्टं चेदं तित्स्वरितमित्यत्र कैयटे।

(अत[4] एवेदम इशित्यादौ 'अणत्वात्सवर्णग्रहणं प्राप्तमप्रत्यय इत्यनेन निषिध्यते' इति भाष्ये उक्तं सङ्गच्छते। 'घु'डित्यादौ सानुबन्धाद्विभक्तिस्तु[5] श्रावणे प्राथमिकबोधे विशिष्टस्य विषयतया[6], तस्यैवाऽर्थवत्त्वमारोप्य। अन्यो हि पश्चादुपतिष्ठते, न तु प्रयुज्यते इति ततो विभक्त्यसंभवात्। विभक्त्यर्थान्वयस्तु 'आनर्थक्यात्तदङ्गेष्वि'तिन्यायेनाऽनुबन्धरहित एव। इत्संज्ञाकार्यमप्येवम्)। वैयाकरणे चित्स्वरस्तु न। 'आदिरन्त्येने'ति सूत्रप्रवृत्त्योपस्थापके एव च[8]स्य चारिताथ्यात्। अतएव धेट्प्र[9]भृतीनामेजन्तत्वनिमित्तकाऽऽत्वसिद्धिः। नचैवमप्युपदेशे एजन्तत्वाऽभावात्कथमात्वम्। 'धातो'रित्यधिकारेण 'धातुसंज्ञोपदेशे एजन्तस्ये'ति तदर्थान्न दोषः। धातुसंज्ञा त्वनुबन्धरहितस्यैवेति स्पष्टं 'न धात्वि'ति सूत्रे भाष्यकैयटयोः। अत एवोदीचां माङ इति निर्देशः संगच्छते। [10]सोऽयमनेकान्तपक्षः। [ [11]विभक्त्यादिसञ्ज्ञाऽपि सूत्रान्तर्गतानामेव। तत्फलन्तु तत्रैव

---

१ क. ग. नास्ति। २ क. ग. पाठः। ३ ख. नास्ति।

४ क. ग. नास्ति। ५ इतोऽग्रे—'घुडित्यादौ सानुबन्धाद्विभक्तिस्तु तेनैवानुबन्धविनिर्मुक्तोपस्थितेस्तस्यैवार्थवत्त्वात्सुलभा। इत्संज्ञाकार्यं तु यत्र संज्ञा तत्रानर्थक्यात्तदुपस्थाप्ये एव—क. पाठः।

६ ख. ग. पाठः। ७ इतोऽग्रे—'लोपद्वारेण च विशिष्टे तद्वाचकताग्रह एव। इत्संज्ञाकार्यन्तु यत्र संज्ञा तत्रानर्थक्यात्तदुपस्थाप्ये एव' ग. पाठः।

८ 'तस्य' क. पाठः। ९ 'धेप्रभृतीनां' ग. पाठः।

१०.क. नास्ति। ११ [] एतन्तर्गतः क. ग. पाठः।

'न विभक्ता'वित्यादीनां प्रवृत्तिः। अनुबन्धानामनेकान्तत्वादेव 'इदम इ'-शित्यादावण्त्वात्सवर्णग्रहणं प्राप्तमप्रत्यय इत्यनेन निषिध्यते'इति भाष्ये उक्तं संगच्छते। 'अनेकाल्शि'दिति सूत्रे यत् इशि उक्तम्-'शित्करणादेव सर्वादेश' इति भाष्ये, तस्ये'त्सञ्ज्ञकशकारकरणसामर्थ्याद्भूतपूर्वगत्याऽनेकाल्त्वमादाय सर्वादेश' इत्यर्थ इति न तद्विरोधः।

ते चाऽनुबन्धाः—अनेकान्ताः = अनवयवाः। यो ह्यवयवः स कदाचित्तत्रोपलभ्यत एव। अयन्तु न तथा। तदर्थभूते विधेये कदाऽप्यदर्शनात्। 'अनेका'लित्यत्र सम्बन्धसामान्यषष्ठ्यर्थे बहुव्रीहिः, समीपेऽवयवत्वारोपेण वा बहुव्रीहिरिति डा-णलादौ न दोषः। न चाऽत्र पक्षे वुञ्छण्कठजादौ परस्मिन्नपि सम्बन्धसत्त्वेन णित्त्वप्रयुक्तवृद्धिः स्यादिति वाच्यम्। दध्नचश्चकारेण हलन्त्यमितीत्सञ्ज्ञकसामीप्यप्रयुक्तकार्यं पूर्वस्यैव, न परस्येति कल्पनात्। ( यत्र तूपदेशाऽव्यवहितोत्तरकालेऽसम्भवस्तत्र तद्व्यवहितेऽपि काले सा। यथाऽइउणित्यादीनां हल्प्रत्याहारसिद्ध्युत्तरं सेति दिक्। यद्वा सर्वत्र फलप्रत्यासत्तेः, कार्यकालपक्षे तथैवौचित्याच्च विधानोत्तरं प्रयोग एव प्रक्रियादशायां तत्प्रवृत्तिः। प्रत्यासत्तिलभ्यमुपदिश्यमानाऽन्त्यत्वं हि प्रत्याय्येष्वसम्भवात्प्रत्यायकनिष्ठमाश्रीयते। अतएवाऽनेकाल्सूत्रे इशादावनेकाल्त्वात्सर्वादेशत्वे सिद्धे शिद्ग्रहणं किमर्थमित्यादिविचारो भाष्यकृत्कृतः संगच्छते। किञ्चाऽनवयवत्वे ण-श-कप्रत्ययादौ कादेरित्त्वानापत्तिः, प्रत्ययादित्वाऽभावात्।

'चुटू' इत्यादावादिशब्दस्य समीपपरत्वे तु चुञ्चुप्-चणपयोर्यादित्वेऽपीत्त्वापत्तिः)। दध्नचश्चकारेण चैकान्तत्वमेव ज्ञापयितुं युक्तमिति दिक्]।

१ 'अत एव' क. पाठः। २ ग. नास्ति। क. पाठः।

३ 'अनेकान्तत्वं चानवयवत्वं' ग. पाठः। ४ एतत्स्थाने-'इदं चानेकान्तत्वं डाणलाद्यतिरिक्तविषयम्। सर्वादेशत्वं विना तत्राऽनुबन्धत्वस्यैवाऽभावात्'इत्येव ग. पाठः। ५ क. कुण्डलितः पाठः। ६ ग. ख. नास्ति।

[ केचित्तु तदुत्तरकालो व्यवहितोऽपि, फलप्रत्यासत्तेः । पदार्थेष्वेवेत्संज्ञाया उचितत्वात् । कार्यकालपक्षे तथैवौचित्यात् । 'न तेषामुपदेश'इति चेत्, पूर्वमते परम्परासंबन्धे फलमिव, इत्संज्ञैव तत्राऽस्तु, सामर्थ्यात् । उपदेशान्त्यत्वं हि प्रत्याय्येष्वसंभवात्तत्प्रत्यायकनिष्ठमाश्रीयते । अत एवानेकाल्सूत्रे 'इशादावनेकाल्त्वात्सर्वादेशत्वे सिद्धे, शिद्ग्रहणं किमर्थ'मित्यादिविचारो भाष्यकृत्कृतः सङ्गच्छते इत्याहुः । सोऽयमेकान्तपक्षः ] ।

( एवञ्च[2] विधानकाले तत्रोपलम्भादन्यत्रानुपलम्भाच्चैकान्तत्वमेव युक्तम । अनवयवो हि काकादिरेकजातीयसम्बन्धेन वृक्षगृहादिषूपलभ्यते । न चैवमवयव इति दिक् )। अन्त्यमिति किम् ? । वाचालः । हल् किम् ? । 'चिरिणोती'त्यादौ धातोरन्त्यस्य मा भूत् ।

आद्योच्चारणमिति । आद्यमुच्चारणमित्यर्थः । तच्च[3] प्रत्यासत्त्या एतच्छास्त्रप्रवर्त्तकाऽऽचार्याणामेव । आद्यत्वं चाऽज्ञातज्ञापकत्वम् । 'उप'शब्द आद्यर्थकः । दिशिरुच्चारणक्रियः । स्पष्टं चेदमादेच उपदेशे इत्यत्र भाष्यकैयटादिषु । ( [4]तच्चेत्संज्ञाश्रयावयवकशब्दस्य, इत्सञ्ज्ञाश्रयावयवकबोधकशब्दस्य वेति बोध्यम्)। प्रकृ[5]तसूत्रभाष्ये तु"—उपदेश इति किम् ? । अभ्र आँ अपः । प्रत्यक्षमाख्यानमुपदेशो, गुणैः प्रापणमुद्देश' इति नासावुपदेश' इत्युक्त्वा, उद्देशोपदेशयोर्लोकव्यवहारेण संकीर्णत्वमाशङ्क्य, 'उपदेशनेऽजनुनासिक' इति वार्तिककारदर्शितन्यासस्य खण्डनाय—'उपदेश इति करणे घञ् । उपदिश्यतेऽनेने'ति । तच्च शास्त्रं शासनकरणं, प्रत्यासत्त्यैतच्छास्त्रीयधात्वागमप्रातिपदिकनिपातप्रत्याहारसूत्रप्रत्ययाऽऽदेशरूपम् ।

(त[6]त्रोपदेशने = शास्त्रे । उच्चारित इत्यध्याहारः । नतु तत्र बोधित इति । व्याख्यानात् । तथा सति 'अभ्र आँ' इत्यादौ दोषो दुर्वार इति बोध्यम् ।

---

१ ख. ग. पाठः । क. पाठेन च क्वचित्तुल्यः । २ क. ग. पाठः ।
३ 'स च' ग. पा. । ४ ग. पाठः ।
५ क. कुण्डलितः पाठः । ६ क. ग. पाठः ।

शास्त्रं च प्रकृतमेव, प्रत्यासत्तेः )। ननु ल्युटा बाधात्करणे घञ् दुर्लभः। वाऽसरूपविधिस्तु 'क्तल्युटतुमुन्खलर्थेषु ने'ति निषिद्धः। नच तत्र साहचर्येण भावल्युट एव ग्रहणम्। 'ईषत्पानः सोमो भवते'त्यत्र कर्मणि खल् ने'ति भाष्यादिप्रामाण्येनाऽत्र साहचर्याऽनाश्रयणात्। नच संज्ञात्वाऽभावात्कथं घञः प्राप्तिः। 'अकर्त्तरि चेति सूत्रे संज्ञायामित्यस्य प्रायिकत्वात्। 'हलश्चे' ति घञ् तु यद्यपि—ल्युडपवादः, स च विकल्पेनैव। नच तत्राऽपि 'क्त ल्यु'डित्यस्य प्रवृत्तिः। ल्युटो यत्राऽपवादत्वं तत्रैव निषेधप्रवृत्तेः, तथापि–स प्रकृते न लभ्यः। 'संज्ञाया'मिति विहितत्वात्।

नच 'प्रायेणे'त्यनुवृत्तेः 'प्रायेण संज्ञाया'मिति व्याख्यानान्निस्तारः। गुण-प्रधानसन्निधौ यत्र प्रधानं विशेषणसाकाङ्क्षं, तत्र गुणस्य[2] तद्विशेषणताया एव न्याय्यत्वात्। तदुक्तं भाष्ये—'नह्युपाधेरुपाधिर्भवती'ति' चेन्न। बाहुलकाल्ल्युडभावे घञः सिद्धेः–"इत्युक्तं। तत्प्रौढिवादः। बाहुलकस्याऽगतिकगतित्वात्। 'उच्चार्य वर्णानाह—उपदिष्टा इमे वर्णा' इत्यादिभाष्यादुपदेशशब्दस्योच्चारणार्थत्वनिर्णयेन, सङ्कीर्णलोकव्यवहारस्य लक्षणयाऽप्युपपन्नत्वेन च, भावघञि बाधकाऽभावाच्च। ( व्याख्यानेसापेक्षो[3]च्चारितपदाऽध्याहारे गौरवाच्च )। 'आदेच उपदेशे' 'उपदेशेऽत्वत' इत्यादावाद्योच्चारणार्थकभावघञन्तस्यैव सर्वसंमतत्वाच्च। अत एव 'एकाच उपदेशे' इति सूत्रे कैयटेनोक्तम्–'इत्संज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यते। तदुक्तम्—उद्देशश्च प्रातिपदिकानां नोपदेश' इति। इदं चा'देच उपदेशे' इति सूत्रे भाष्ये स्पष्टम्। एवं चैतद्भाष्यविरोधेनाऽत्रत्योपसंहारस्य संकीर्णत्वादिशङ्कादिपरभाष्यस्य प्रौढिवादत्वमावश्यकम्। किञ्चोपदेशशब्दस्य प्रत्ययादिपरत्वे[1] तस्यैव 'हलन्त्य'मित्यत्राऽन्वयेन, यत्किञ्चित्समुदायान्त्यस्य वारणसंभवे, तदर्थं सामर्थ्यादिवर्णनक्लेशो भाष्यकृतो व्यर्थः स्यात्। किञ्च षष्ठीप्रकृतिपक्षे प्रत्ययविधौ पञ्चम्याः प्रकल्पकत्वापत्तौ

१ एतत्स्थाने 'तस्ये'त्येव ख. पाठः । २ 'विशेषणस्य' ग. पाठः । ३ ग. पाठः ।

सनः सनेवादेशोऽस्तु । नैवं शक्यम् । इत्संज्ञा न स्यात् । 'उपदेश इत्संज्ञोच्यते' इति 'तस्मिन्नि'तिसूत्रस्थभाष्यम्, 'आदेशस्योपदेशाऽभावा'- दिति कैयटश्च विरुध्येत । एतेन 'प्रक्रिया'शब्दे करणव्युत्पत्ति'रिति परास्तम् । तदुक्तम्—'अजब्भ्यां स्त्रीखलनाः, स्त्रियाः खलनौ विप्रतिषेधेने'ति । अतो भावप्रत्यय एव न्याय्यः । यत्तु—

> धातु-सूत्र-गणो-णादि-वाक्य-लिङ्गा-नुशासनम् ।
> आगम-प्रत्ययाऽऽदेशा उपदेशाः प्रकीर्तिताः ॥

करणव्युत्पत्त्या पूर्वार्द्धोपात्तानामुपदेशसंज्ञा = उपदेशव्यवहारः । एतेन 'संज्ञायाः शास्त्रकारैरनुक्ते'रित्याद्यपास्तम् । कर्मव्युत्पत्त्या त्वागमादीनाम् । उणादि-लिङ्गानुशासनयोः पृथगुपादानं गोबलीवर्दन्यायेन ।

एवं गणाद्धातोः, प्रत्ययेभ्य उणादेरपि । शीङ्, लण्, चोरट्, उण्, आचारेऽवगल्भ, धुट्, अनङित्युदाहरणानि । अत्र सूत्रसाहचर्याद्धात्वागम-प्रत्ययादि[1]शब्दे तद्बोधकपाणिन्यादिपठितानुपूर्वीक[2]शब्दानामेव ग्रहणम् । तेषां धातुत्वादिव्यवहारस्तु भाविसंज्ञाविषयघटकत्वेन, 'धातुपाठ' इत्यादि-व्यवहारवत् । एतेन 'आमोऽमित्त्वमदन्तत्वात् । यकारादी चुश्चुप्चणपा'-वित्यादिग्रन्थविरोधः । नह्युत्सृष्टानुबन्धस्य न प्रत्ययत्वं, येन मित्त्वादि न भवेत् । किञ्च 'न धात्वि'ति सूत्रे धातुग्रहणं किमर्थं ? । 'लूञ् लविते'त्यादि-भाष्यम्, अनुबन्धो न धात्वेकदेशः, यस्मादुपदेशे एवेत्संज्ञा । प्रयोगे तु 'लू' शब्द एव धातुसंज्ञः । केवलमसौ ञित्कार्यं लभते' इति कैयटग्रन्थ-श्च विरुध्यते । किञ्च 'तस्मिन्नि'तिसूत्रस्थोक्तभाष्यविरोध' इत्यपास्तम् ।

इदं चोदाहरणमात्रम् । एतेन 'घ्वसो'रिति सूत्रे 'लोपश्श्चेति द्विश-कारको निर्देशः । द्वितीयः शकार इ'दिद्युपधासंज्ञासूत्रस्थभाष्यविरोधः । तत्र हि 'लोपश्'इति भिन्नं पदं, 'श्'इति च । पूर्वस्य श्चुत्वेन शः । झलूपरसंयोगादित्वेन 'स्को'रित्यस्य तु न प्रवृत्तिः । तस्य निमित्तकार्यिणो-

---

१ 'प्रत्ययादीनां' क. ख. पाठः । २ 'पठितानुपूर्वीकानामेव' क. ख. पाठः ।

रखण्डैकपदस्थत्वे एव प्रवृत्तेः—'परेश्चे'[1]तिसूत्रस्थभाष्यसंमतिपूर्वकमुपपादयिष्यमाणत्वात्। शकारस्य च धात्वाद्यन्तत्वाऽभावः स्पष्ट एव। अपि च 'नमोवरिवश्चित्रङ' इत्यस्याऽसंग्रह' इति परास्तमिति। तन्न। करणव्युत्पत्त्यैव भाष्यरीत्या सर्वसंग्रहे, कर्मव्युत्पत्तिकथनस्य व्यर्थत्वात्।

किञ्चैवमुपदेशकरणत्वस्यैवोपदेशव्यवहारप्रयोजकत्वेनोपदेशताप्रयोजकधातुत्वादिरूपोपाध्यवच्छिन्नसमुदायाऽन्त्यं हलिदिदित्यर्थ इति त्वद्ग्रन्थविरोधः। यथा पाचकादिव्यवहारस्य पाककर्तृत्वादिकमेव प्रयोजकं, नतु देवदत्तत्वादि। लिङ्गानुशासनस्य प्रकृतानुपयोगाच्चेति दिक्।

यत्र तु करणव्युत्पत्त्यैवाऽर्थसंगतिस्तत्राऽगत्याऽस्तु बाहुलकात्तथा। यथा—'यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्ता'वित्यादौ। एतेन 'तपरोपदेशश्चेत्तपरोच्चारण'मिति वार्त्तिकं व्याख्यातम्। केचित्तु-'उपदेशशब्दः संप्रदानव्युत्पत्त्या प्रयोजनपरः। तपरत्वे प्रयोजनमस्ति चेत्तकारोच्चारणं कर्त्तव्यमिति तदर्थ' इत्याहुः।

यत्तु 'भीमादयोऽपादाने' 'दाशगोघ्नौ संप्रदाने' 'ताभ्यामन्यत्रोणादयः' इत्युक्तेः संप्रदाने घञ् दुर्लभः। उणादिशब्देन च पञ्चपाद्युक्तवदष्टाध्यायीतार्तीयीकतृतीयचतुर्थचरणोक्ता अपि गृह्यन्ते, विनिगमकाऽभावा'[2]दिति। तन्न। उणादित्वादेव ल्युटि बाहुलके सिद्धे 'कृत्यल्युट' इति सूत्रे ल्युड्ग्रहणवैयर्थ्यापत्तेरित्याहुः। उपदेश इति किम्? । अभ्र आँ अटितः। यद्यपि लोपो न प्राप्नोति, 'आङ इ'दिति वक्तव्येऽनुनासिकविधानसामर्थ्यात्। यथा 'उञ ऊँ' इत्यत्र (विधानसामर्थ्यान्नेत्त्वलोपौ)। तथाप्य'नेकान्ता अनुबन्धा' इति पक्षे 'आदितश्चे'त्यटित इतीट् प्रतिषेधः स्या[3]त्। उत्तरार्धं चावश्यकं तत्[4]।

---

१ 'परश्चेति' क. ख. पाठः। २ ग. नास्ति। ३ 'आदितश्चेतीट्प्रति' ग. पाठः।

४ इतोऽग्रे—'यद्यपि वेदे आपाद्यं नास्ति, तथाप्यभ्र आँ इत्यनुकरणात्परेऽटित इत्यत्र दोषः। यत्तु लोपाऽभावे इदिति महासंज्ञाकरणात्संज्ञापि नेति। तत्तु महासंज्ञयैव लोपसिद्धेस्तस्य लोप इत्यस्य वैयर्थ्यापत्त्या, 'इक' इत्यादौ ककारादिश्रवणाऽनापत्त्या चाऽयुक्तम्।' ग. पाठः।

([1]उपदेशेऽज। उपदेश इति तूत्तरार्थमावश्यकम्)। ननु 'मुखनासिके'ति लक्षणलक्षितानुनासिकत्ववतामचां (पाणिन्युच्चारिताना-) मेतच्छास्त्रेऽनुपलम्भेन कीदृशानुनासिक्यास्ते इत्यत आह—प्रतिज्ञेति । प्रतिज्ञाविषयीभूतमानुनासिक्यं येषामिति विग्रहः। 'आतश्चोपसर्गे' इति कर्मण्यङ्।

[ एतेन[2] 'प्रतिज्ञाशब्दस्य भावाऽङन्तस्य प्रतिज्ञासमधिगम्ये लक्षणे'-त्यपास्तम् ।

(कारक[3]विषये लक्षणयैवोपपत्तौ कारके प्रत्ययविधानवैयर्थ्यापत्तेश्च)। (एतेन[4] 'पाणिनिवृत्ति-आद्यज्ञानविषयो व्याकरण'मित्यर्थक'पाणिन्युपज्ञं व्याकरण'मित्यादावपि लक्षणे'त्यपास्तम्)। नच लाक्षणिकार्थानुशासनमेव तत्। (अदृष्टत्वात्)। 'लः कर्मणी'त्यादीनामपि तथात्वापत्तौ 'तिङां कर्मादौ शक्ति'रिति सिद्धान्ताऽसङ्गत्यापत्तेश्च[5] ]। पाणिनिना प्रोक्ता वर्णाः पाणिनीया इत्यर्थः। प्रतिज्ञा चेदमित्थमिति कथनम्। ( [6]वर्णानां तत्त्वज्ञापको व्यवहारश्च )। तत्कर्त्तारश्च प्रत्यासत्तिन्यायेन एतच्छास्त्रकर्त्रध्येतार एव। एतेन 'पाणिनीया' इत्यस्य पाणिनिशास्त्राध्येतार इत्यर्थं मत्वा प्रश्नसमानार्थकत्वाऽभावेनेदमुत्तरमसङ्गतमिति[8] मन्दोक्त[9]मपास्तम्। 'पाणिनि'शब्दश्च भाष्यवार्त्तिककृतोरप्युपलक्षणम् । [10]आर्थं वाऽस्योत्तरत्वं बोध्यम्। यद्यपि सूत्रकृतस्तथा पाठ इदानीं परिभ्रष्टस्तथापि वृत्त्यादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः ]।

ननु 'रलयो'रिति न्यूनं, टकारस्याऽपि मध्यगत्वात्। नच 'लोपः खल्वपि

---

१ क. पाठः। २ क. कुण्डलितोऽयं पाठः। ३ क. ग. नास्ति।
४ क. नास्ति। ख. ग. पुस्तके तु दृश्यते। ५ क. ग. नास्ति।
६ चो नास्ति क. ग. पुस्तके। ७ क. ग. पाठः।
८ वृत्तिदीपिकादिकृन्मौनिकृष्णभट्टोऽत्र मन्दपदेन व्यवह्रियते।
९ 'इत्यपास्तम्' इति तु शोधितः क. पाठः। 'मन्द'पदमपसारितम् ग. पुस्तके तु स्वत एव तथा पाठः। १० प्रतिज्ञेत्यादेरित्यर्थः।

तावद्भवती'ति भाष्यादन्तरङ्गत्वादित्संज्ञालोपयोः कृतयोरसंनिधानात्संज्ञा नेति वाच्यम् । हल्प्रत्याहारे 'ल'ण्णित्यकारप्रवेशाऽऽपत्तेः । हल्प्रत्याहार-सिद्धेः प्रागचपदार्थनिष्पत्त्यभावेनोपदेशेऽजित्यस्य वाक्यार्थाऽभावेन तदप्राप्तेः[1] ।

ननु तदुत्तरमुपदेशकालाऽव्यवहितोत्तरकालाऽभावात्कथमित्संज्ञेति चेत् । [ अनुनासिकत्वप्रतिज्ञासामर्थ्याद्व्यवहितेऽपि[2] प्रवृत्तिरिति गृहाण ।

( एवञ्च[3] हल्प्रत्याहारसिद्ध्यनन्तरं 'हलन्त्य'मितिवाक्यार्थबोधे ) मकारादीनां द्विरुपदेशसामर्थ्याद्यणादिव्यवहाराच्च उपदेशव्यवहितकाले णादीनामपीत्संज्ञेति बोध्यम् ]।

नच लणित्यनुनासिकस्य तत्र प्रवेशेऽपि गुणानां भेदकत्वेना-ऽननुनासिकस्य न हल्त्वमिति वाच्यम् । 'मामँल्लायस्वे'तिप्रयोगेऽनुना-सिकपक्षेऽनुस्वारापत्तेः ।

नच टकारस्याऽडादिप्रत्याहारस्वरूपबोधनार्थत्वेन[4] परार्थत्वान्न ग्रहणम् । ( तदुक्तं[5] भाष्ये-'अप्रधानत्वादिती'ति वाच्यम् । इक्स्वरूपबोधनेन चरि-तार्थस्येकारस्याऽण्प्रत्याहारे) ग्रहणाऽनापत्तेरत[6] आह—प्रत्याहारेष्विति ।

अन्यथा नासिकादौ यणाद्यापत्तिरिति भावः ।

नन्वित्त्वविधानसामर्थ्याद्यणभावस्य सिद्धत्वेन कथम्'अनुनासिक' इत्यादिनिर्देशानां ज्ञापकत्वम् ? ।

नच येन नाप्राप्तिन्यायेनेत्त्वस्य यण्बाधकत्वेपि नासाशब्दात्कप्रत्यय-

---

१ 'तस्य तदप्राप्तेः' इत्युचितः पाठः प्रतिभाति ।

२ क. नास्ति ।

३ ग. पाठः ।

४ 'अट्प्रत्याहार' क. ग. पाठः ।

५ ग. पाठः ।

६ 'न ग्रहणं । प्रत्याहारद्वये इकारस्य ग्रहणाऽनापत्तेः' ख. पा. ।

निष्पन्ननासिकाशब्दे यस्येतिलोपस्य प्राप्तत्वेन लाघवा'न्नास्क'इत्येव वक्तव्ये नासिकशब्दोच्चारणस्य ज्ञापकत्वाऽक्षतिरिति वाच्यम । 'केऽण'इति ह्रस्वेत्वाभ्यां परत्वाद्यस्येति लोपस्य बाधितत्वेन, सकृद्गतिन्यायात् (भ्रष्टावसरत्वाच्च) पुनस्तदप्रवृत्तौ, नास्कस्याऽसाधुत्वात् । नच नित्यो 'यस्ये'ति लोपः । शब्दान्तरप्राप्त्या तस्याऽप्यनित्यत्वात् । (अण्ग्रहणसामर्थ्येन 'केऽण' इत्यस्य लोपबाधकत्वाच्च । पुनस्तु न लोपप्रवृत्तिः[3], भ्रष्टावसरत्वात्)–इत्यत आह—आदीति । आदिना 'तृषिमृषिकृषेः' 'एकः पूर्वपरयोः' 'उणादयो बहुल'मित्यादिसंग्रहः । (वस्तुत उक्तरीत्या लण्सूत्रस्थाऽकारस्य नाऽनुबन्धत्वं, किन्तूच्चारणार्थत्वमेव । एवञ्चाऽऽचारादप्रधानत्वाल्लोपश्च बलवत्तर' इति भाष्यस्थोऽप्रधानत्वादित्यादिर्द्वितीयसमाधिरपि युक्त एव । तत्राऽप्रधानत्वादित्यन्त्याऽनुबन्धविषयम् । अप्रधानत्वबोधकाऽन्त्येनेति तृतीयानिर्देशादिति तदर्थः । मध्यगाऽनुबन्धविषये तु—'लोपश्चे'त्यादि । अन्त्यस्य तु यथा न लोपस्तथोक्तमेवेति वदन्ति) ।

ननु 'प्रत्याहारेऽनुबन्धाना'मिति वार्त्तिके 'प्रत्याहारशब्दस्य वर्णसमाम्नाये प्रसिद्धेः, 'प्रत्याहारेष्विता'मित्यनुपपन्नमत आह–आदिरन्त्येनेतीति । वार्त्तिके तादर्थ्यात्ताच्छब्द्यमिति भावः । प्रत्याह्रियन्ते = संक्षिप्यन्ते वर्णा यत्रेति बाहुलकादधिकरणे घञ् । 'भावघञन्तादर्श आद्यजि'त्यन्ये । यद्यपि योगोऽकारादिसंज्ञास्वतिप्रसक्तस्तथापि योगरूढिरिति भावः । यत्तु—

> 'एकस्माण्ङ-ञ-ण-व-टा' द्वाभ्यां षश्चिभ्य एव क-ण-माः स्युः ।
>
> ज्ञेयौ च यौ चतुर्भ्यो, रः पञ्चभ्यः, श-लौ षड्भ्यः ॥—

–इति प्रत्याहारा एकचत्वारिंश'दिति । तन्न । सुप्तिङादीनां, रप्रत्याहारस्य, 'चयो द्वितीया' इति चय्प्रत्याहारस्य, 'ञमन्ताड्ड' इति 'ञम्'–

---

१ क. ग. नास्ति ।　　　　२ क. नास्ति ।

३ 'प्रवृत्तिरित्यत आह-आदीति' ग. पाठः ।　　४ क. ग. पाठः ।

प्रत्याहारस्य चाऽधिकस्य व्यवहारदर्शनात्। संख्यानियमस्याऽत्युपयोगाऽभावाच्च। यद्यप्यत्रोपजीव्यत्वादनुनासिकसंज्ञा प्रथमं वक्तुमुचिता, तथापि 'नासिकां = तद्व्यापारमनुजाता'इतियोगेनैव गतार्थत्वात्संज्ञासूत्रमनावश्यकमिति सूचयितुं नेहोपन्यस्तम्। अत एव तत्र सूत्रे मुखग्रहणप्रत्याख्यानभाष्यध्वनितो यमानुस्वारयोरनुनासिकत्वव्यवहारः सङ्गच्छते।

'यरोऽनुनासिक' इत्यादौ स्वरूपग्रहणाऽभावस्तु—'पशु''रपत्य'मित्यादिवद्धविष्यतीति बोध्यम्।

**ऊकालोऽच्।** कुक्कुटरुते उकार एव एकमात्र(त्वं)[1]द्विमात्रत्वादीनां प्रसिद्धेरकारादयो नोक्ताः सूत्रकारेण। 'ऊ' इति एकद्वित्रिमात्राणां क्रमेण प्रश्लेषनिर्देशः, व्याख्यानात्। (अत एवं—)[2] संज्ञासंज्ञिनोः क्रमोऽपि[3], महासंज्ञाकरणात्। (एतेन[4] 'यथासङ्ख्यसूत्रमिहैवोपन्यस्तुं युक्त'मिति परास्तम्)। तेन च स्वोच्चारणकालसदृशो लक्ष्यते। स कालो यस्येति बहुव्रीहिः। 'ह्रस्वदीर्घप्लुत' इति द्वन्द्वः। सौत्रं पुंस्त्वम्। एकवचनं वा। तदेतत्फलितमाह–उश्च ऊश्चेति। ननु 'वां काल'इति विग्रहोऽयुक्तः, व्यधिकरणत्वादिति चेत्सत्यम्। फलितार्थकथनमेतत्। विग्रहस्तु 'वः कालो यस्ये'त्युक्त एव। अत्र जात्याख्यायां 'काल' इत्येकवचनम्। तस्य वैकल्पिकत्वात् 'व'इति बहुवचनम्। 'ह्रस्वदीर्घप्लुत'इति विशिष्टा संज्ञा तु न। प्रयोजनाऽभावात्। संज्ञाकरणस्य लघ्वर्थत्वाच्च। अतएव संज्ञिनोऽपि त्रय इति बोध्यम्।

ननु 'उकालो ह्रस्व' इति प्रथमवाक्येऽण्त्वात्सवर्णग्रहणे द्विमात्रत्रिमात्रयोर्ह्रस्वसंज्ञाऽपि स्यात्। तत्र विधौ यद्यपि न दोषः, 'आपोऽन्यतरस्या'मित्यादिविकल्पविधानेन ह्रस्वविधाने द्विमात्राऽविधानज्ञापनात्। त्रिमात्रस्य 'प्लुतश्च विषये स्मृत' इत्युक्तेर्न विधानम्। तथाऽप्यनुवादे दोषः स्यादिति चेन्न। 'छे चे'त्येव सिद्धौ, 'दीर्घा'दितिसूत्रस्य वैयर्थ्यापत्तेः। नच

१ ग. पाठः। २ क. ग. नास्ति।
३ 'क्रमस्तु' क. ग. पाठः। ४ क. नास्ति।

'पदान्ताद्वे'ति विकल्पार्थं तत् । योगविभागस्य तथापि वैयर्थ्यात् ।

किञ्च 'ऊकालोऽ'जिति, 'अज्रूपो य ऊ'इत्यर्थे वाऽज्ग्रहणवैयर्थ्यापत्तेरूसदृशो योऽजित्यर्थो भविष्यति । सादृश्यस्य च प्रकारान्तरेणाऽसंभवाद्व्याख्यानाच्च कालकृतस्यैव ग्रहणं भविष्यतीत्यधिकं कालग्रहणमुच्चारितकालसदृश[1] कालकस्यैव संज्ञा, न तु तेन गृहीतकालसदृशकालकस्यापीत्यर्थकमतो न दोषः । नच तथापि अजिति[2] वर्णग्रहणे जातिग्रहणस्य दुर्वारत्वात् 'तितउच्छत्र'मित्यत्र परत्वेन 'दीर्घात्पदान्ताद्वे'ति तुग्विकल्पापत्तिः[3] ।

(नच[4] तदभावे नित्यस्तुग्भविष्यतीत्यदोषः । सकृद्गतिन्यायाश्रयणात्, भ्रष्टावसरत्वाच्च तदप्रवृत्तेः-)—इति वाच्यम् । अन्तरङ्गत्वेन ह्रस्वलक्षणस्यैव प्रवृत्तेः ।

किञ्च लोके ह्रस्वत्वादि[5] व्यक्तावेव प्रसिद्धं, न जाताविति महासंज्ञाकरणसामर्थ्यान्न जातिग्रहणम् । अच् किं ? प्रतक्ष्य । मात्रिकत्वेपि 'ह्रस्वस्य पिति[6]'ति तुक् न । उत्तरार्थं चेत्याहुः ।

नाऽत्र श्रुतिकृतमुच्चैस्त्वम् । उपांशुप्रयोगेऽव्याप्तेः । श्रुतिप्रकर्षस्याऽव्यवस्थितत्वाच्च । किन्तु स्थानकृतम् । एवं च 'उच्चै'रित्यधिकरणशक्तिप्रधानम् । अधिकरणत्वं चोच्चारणक्रियां प्रति । तच्च ताल्वादीनां सभागत्वे एवेत्याशयेनाह—ताल्वादीति । अत्र[7] 'कण्ठादौ'ति वक्तुमुचितम् । तद्बीजन्तु तुल्यास्यसूत्रे वक्ष्यामः । प्रयत्नेरितो वायुर्यदोर्ध्वभागे प्रतिहतोऽचं व्यञ्जयति, तदा स उदात्त इति भावः । एवमग्रेऽपि ।

अजिति । 'ऊकाल' इत्यतस्तदनुवृत्तेरिति भावः । वस्तुतस्तु हल्व्यतिरेकेणाऽचामुदात्तत्वादीनामुपलम्भेन,[8] हलां चाऽज्व्यतिरेकेण

---

१ 'उच्चारित( कालसदृश )मात्रकालक' ख. पाठः । २ ग. पाठः ।
३ 'पत्तिरिति वाच्यं' क. पाठः । ४ क. नास्ति । ख. ग. पाठः ।
५ 'ह्रस्वत्वं' ख. पाठः । ६ क. ग. पाठः ।
७ क. ग. पाठः । ८ 'उच्चैस्त्वादीना' ख. पाठः ।

तेषामनुपलम्भेनाऽच्संनिधाने तदुपरागवशादेव हल्षु तत्त्वोपपत्त्या च, हलां साक्षादुदात्तत्वादिकल्पने मानाऽभावात् 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' 'स्वरविधौ व्यञ्जनमविद्यमानव' दित्यनयोः सत्त्वेन हलां तत्त्वेऽपि क्षत्यभावाच्चाऽजनुवृत्तौ फलाऽभावः। मूलेऽजिति तु वस्तुस्वरूपकथनं बोध्यम्। आये इति। आकारो निपातत्वादाद्युदात्तः। यच्छब्दः फिट्स्वरेणाऽन्तोदात्तः। जसः सुप्त्वादनुदात्तत्वम्। 'एकादेश उदात्तेनोदात्त' इत्येकार उदात्तः। अर्वाङिति। अभिमुखवाच्यव्युत्पन्नं प्रातिपदिकमेतत्। तस्य 'फिषोऽन्त उदात्त' इत्यन्तोदात्तत्वे, आद्यस्य शेषनिघातेनाऽनुदात्तत्वम्। 'अर्वन्तमञ्चती'ति विग्रहेऽपि 'गतिकारकोपपदात्कृ'दित्युत्तरपदप्रकृतिस्वरत्वम्। शेषं प्राग्वत्।

एकस्मिन्नचि उदात्तानुदात्तयोर्धर्मिणोर्मेलनविरोधादाह-उदात्तानुदात्तत्वे वर्णधर्माविति। (नच द्वन्द्वे साहित्यस्य प्रकारत्वात्प्रकृतिजन्यबोधप्रकारस्य च भावप्रत्ययार्थत्वाद् द्विवचनमनुपपन्नम्, इष्टार्थाऽलाभश्चेति वाच्यम्। प्रत्येकधर्मयोरपि तत्प्रकारत्वेनाऽक्षतेः। अत एव 'तस्य भाव' इति सूत्रे कैयटेन—'धव-खदिरत्व'मित्यादौ 'जातिसमुदाये भावप्रत्यय' इत्युक्तम्। तत्र तस्य समुदायस्याऽनुद्भूतावयवत्वे एकवचनम्। उद्भूतावायवत्वे तु द्विवचनाद्यपीति बोध्यम्)। यस्मिन्निति। बाहुलकादधिकरणे घञिति भावः। 'अर्श आद्य'जिति तु भाष्ये उक्तम्। नचोदात्तादिव्यवहारस्य लोकवेदयोः प्रसिद्धत्वेन व्यर्थेयं त्रिसूत्रीति वाच्यम्। 'तस्यादित' इति सूत्रभाष्य-कैयटे प्रत्याख्यातत्वेनेष्टापत्तेः।

नन्वर्द्धह्रस्वशब्दस्य किं 'ह्रस्वरूपमर्द्ध'मित्यर्थो विवक्षितः, उत 'अर्द्धं नपुंसक'मित्येकदेशिसमासेन ह्रस्वस्याऽर्द्ध'मिति ?। नाद्यः। ह्रस्वस्वरिताऽसंग्रहापत्तेः। (पूर्वनिपातवैपरीत्यापत्तेश्च)। कर्मधारय-

१ 'उच्चैस्त्वादि' ख. पाठः। २ 'हलां स्वरप्राप्तेरपि' क. ग. पाठः।
३ क. नास्ति। ख. ग. पाठः। ४ क. ग. नास्ति।

योग्यपदानां सूत्रकृता समासाऽकरणाच्च । अन्त्येपि—ह्रस्वशब्देन स्वशास्त्रसङ्केतितस्य ग्रहणे दीर्घस्वरिताऽसंग्रहः । [ अन्त्येपि[1] किं ह्रस्व-शब्देन स्वशास्त्रसङ्केतितस्य ग्रहणम्, उत मात्राकालिकमात्रस्य ? । आद्ये दीर्घस्वरिताऽसंग्रहः]। ह्रस्वशब्दस्य मात्राकालिकेऽचि संकेतितत्वात्[2] । ( अन्त्ये[1]—ह्रस्वशब्दोच्चारणं व्यर्थम् । स्पष्टप्रतिपत्तये 'ऽर्द्धमात्र'मित्यस्यैव वक्तुमुचितत्वात् । तदाह[2])—अतन्त्रमिति । स्वशास्त्रसङ्केतिताऽबोधक-मित्यर्थः । एवं च लोके दीर्घादिष्वपि अर्द्धमात्रैवोदात्ता । तदुक्तं हरिणा—'प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते' इति । 'अनुपात्तमपि मात्रारूपं प्रमाणमेवोपलक्ष्यत इत्यर्थ' इति हेलाराजः । अत्र च प्रमाणं-'तस्य'ग्रहणम् ।

तद्धि दीर्घादिरूप ( सकल[3] ) स्वरितसंग्रहार्थम् । ह्रस्वग्रहणविवक्षायां हि स न स्यात् । नच षष्ठीकल्पनार्थम् । 'आदितः'शब्दस्य संबन्धिशब्दत्वादेव सिद्धेः । नच त्रिपादीस्थस्वरितसंग्रहाय तत् । अस्यापि परिभाषात्वेन कार्यकालपक्षे तत्रोपस्थितेरादितोऽर्द्धमात्रैवोदात्तेति नियमनात् । स्वरितस्यैव तल्लिङ्गत्वाच्च[4] । ( 'समाहारः स्वरित' इत्यनेन कार्यकालपक्षे त्रिपादी-स्थोद्देशेनाऽपि स्वरितसङ्केतबोधनात्सर्वप्रतिपादकसमाहारग्रहणस्यानुवृत्त्या-ऽर्थाधिकाराश्रयणेनात्रापि सर्वोपस्थितेरनायासेन लाभात्[5] )। भाष्ये इत आरभ्य नवसूत्र्या 'अ अ' इत्यतः प्रागुत्कर्षेण, त्रिपाद्या असिद्धत्वस्यैवा-ऽभावाच्च । 'अर्द्धमुदात्त'मितिवृत्तिस्तु 'सत्यभामा' 'भामे'तिवद्व्याख्येया ।

[6]आदितोऽर्द्धमित्यस्य—'मात्राया' इति शेषो वा[6] । उत्तरार्द्धमित्यस्य चाऽर्द्धमात्रातोऽवशिष्ट उत्तरो भाग इत्यर्थो बोध्यः । इदमेवाऽभिप्रेत्य भाष्ये 'अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढः । ततः प्रमाणे मात्रचो लु'गित्युक्तम् । [अत एव 'अर्द्धह्रस्वशब्देनाऽर्द्धमात्रा लक्ष्यते' इति हरदत्तेनोक्तम् । भाष्ये—रूढ इत्यस्य निरूढलक्षणावानित्यर्थ इति तत्तात्पर्यम् ] ।

---

१ क. नास्ति, ख. ग. पाठः । २ 'सङ्केतितत्वादत आह' क. पाठः । ३ क. ग. पाठः । ४ क. ग. पाठः । ५ क. नास्ति । ६ क. नास्ति ।

वेदे तु यथाप्रयोगं बोध्यम् । [वेदे तु[1] 'अर्द्धमेवोदात्तं प्रातिशाख्याल्लक्ष्यानुरोधाच्चे'ति मनोरमायां स्पष्टम् । एवं च वैदिकोदाहरणविषयकाऽस्मिन्सूत्रे ह्रस्वग्रहणमविवक्षितमेव, 'ईयिवांस'मित्यादिप्रयोगादुपेयिवाननित्यादावुपसर्गवत् । 'अर्द्धमुदात्त'मिति वृत्तिरपि यथाश्रुतैव । तत्र लक्ष्यं,-येऽरा इति । अत्र एकारः,'तनूनपाच्छचीपति' मित्यत्र पदपाठे ऊदीतौ चाऽर्द्धोदात्तौ बह्वृचैः पठ्यन्ते । यद्यपि तनूनपा-च्छचीपतिशब्दयो'रुभे वनस्पत्यादिषु' इति पूर्वपदोत्तरपदयोराद्युदात्तत्वे, शेषनिघातेनोदीतावनुदात्तौ प्राप्नुतः, तथापि 'जात्यवद्वा, तथावाऽन्तौ तनूशचीतिपूर्वयो'रितिप्रातिशाख्येन पाक्षिकस्वरितत्वोक्तेर्न[2] दोषः । जात्यः-स्वरितविशेषः । [3]तथा वेत्यस्य— अनुदात्तौ वेत्यर्थः । प्रातिशाख्यमप्यनुपदमेव स्फुटी भविष्यति ।

( [4]गुरवस्तु—अर्द्धशब्दोऽवयववाची । स च कस्याञ्चिच्छाखायां समांशः, कस्याञ्चिदर्द्धमात्रेति प्रातिशाख्यानुरोधेन वेदे, लोके च भाष्यप्रामाण्येनार्द्धमात्रैवेति व्यवस्था बोध्या । एतेन 'सभं स्यादश्रुतत्वा'दितिन्यायेन सिद्धेऽर्द्धग्रहणमपि व्यर्थ'मित्यपास्तम् । एवं च ह्रस्वग्रहणमतन्त्रमिति मूलं यथाश्रुतमेवेत्याहुः ) ।

तस्य चेति । अनुदात्तस्येत्यर्थः । उदात्तेति । उदात्त-स्वरितयोः परत्वे सतीत्यर्थः । तयोः परत्वं चोपस्थिताऽनुदात्ताऽपेक्षयैव ।

अन्यत्रेति । उदात्त-स्वरितपरत्वाऽभावे इत्यर्थः । प्रातिशाख्ये इति । लोके त्वनुदात्त एवेति भावः । प्रातिशाख्यन्तु[5] मनोरमायां द्रष्टव्यम् ।

[ [6]केचित्तु—वैदिकशिक्षयैव लोकेऽपि स्वरितविभागज्ञानसिद्धिमाश्रित्याऽस्य सूत्रस्य भाष्ये प्रत्याख्यानात्, लोकेपि तादृशस्थले उदात्तश्रुतिरेव । नचैवं 'प्रातिशाख्य' मिति समाख्या विरोधः ।

---

१ क. पाठः ।
२ क. कुण्डलितः ख. पाठोऽयम् ।
३ क. ग. पाठः ।
४ क. ग. नास्ति ।
५ क. ग. पाठः ।
६ अयं ग्रन्थः क. ग. नास्ति ।

'एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः।
तस्योदात्ततरोदात्तादर्द्धमात्राऽर्द्धमेव वा॥
अनुदात्तः परः शेषः, स उदात्तश्रुतिर्न चेत्।
उदात्तं वोच्यते किञ्चित्स्वरितं वाऽक्षरं परम्॥'

(-इति ऋग्वेदप्रातिशाख्यस्य ऋग्वेदे स्वरितपर-ह्रस्वस्वरितस्याऽभावेन तत्र प्रतिषेधस्य वैयर्थ्याऽऽपत्त्याऽन्यविषयताया आवश्यकत्वात्)।

तदर्थस्तु—'पूर्वयोः = उदात्तानुदात्तयोः। उदात्तात्। स्वतन्त्रोदात्तात्। उदात्ततराऽर्द्धमात्रेति—'क्व वोऽश्वा' इत्यादि ह्रस्वाऽभिप्रायम्। अर्द्धमेव वेति—दीर्घाद्यभिप्रायम्। 'व्यापकत्वादिदमेवाऽऽदर्त्तव्य'मिति-सूचयितुमेवकारः। ह्रस्वस्याऽप्यनेन संग्रहात्[2]। तच्छाखायां दीर्घादिष्वपि समांऽशोदात्तकस्वरितस्यैव पाठाच्च। एतेनैतौ पक्षौ वैकल्पिकावित्यपास्तम्।

'वा'शब्दस्तु पादपूरणाय। 'अनुदात्त'इत्यादि परिशेषसिद्धार्थकथनम्। स शेष उदात्तश्रुतिः स्यात्। किमविशेषेण ?। नेत्याह—**न चेदित्यादि**। उदात्तस्वरितपरं विहायेत्यर्थ' इत्याहुः।

ह्रस्वस्वरितमुदाहरति—क्वेति। 'किमो'ऽदित्यत्। 'क्वाऽती'ति क्वादेशे 'तित्स्वरित'मिति स्वरितः। दीर्घं तमुदाहरति-रथानामिति। **ये रा इति**। 'स्वरितो वाऽनुदात्ते पदादा'वित्येकारः स्वरितः। (न च[3] त्रैपादिकत्वेनाऽसिद्धत्वम्। उक्तोत्तरत्वात्)। 'नोदात्तस्वरितोदय'मिति निषेधस्तु 'उदात्तादनुदात्तस्य स्वरित' इत्यस्यैव। 'अनन्तरस्ये'ति न्यायात्। स्वरितपरमुदाहरति-शतचक्रमिति। (अर्हे व्याप्ता'वित्यस्मात्कर्मणि ण्यति,तित्त्वात्स्वरिते, संज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभावः)। [अर्हौ[4] साधुरिति यति, तित्स्वरेणाऽन्तस्वरितः[5]। यद्वा—अहेरित्यर्थे—ह्यः। वृत्रस्येत्यर्थः। 'छन्दसि वावचनं

---

१ क. ग. नास्ति। २ 'संग्रहणात्' ख. पाठः।
३ खः पाठः। ग.क. नास्ति। ४ क. ग. पाठः। ५ 'अन्तस्वरितो वा' ग.।

प्राङ् णौ चङ्युपधाया'इति वचनाद्गुणाऽभावः। 'उदात्तस्वरितयोर्यण' इति स्वरितः। 'उदात्तयणो हल्पूर्वात्'–इति तु न, छान्दसत्वात्–(–इत्यन्ये)।] 'य'च्छब्दः फिट्स्वरेणाऽन्तोदात्तः। तदेकादेशश्च वा स्वरितः। स इति। उदात्तादि–ह्रस्वादि–संज्ञक इत्यर्थः।

(¹नवविधोऽपीऽत्युपलक्षणम्। तेन एच् ऌकारादेरपि संग्रहः)।

मुख। उच्यतेऽसौ वचनः। बाहुलकात्कर्मणि ल्युट्। (मुखेनासिकेति)–(मुखसंहितया नासिकयेति) मध्यमपदलोपी समासः। द्वन्द्वे हि प्राण्यङ्गत्वादेकवद्भावे, ह्रस्वत्वे, 'मुखनासिक'मिति स्यात्। 'मुखनासिकया वचन' इति 'साधनं कृते'ति समासः। अधिकरणस्याऽपि 'स्थाल्या पच्यते' इतिवत्करणत्वम्।

वस्तुतस्तु—स्थानशब्दोऽपि करणव्युत्पत्त्या करणविशेषे योगरूढः। कण्ठादीनामपि करणत्वमेव। (अधिकरणत्वन्त्वयुक्तम्। आकाशस्यैव तदधिकरणत्वात्)। अत एव तुल्यास्यसूत्रे भाष्ये'ऽस्यन्त्यनेन वर्णानित्यास्य'मिति करणे व्युत्पत्तिर्दर्शितेति मतान्तरं भाष्यप्रदीपोद्द्योते निरूपितम्। तदभिप्रेत्याऽऽह—मुखसहितेत्यादि। मुखेति किम्?। यमानुस्वाराणामेव' प्रसज्येत। ततश्चाऽऽङोऽनुनासिक' इत्यत्राऽनुस्वारः स्यात्। 'अनुनासिकस्य क्वी'त्यादावप्रतिपत्तिरेव स्यात्।

[ वस्तुतस्तेषु 'ञमः क्वी'त्येव पठितुं शक्यम्। 'यरोऽनुनासिके' इत्यत्र त्वप्रतिपत्तिः। तत्र 'कमलँ ॐ पठसी'त्याद्यसिद्ध्या 'यरो ञमि ञम् वे'त्यस्य पठितुमशक्यत्वात्। भाष्ये तु प्रासादवासि-

---

१ ग. पाठः। २ ख. ग. पाठः। ३ क. पाठः।

४ 'एकवत्त्वे, ह्रस्वत्वे' क. पाठः। ५ 'यद्वा' ख. पाठः।

६ क. पुस्तके अयं नास्ति ग्रन्थः। किन्तु अस्य स्थाने–'तुल्यास्यसूत्रे भाष्येऽस्यन्त्यनेन वर्णानित्यास्यमिति करणव्युत्पत्तिरप्येवम्। तदेतदभिप्रेत्याह——इति पाठः। ७ ग. पाठः। ८ [] एतदन्तर्गतः क. ग. पाठः।

न्यायेनोभयस्थानानामपि ञादीनां संज्ञासिद्धिमाश्रित्य, यमाऽनुस्वाराणां चाऽनुनासिकत्वे दोष-प्रयोजनयोरभावेन मुखग्रहणाऽभावेऽप्यदोष इति—तत्प्रत्याख्यातम् । न च मुखग्रहणसत्त्वेऽनुस्वारस्य केवलनासिकास्थानत्वेनाऽनुनासिकत्वाऽभावे 'हरिं नमती'त्यादावनुस्वारस्य ययीत्यादिपरसवर्णस्याऽसिद्धत्वेन 'यरोऽनुनासिक' इति पक्षे ञमङणनाः पर्यायेण स्युः । मुखग्रहणाऽसत्त्वे तु तस्याऽनुनासिकत्वे आन्तरतम्यादनुस्वार एवाऽनुनासिको भवतीति दोष इति वाच्यम् । अयोगवाहानां शर्षु पाठस्य 'नुमविसर्जनीये'तिसूत्रस्थविसर्जनीयग्रहणेनाऽनित्यतया, तत्र 'यरोऽनुनासिक'इत्यस्याऽप्रवृत्त्याऽदोषात् । ( अतएव भाष्ये 'यमानुस्वाराणामनुनासिकत्वे नैव दोषो, न प्रयोजन'मित्युक्तम् ) ।

नासिकेति किम् ? । 'शक्ते'त्यादौ 'अनुदात्तोपदेशे'त्यादिना कलोपो मा भूत् । अष्टादशेति । यद्यपीदं न जातिपक्षे, तस्या एकत्वात् । व्यक्तिपक्षेऽपि न । व्यक्तीनामानन्त्यात् । तथापि गुणभेदभिन्नानां, लोक-वेदयोः प्रयुज्यमानानां,शास्त्रीयकार्योपयोगिनां तत्तद्व्याप्यधर्मवतामष्टादशत्वमेवेति भावः । एवमग्रेऽपि बोध्यम् ।

ऌवर्णस्येति । विवृतस्येत्यर्थः । तेन 'ऌति ऌ वे'ति विधेयस्य तुल्यास्यसूत्रे भाष्ये दीर्घत्वकथनेऽपि न क्षतिः । तस्येषत्स्पृष्टत्वादिति बोध्यम् ।

दीर्घाऽभावादिति । अत्र च मानं 'तुल्यास्ये'ति भाष्ये 'ऌति सवर्णे' इत्यनेन पक्षे द्विऌकाराऽभावे'ऽकः सवर्णे' इति दीर्घत्वे, 'होतॄकार' इति ऋकारघटितप्रयोगकरणमिति बोध्यम् । (प्रथमयोः पूर्वसवर्णः' इति सूत्रस्थं सवर्णग्रहणमुक्ताऽर्थे ज्ञापकमपि वक्ष्यते) ।

ह्रस्वाऽभावादिति । इदं च 'एओङ्' सूत्रे, 'एच इ'गिति सूत्रे च भाष्ये स्पष्टम् । एतेन गानरोदनादौ चतुर्मात्रादीनामप्युलम्भे,

१ ग. पाठः । २ 'तद्व्याप्यधर्मवतां'इति ग. पाठः । ख. तु नास्ति । ३ 'इतिबोध्यं'इति क. नास्ति । ४ 'इति द्विऌकाराऽभावे' ख. पाठः । ५ क. नास्ति ।

दीर्घऌकारस्याऽऽगमशास्त्रे मातृकान्यासे उपलम्भे, राणायनीयशाखायां 'सुजाते एश्वसूनृते', अध्वर्योओद्रिभिःसुत' मित्यादौ मान्त्रिकैचामुपलम्भेऽपि न दोषः। लोके प्रयोगेष्वप्रयुज्यमानत्वाच्छास्त्रीयकार्योपयोगित्वाऽभावाच्च। (प्रक्रियादशायां तत्सत्त्वे मानाऽभावाच्च)। एतेना'ऽनुदात्ततरस्याऽऽधिक्यं दुर्वार'मित्यपास्तम्। (इदम'प्युदात्तादिस्वराणामविभागेनाऽवस्थानमेकश्रुति'रिति पक्षे बोध्यम्। यदा त्वेकश्रुतिः स्वरान्तरं, तदेदमुपलक्षणं बोध्यं, तस्या लोकेऽपि सत्त्वात्)।

तुल्यास्य। तुल्यौ आस्यप्रयत्नौ यस्येत्यर्थः। आस्ये भवमास्यम्। 'शरीरावयवाद्यत्'। तच्च वर्णोपयोगित्वात्स्थानमेव। प्रयत्नस्य पृथगुपादानाच्च। न तु मुख्यमास्यम्-ओष्ठावधिकाकलकपर्यन्तम्। 'आस्य'पदोपादान-' वैयर्थ्यापत्तेः। प्रकृष्टो यत्नः—प्रयत्नः। प्रकर्षश्च-वर्णोत्पत्त्यवहितप्राग्भावित्वरूपः। (द्वन्द्वगर्भबहुव्रीह्याश्रयणाच्च प्रत्येकसाम्यमादाय न सवर्णत्वम्। अत एवा'ऽकःसवर्णे' इति सूत्रे सवर्णग्रहणमिकोऽसवर्ण इति सूत्रं च चरितार्थम्)। जनकत्वं षष्ठ्यर्थः। वर्णानां स्वरूपतो भेदाय कण्ठादिष्वप्यवान्तरस्थानभेदस्याऽऽवश्यकत्वेन, भेदघटिततुल्यत्वस्य न क्षतिः।

(यद्वा-ताल्वादिशब्देन तत्सम्बद्धा वायुसंयोगा गृह्यन्ते)।

एतेन 'द्वौ तुल्यशब्दौ तन्त्रेणाऽत्र निर्दिष्टौ। तत्र एकः सदृशवाची। अपरो लक्षणया सङ्ख्यावाची। तत्र चाऽऽस्ये सादृश्याऽयोगात्, प्रयत्ने चैकत्वाऽयोगात्सम्भवाऽनुरोधेन—'एकस्थानं, सदृशप्रयत्नं च सवर्ण'मित्यर्थ इति परास्तम्। तन्त्राऽऽश्रयणे, लक्षणायां मानाऽभावाच्च। तदेतदाह-ताल्वादीति।

'आस्य'शब्दस्य तद्धितान्तत्वप्रकटीकरणायैवमुक्तम्। न तु 'कण्ठादौ'ति।

---

१ 'इत्यादावर्द्धमात्रिकैचां' ख. पाठः। २ क. नास्ति।

३ 'एतेनैकश्रुत्यनुदात्ततरादीनां' ख. पाठः। ४ क. ग. पाठः।

५ क. ग. नास्ति।

तथा सति 'कण्ठ आदिरवयवो यस्ये'ति व्युत्पत्त्या प्राथमकल्पिकाऽऽस्य-प्रतीतिरपि स्यात् । एतेन 'वर्णसमाम्नाये, मातृकान्यासादौ चाऽकारस्य प्राथम्येन, स्थानप्रयत्नविवेके कण्ठस्थानस्यैव प्रथमत उक्तत्वेन च, 'कण्ठादो'त्येव वक्तुमुचित'मित्यपास्तम् । ( शिक्षायां कण्ठादीनां तत्त्वेनैव स्थानत्वोक्त्या तद्रूपेणैवास्यभवशब्देन ग्रहणमिति तद्भागभेदमादाय नोदात्तादिषु सावर्ण्यभङ्ग इति बोध्यम् ) । आभ्यन्तरेति । 'प्र'शब्दबलाल्लब्धम् ।

प्रकर्षश्च वर्णोत्पत्ति ( अव्यवहित )-प्राग्भावित्वरूपो लक्ष्यते । 'यस्य एतद्द्वयं येन यदोयेन एतद्द्वयेन तुल्य'मित्यर्थः । 'यजुष्येकेषा'मित्यादि-निर्देशाद्यावदास्यभवतुल्यत्वमेव गृह्यते । (जनकत्वं च-'यजुष्येकेषा'मित्यादिनिर्देशात्पर्याप्तमेव गृह्यते ) । अत एव ईप्रत्ययान्तवातप्रमीशब्दस्य 'वातप्रम्ये'इत्यादावेकारादीकारयोर्न सावर्ण्यमिति न दीर्घः । 'कण्ठ-तास्वि'त्यादिसमासनिर्देशेन प्रत्येकं जनकतापर्याप्त्यभावात् । अत एव ऐकारौकारयोः सावर्ण्यमाशङ्क्य, 'नैचौ तुल्यस्थाना'विति समाहितं 'तुल्यास्य'सूत्रे भाष्ये । अत एव व-लयोर्न सावर्ण्यम् । तेन'तद्वस्तु' इत्यादौ 'तोर्लि'ति परसवर्णो न । ( व-लयोः सावर्ण्ये हि तद्वुर्वारमेव स्यात् । वल्-रलिति भेदेन व्यवहाराच्च ) । [ अत एव 'तद्वानासा'मिति सूत्र-प्रयोगः संगच्छते । 'एकारौकारयोः केवलताल्व्यत्वम्, केवलौष्ठ्यत्व'-मिति 'एच इ'गिति सूत्रभाष्यध्वनितमतान्तरे इकारोकारयोरेकारौकाराभ्यां सावर्ण्येपि, मधुवब्ध्वोर्यजुष्येकषामित्यादिनिर्देशैर्न तत्प्रयुक्तकार्यप्रवृत्तिः ।

नच यावदास्यभवतुल्यत्वविवक्षणे 'प्रयत्न'ग्रहणं व्यर्थं, प्रयत्नस्यापि आस्यभवत्वादिति वाच्यं । ह्रस्वदीर्घयोः सावर्ण्याऽनापत्तेः । तयोर्जनकवायु-संयोगानामास्यभवानामतुल्यत्वात् । तस्मादास्यभवशब्देन कण्ठादीना-मेव ग्रहणमिति बोधनाय तत्सार्थक्यम् । 'किं पुनरास्ये भवं ? । स्थानं, करणं

१ ख. ग. नास्ति । क. पाठः । २ अयं क्वचित्पाठः । ३ क. ग. पाठः । ४ ख. पाठः । ५ ग. पाठः । ६ क. ग. पाठः ।

चे'तिभाष्ये करणशब्देन वायुसंयोगाद्येव प्रयत्नपदसार्थक्याय दर्शित-मित्याहुः ]। ( व्याख्यानाच्च[2] कण्ठादिस्थानस्यैव ग्रहणमित्याहुः )।

[ अत[3] एव 'ल'णिति सूत्रं चरितार्थम्। न चे'कोयणची'त्यादावुभय-ग्रहणाय, प्रत्याहारे ग्रहणाय च तदिति वाच्यम्। 'हयवरल'डित्येव-पठितुं युक्तत्वात्। पृथक् सूत्रकरणम्—अटि लकाराऽग्रहणार्थम्। वलयोः सावर्ण्ये हि तद् दुर्वारमेव स्यात्। 'वॅल्''र'लिति भेदेन व्यव-हाराच्च। 'उदोष्ठ्यपूर्वस्य' 'लुग्वा दुहदिहलिहगुहामात्मने पदे दन्त्ये' इत्यादौ तादृश्या एव जनकताया ग्रहणे मानाऽभावात्। व्याप्तिन्यायेन, बहुलक्ष्यसंस्काराऽनुरोधेन च सर्वस्यापि ग्रहणमिति प्राञ्चः।

केचित्तु प्रत्येकं स्थानत्वेऽपि न क्षतिः। 'मधुबभ्रोः—''यजुष्ये-केषा'मित्यादिनिर्देशैर्वल्-रलितिभेदेन निर्देशेन च सावर्ण्याऽनित्यत्व-ज्ञापनात्। अतएव एकार[4]-ओकारयोः केवलताल्व्यत्वं, केवलौष्ठ्यत्वमि'त्येच इ'गितिसूत्रभाष्यध्वनितमतान्तरे इकारोकारयोरेकारौकाराभ्यां न सावर्ण्यमित्याहुः ]।

आस्येति किम्?। 'तप्तां'। 'झरो झरी'ति लोपो मा भूत्। प्रयत्नेति किम्?। 'वाक् श्चोतति'। प्रेति किम्?। श-चयोः श्वासाऽघोष-विवारा-ख्यबाह्यप्रयत्नसाम्येन तत्रैव दोषात्। ( नच तद्धितान्ताऽऽस्यपदोपादा-नादेव स्थानप्रयत्नोभयसाम्यलाभे किं 'प्रयत्न'ग्रहणेनेति वाच्यम्। अन्यतरसाम्येऽपि संज्ञाप्रवृत्तिप्रसङ्गात्। सति तु तस्मिंस्तदुपादान-सामर्थ्येन धर्मद्वयकृतसाम्यविवक्षणान्न दोषः )। ( अत[6] एवाऽकः सवर्ण इति सवर्णग्रहणं चरितार्थम् )।

कस्य किं स्थानमित्याशङ्कायामाह—अकुहेति। यद्यपि सर्ववर्णो-च्चारणे कण्ठव्यापार आवश्यकस्तथापि चवर्गाद्युच्चारणे तात्वादि-

---

१ क. ग. पाठः। २ ग. पाठः। ३ क. ग. पाठस्थाने ख. पाठः।
४ ग. पाठः। ५ क. नास्ति। ६ ग. पाठः।

व्यापारोऽपि तथा। अकारादीनामुच्चारणे तु नेति भावः। नचैवं क—चयोरपि सावर्ण्यापत्तिः। भिन्नस्थानकथनवैयर्थ्यापत्तेः।

ननु 'कण्ठ्यावहौ' 'जिह्वामूले तु कुः प्रोक्त'इति शिक्षोक्तेः कुग्रहणमसङ्गतमिति चेन्न। (अत्रत्यकण्ठपदस्य कण्ठस्थान-तत्समीपजिह्वामूलस्थानोभयपरत्वात्। जिह्वामूलीयव्यवहारातिप्रसङ्गवारणाय परं तस्य रूढिः कल्प्येति बोध्यम्)। रूढिकल्पने मानं च हयवरट्सूत्रस्थभाष्ये अयोगवाहेषु जिह्वामूलीयगणनम्।[1] [वृत्त्यादिप्रामाण्येन[2] शिक्षास्थजिह्वामूलपदस्य लक्षणया स्वसमीपदेश कण्ठ—बोधकत्वात्। ध्वनितं चेदं 'हयवरट्' सूत्रे भाष्ये। अतएव जिह्वामूलीयव्यवहाराऽतिप्रसङ्गवारणाय तस्य रूढिकल्पना नेति लाघवम्]। अत्र वाक्ये 'ह्'पदेन पञ्चमाऽन्तस्थाऽसंयुक्त-हकारस्यैव ग्रहणम्।

'हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम्।
उरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम्' ॥—

—इति शिक्षास्वरसात्। नचाऽनेन कादीनां कण्ठस्थानत्वे बोधिते, तुल्यस्थात्वात्सवर्णपदवाच्यत्वग्रहे[3] 'कु'शब्दस्य तद्ग्राहकत्वमणुदित्सूत्रेण बोधनीयमिति कथमत्र वाक्ये 'कु'शब्देन पञ्चानामुपस्थितिरिति वाच्यम्। तत्तद्वर्णोत्पत्तेः प्राक् तत्तत्स्थानादौ जिह्वास्पर्शाद्यनुभवेन तत्तत्स्थानत्वनिर्णयस्य जातत्वेनाऽक्षतेः। 'अकुहे'त्यादिकथनन्तु साधारणधर्मबोधनायेत्याहुः।

(विसर्जनीयपदेन[4] च साहचर्यादकाराश्रयविसर्गस्यैव ग्रहणम्। अत एव'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः'इति शिक्षया न विरोधः।)

दन्ता इति। 'दन्त'शब्देन तत्संयुक्तदेशो लक्ष्यते। अतो भग्नदन्तस्याप्युच्चारणं भवत्येव। 'उश्च पश्च ध्यायेतेऽनेन, तत्र भव'इति योगेनोपध्मानीयस्यौष्ठ्यत्वमित्याह—उपूपेति। नचो-पयोरप्यनेन शब्देन

---

१ क. ग. पाठः। २ ख. पाठः—क. ग. पाठस्थाने।
३ 'शक्तिग्रहे' ख. पाठः। ४ क. ग. पाठः।

व्यवहारप्रसङ्गः[1] । ( जिह्वामूलीयपदवदस्यापि योगरूढत्वात् ) ।

'एदैतो'रित्यादौ तपरत्वमसन्देहार्थमेव, न त्वेतावता तत्कालस्यैव ग्रहणमिति भ्रमितव्यम् । शिक्षोक्ताऽर्थोऽनुवादकेऽस्मिन्नाधुनिकस्य वाक्ये तपरशास्त्राऽप्रवृत्तेः । तेन प्लुतस्याऽपि तत्स्थानत्वाऽनुभवो नाऽनुपपन्न इति बोध्यम् । तथा च **पाणिनीयशिक्षा**—

'कण्ठ्यावहाविचुयशास्तालव्यावोष्ठजावुपू ।
स्युर्मूर्द्धन्या ऋटुरषा, दन्त्या लृतुलसाः स्मृताः ॥
जिह्वामूले तु कुः प्रोक्तो, दन्त्योष्ठ्यो वः स्मृतो बुधैः ।
एऐ तु कण्ठतालव्यावोऔ कण्ठोष्ठजौ स्मृतौ' ॥ इति ।
[ अष्टौ स्थानानि[2] वर्णानामुरः, कण्ठः, शिरस्तथा ।
जिह्वामूलं च, दन्ताश्च, नासिकोष्ठौ च, तालु च ] ॥

[ नचा 'ऽयोगवाहा[3] विज्ञेया आश्रयस्थानभागिन' इति शिक्षोक्ते- 'र्जिह्वामूलीयस्य जिह्वामूल'मिति, 'विसर्जनीयस्य कण्ठं स्थान'मिति चाऽसङ्गतम् । अत एवोपध्मानीयस्योष्ठ्यत्वं, पकाराश्रयत्वात् । एतेन 'विसर्जनीयस्योरःस्थान'मित्यपास्तमिति वाच्यम् । 'तत्र भव' इत्यधिकारीय'जिह्वामूलाङ्गुलेश्छ'इतिसूत्रविहित—छप्रत्ययान्त जिह्वामूलीयशब्देन भाष्यादौ व्यवहारदर्शनेन तत्स्थानत्वनिर्णयात् । शिक्षा तु-आश्रयस्थानतत्समीपस्थानोभयपरतया व्याख्येया । तत्र यथाऽनुभवमभियुक्तोक्त्या व्यवस्था । अत एव—

'अष्टौ स्थानानि वर्णानामुरः, कण्ठः, शिरस्तथा ।
जिह्वामूलं च, दन्ताश्च, नासिकोष्ठौ च तालु च' ॥

—इत्यत्र शिक्षायां जिह्वामूलस्य स्थानमध्ये गणनं सङ्गच्छते । 'अकुहे'त्यत्र विसर्जनीयस्य साहचर्येणाऽकाराश्रयस्यैव ग्रहणान्न दोषः ।

---

१ 'व्यवहारप्रसङ्गः । तथा सत्योष्ठीया इत्येव व्यवहरेयुः' ख. पाठः ।
२ क. पाठः । ख. ग. नास्ति । ३. [] एतदन्तर्गतः पाठः क. नास्ति ।

नच[1] दन्तोष्ठादीनामन्येषां सत्त्वेनाऽष्टाविति शिक्षाऽसङ्गता । नियमस्याऽसङ्कीर्णस्थानपरत्वात् । तेषां सङ्कीर्णत्वं सभागत्वाद्यभिप्रायं, स्थानद्वयनिबन्धनं चेति यावद्बाधं साधु ]।

(यत्तु[3] 'वादीनां दन्तोष्ठादि समुदितं स्थानं, न तु प्रत्येक'मिति । तन्न । शिक्षायां 'दन्त्योष्ठ्यं' 'कण्ठ्यतालव्या'वित्यादौ 'तत्र भव' इत्यधिकारविहितयतः प्रत्येकमनुत्पत्त्यापत्तेः । 'दन्तोष्ठ्य'मित्यादि त्वसङ्गतमेव । शरीराऽवयवसमुदायस्य शरीराऽवयवत्वाऽभावात् । स्वाङ्गसमुदायस्य स्वाङ्गत्वाऽभाववत् । स्वजनकवायुसंयोगावच्छेदके कण्ठादौ स्वाधारत्वमारोप्य 'शरीरे मे वेदने' तिवत्कण्ठे भव इत्याद्युपपत्तिरिति यावद्बाधं साधु । )

नासिका चेति । चेन स्व-स्ववर्गानुकूलं तात्वादि समुच्चीयते ।

यत्तु 'अनुस्वारयमानां च नासिका स्थानमिष्यते'इति शिक्षोक्तेरेषां नासिका करणम् । किञ्च स्थानत्वे क-ङयोः सावर्ण्याऽनापत्तिः । यावत्स्थानैक्याऽभावा'दिति । तन्न । कण्ठादीनामपि करणत्वस्यैव 'अस्य[4]न्त्यनेन वर्णानित्यास्य' मिति—उक्तभाष्यात्प्रतीतेः । ( प्रासादवासिन्यायोऽपि—यथा तत्रोभयवासिनोऽन्यतरवासिशब्देन ग्रहणं, तथाऽत्रोभयजन्यस्यान्यतरजन्यशब्देन ग्रहणमिति सूपपाद एव ) । नचैवं कस्यचित्स्थानत्वेन, कस्यचित्करणत्वेन व्यवहारे बीजाऽभावः । वर्णाऽभिव्यक्तिजनकवायुसंयोगाऽनुयोगि-तद्वर्णाश्रयाऽऽकाशावच्छेदकताल्वादेर्योगरूढ्या स्थानत्वव्यवहारात् । ( त[5]स्य व्यापारवदसाधारणकारणत्वात् । तत्सम्बन्धजनकप्रयत्नविशेषादौ स्पृष्टत्वाद्याख्ये करणत्वव्यवहारस्तु गौणः । एवमाकाशनिष्ठाधारत्वस्यावच्छेदके आरोपेण, वायुसंयोगनिष्ठाऽऽधेयत्वस्य वर्णे आरोपेण वा,

---

१ क नास्ति । ख. ग. वर्तते ।　२ 'सङ्कीर्णत्वं यथा तथोक्तं' ग. पाठः ।

३ क, ग. पाठः । ख. नास्ति ।　४ क. ग. पाठः ।

५ क. ग. नास्ति ।

(कण्ठे भवः कण्ठ्य इत्यादौ) स्थानभूतदेशानामाधारसप्तम्या निर्देशः।

अत एव 'तत्र भव'इत्यधिकारविहित-यदन्तेन'नासिक्यो वर्ण'[1] इत्यादि-व्यवहारः। (तत्सह[2]कारि-जिह्वाग्रादेः करणत्वेन व्यवहारात्। तत्तत्स्थाने जिह्वाग्रादिसम्बन्धेन वर्णोत्पत्तेः। तत्सम्बन्धजनकप्रयत्नविशेषे स्पृष्टत्वा-द्याख्ये च करणत्वव्यवहारः) ।वर्णाभिव्यक्त्यनन्तरभावो,सावर्ण्योऽनुपयुक्त, आन्तरतम्यपरीक्षोपयुक्तश्च [3]कण्ठविवरादिनिष्ठविकासादेरास्यबहिर्देशाव-च्छिन्नकार्यस्य जनको (तद्वर्णनिष्ठधर्मविशेषजनक, आस्यबहिर्देशावच्छिन्न-वायुसंयोगजनको) यत्नो, 'गुण'शब्देनोच्यते। अत एवाऽकारादिनिष्ठानु-नासिक्यं वृद्धिसंज्ञासूत्रशेषभाष्ये 'भेदकत्वाद्गुणस्ये'त्यादिग्रन्थे गुणत्वेन व्यवहृतम्। कण्ठादिदेशावच्छिन्नवायुसंयोगेनोत्पन्ने[4]षु तेषु नासावच्छिन्न-वायुसंयोगेन तद्रूपधर्मस्योत्पत्तेः। अत एव 'साऽनुनासिकाऽकारा-दीनां नासिका स्थान'मिति नोक्तं मूलकृता। 'एकोऽयमात्मा उदकं नाम, तस्य गुणभेदादन्यत्वं भवति,—अन्यदिदं शीतम्, अन्यदिदमुष्ण' मिति तद्दृष्टान्तवर्णनपरभाष्य-कैयटाभ्यां तथैव प्रतीतेः। (अत्र[5] आत्मशब्दो द्रव्य-पर्यायः।) अत एव गुणानामभेदकत्वपक्षे निरनुनासिकैः सानुनासिकानां ग्रहणं सिद्ध्यति। स्वरूपस्यैकत्वात्। तेषां नासिकास्थानत्वे तूत्पादकसामग्री-भेदात्स्वरूपभेदस्याऽप्यापत्तौ, अग्रहणं तदवस्थमेव स्यात्। नच तत्र भगवतो-दात्तत्वादीनामपि गुणव्यवहारः कृतः, सोऽसङ्गतः स्यात्, तेषां वर्णोत्पत्ति-प्राग्भावित्वात्, आस्यान्तर्गतत्वाच्चेति वाच्यम्। सावर्ण्योऽनुपयुक्तत्वा-ऽऽन्तरतम्यपरीक्षोपयोगित्वकृतसादृश्यमात्रेण तत्त्वव्यवहारात्।

नासिका त्वास्यबहिर्भूतैव। 'मुखनासिके'तिसूत्रे ([6]मुखं च नासिका चेति), 'मुखद्वितीया नासिके'ति ([7]च) भाष्ये विग्रहप्रदर्शनात्। (नह्यवयवा-

---

१ क्वाचत्कः पाठः। २ ख. नास्ति। ३ ख. पाठः। क. ग. नास्ति।
४ 'अभिव्यक्तेषु' ख. पा.। ५ क. ग. पाठः।
६ ग. नास्ति। ७ अयं पाठः क. नास्ति।

ऽवयवविषये 'देवदत्तसहितो हस्त' इति प्रयोगः सचेतसाम् )। 'सहस्तो देवदत्त' इत्यादौ तु विद्यमानवाची 'सह'शब्दः। अत एव 'मुखवचनोऽनुनासिक' इतीयत्युच्यमाने क-च-ट-त-पानामेव प्रसज्येते'ति भाष्ये एवकारः सङ्गच्छते। आस्याऽन्तर्गतत्वे तु यमादीनां, ङादीनां च मुखवचनत्वात्तदसङ्गतिः स्पष्टैव। मम तु न दोषः। ङादीनां 'सर्वं वाक्यं सावधारण'मिति न्यायेन मुखमात्रवचनत्वाऽभावात्। प्रासादवासिन्याय-[स्योऽप्यत्राप्यज्ञानाच्च। तन्न्याय–]–प्रदर्शकभाष्येणाऽपि नासिकाया आस्याऽनन्तर्गतत्वबोधनाच्च।

नन्वेवं सति 'यदि लौकिकमास्यं, किमास्योपादाने प्रयोजन'मिति भाष्यं, 'तत्र तुल्यावास्यप्रयत्नमात्रौ यस्य जनकावित्यर्थबोधनेन नासिका-स्थान-ञङादिनिवृत्त्यर्थमास्यग्रहणं स्या'दिति शङ्कां मनसि निधाय, नासिकाऽपि न बाह्या वर्णोत्पत्तिनिमित्तं, किं तर्हि, आस्याऽन्तश्चर्म विततमस्ति, तत्सम्बद्धा रेखा नासिका, तस्यां वाय्वभिघाताद्वर्णोत्पत्ति'रिति कैयटश्च विरुध्येत। 'मुखनासिके'तिसूत्रस्थमुखग्रहणं मुखाऽवयवपरम्। गोबलीवर्दन्यायेन च नासाऽतिरिक्तस्वावयवपरं तत्। एवकारश्चाऽप्यर्थे। प्रासादवासिदृष्टान्तोऽप्यंशेन कथञ्चिदुपपाद्य इति न तद्विरोधोऽपीति चेन्न। अवधारणगर्भसमासे ह्रस्वाऽकारादीनां सावर्ण्याऽनापत्तेः। तज्जनकवायुसंयोगानामपि तुल्यत्वात्। नचाऽऽस्यपदं तल्लाक्षणिकम्। 'यदि लौकिक'मित्युपक्रमविरोधात्।[2] अवधारणाऽगर्भसमासे तु नासिकाव्यावृत्तिरपि दुरुपपादैवेति भाष्याशयात्। 'मुखनासिके'ति सूत्रे, तद्भाष्यादौ च[1] न लक्षणेत्यपरमनुकूलम्। कैयटस्तु चिन्त्य एव। ञादीनां तु नासिका स्थानमेव। उभयावच्छेदेन वायुसंयोगोत्तरमेव स्वरूपोत्पत्त्या विनिगमनाविरहादुभयोरपि स्थानत्वात्। [ आस्यैर्[3]बहिर्भूतत्वाच्च न कङयोः

---

१ क. नास्ति।　　२ 'लौकिकमिति वाक्यशेषविरोधात्' ख. पाठः।

३ क. ग. नास्ति।

सौवर्ण्यदोषः । नचैव'मास्ये तुल्यदेशप्रयत्न'मिति वार्त्तिकव्याख्यावसरे 'यदि लौकिकमास्यं, किमास्योपादाने प्रयोजनम् ? । प्रयत्नविशेषणमास्योपादान'मिति भाष्याऽऽसङ्गतिः । ( नासिकाव्यावृत्तये देशविशेषणताया अप्यावश्यकत्वादिति वाच्यम् । ) अनुनासिकाऽकारादौ तस्या धर्ममात्रजनकतया, ङादावपि तत्त्वमेवेत्याशयात्। अत एव तत्सिद्धान्तभाष्ये 'एतदर्थमेव देशविशेषणमपि त'दित्युक्तमित्यनुपदमेव स्फुटी भविष्यति] ।

नचैवं स्थानतोऽन्तरतमे 'त्वं करोषी'त्यादौ चरितार्थं परसवर्णशास्त्रं, 'सँय्यन्ते'त्यादौ न प्रवर्त्तेत । उक्तरीत्या यादीनां नासिकास्थानत्वाऽभावेन, स्थानत आन्तर्याऽभावादिति वाच्यम् ।

[ संग्राह्यलाघवाऽनुरोधेन 'ञयी'ति वाच्ये'ययी'त्युक्तिसामर्थ्येन गुणकृताऽऽन्तर्येणापि तेषु तत्प्रवृत्तेः । अस्तु वा कैयटरीत्या आस्याऽन्तर्गतत्वं, स्थानत्वं च । तथापि न क-ङयोः सावर्ण्ये दोषः । 'तद्धितान्त आस्यशब्दः । आस्ये भवम्—आस्यं। स्थानं, करणं च । प्रारम्भो यत्नस्य-प्रयत्नः । द्वन्द्वगर्भो बहुव्रीहिः । अथवा—प्रयतनमेव प्रयत्नः । तदेव चाऽऽस्यम् । नच बाह्यभेदे सावर्ण्याऽनापत्तिः । यत्समानं तदाश्रयिष्यामः । किं सति ? । भेदे 'सती'त्याह । भेदाऽधिष्ठाना हि सवर्णसंज्ञा । अन्यथा 'झरो झरी'त्यादौ सवर्णग्रहणमनर्थकं स्यात् । न च बाह्यैक्ये त्वाभ्यन्तरभेदे सावर्ण्याऽऽपत्तिः । एवं तह्यास्यभवे एकस्मिन् तुल्यः प्रयत्नो येषा'मित्यर्थप्रतिपादकभाष्यसन्दर्भेण यत्किञ्चित्स्थानैक्ये एव संज्ञाया बोधनात् । किञ्च—नासिकायाः करणत्वेऽप्यास्यभवत्वेन करणस्याऽपि ग्रहणाद्यावदास्यभवतुल्यत्वे इत्यर्थाऽऽपत्तौ, तवाऽपि क—ङयोः सावर्ण्याऽनापत्तिस्तदवस्था । नचैवं ञ-ङयोरपि सावर्ण्याऽऽपत्तिः,

---

१ एतदन्तर्गतः पाठः। क. ग. नास्ति । २ ग. पाठः ।

३ 'त्यभिमानात्' ग. पाठः । ४ क. ग. नास्ति । ख. पाठः ।

५ 'त्वमेव' ख. पाठः । ६ ग. नास्ति । ७ 'ग-ङयोः' ग. पाठः ।

आस्यान्तर्गतत्वपक्षे इति वाच्यम् । 'आस्ये तुल्यदेशप्रयत्न'मिति वार्त्तिकन्यासे उक्तरीत्या देशविशेषणे फलाऽभावं मनसि निधाय—'किमास्योपादाने प्रयोजन'मिति प्रश्ने, सौत्रत्वाद् द्वन्द्वसाधुत्वमभिप्रेत्य,('किं पुनः स्थानं करणं चे' तिभाष्यात्) प्रयत्नविशेषणमास्योपादानमित्युक्त्वा, तद्व्यावर्त्यत्वेन बाह्यप्रयत्नान्प्रदर्श्य, 'यथा तृतीयास्तथा पञ्चमा, आनुनासिक्यमेषामधिको गुण' इति ग्रन्थेन[2] समाहितत्वात् । उक्तरीत्या ङादीनां नासिकास्थानत्वात्तेषां परस्परसावर्ण्यनिवृत्तये देशविशेषणमप्यास्यग्रहणमावश्यकमि[3]ति तस्य गूढ आशयः । स च नासिकाया बाह्यत्वे ए[4]व सङ्गच्छते ]।

'स्थानेऽन्त[5]रतमे' इति सप्तम्यन्तपाठस्य भाष्ये दूषितत्वेनोक्तयुक्तेरसम्भवदुक्तिकत्वात् । न च नासिकाया बाह्यत्वे 'आस्ये तुल्यदेशप्रयत्न'मिति वार्त्तिकन्यासे, 'किमास्योपादाने प्रयोजन'मिति प्रश्नस्य, 'प्रयत्नविशेषणमास्योपादान'मित्युत्तरस्य चाऽसङ्गतिः । नासिकाव्यावृत्तये देशविशेषणताया अप्यावश्यकत्वादिति वाच्यम् । अनुनासिकाऽकारादौ तस्या धर्ममात्रजनकतया ङादावपि तथात्वमित्यभिमानेन तत्सत्त्वात् ।

किञ्च सिद्धान्ते 'प्रयत्नविशेषणमास्योपादान'मित्युक्त्वा तद्व्यावर्त्यत्वेन बाह्यप्रयत्नान् प्रदर्श्य, 'यथा तृतीयास्तथा पञ्चमा, आनुनासिक्यमेषामधिको गुण' इति ग्रन्थेनोक्तरीत्या ङादीनां नासिकास्थानत्वात्तेषां कादिभिः सावर्ण्यसिद्धये देशविशेषणमप्यास्यग्रहणमित्यर्थ उक्तप्रायः । स च नासिकाया बाह्यत्वे एव सङ्गच्छते । आस्यान्तर्गतत्वे तु–'मुखनासिके'तिसूत्रे नासिकाऽतिरिक्ताऽवयवकमुखस्यैव ग्रहणेन, तत्साहचर्यादत्राऽप्यास्यपदेन तादृशस्यैव[6] ग्रहणमिति क्लेशेनोपपादनीयः स्यात् । अन्यथाऽत्र स्थाने एतत्कथनवैयर्थ्याऽऽपत्तिः । आस्यग्रहणव्यावर्त्य-सावर्ण्याऽनुपयुक्तप्रदर्शन-

---

१ ग. पाठः । २ ग्रन्थेनोक्तरीत्याङादीनां' ग. पाठः । ३ 'मित्यर्थ उक्तप्रायः' ग. पाठः । ४ 'बाह्यत्वे स्पष्ट एव' ख. पाठः । ५ [] एतदन्तर्गत ख. ग. पाठस्थानेऽयं क. पाठः । ६ 'ग्रहणमित्याशयः' ख. पाठः ।

[ परे तु कार्यकालपक्षेऽपि संज्ञासूत्राणां न भवदुक्तोऽर्थः। 'ष्यङः संप्रसारण' मितिसूत्रे 'कार्यकालं संज्ञापरिभाषं, भस्येत्युपस्थितमिदं भवति, 'यचिभ'मितिभाष्याऽसङ्गतेः। भवदुक्तरीत्या 'यची' त्येव वक्तुं युक्तत्वात्। ('अर्थं संज्ञाधिकारः संज्ञासंप्रत्ययार्थ' इति वार्त्तिकाऽसङ्गतेश्च। नहि पक्षान्तरेण शास्त्रजवाक्यार्थबोधे संभवति तदर्थं वचनारम्भो युक्तः। किञ्चोपस्थाप्यार्थस्य 'वृद्धिर्यस्ये' त्यादौ वृत्त्या बोधनात्संज्ञासूत्रत्वं वा, 'इको गुणवृद्धी इत्यादिवत्पदोपस्थापकत्वात्परिभाषात्वं वेत्यत्र विनिगमकाऽभावः। अपि च तत्रापि वृद्धिपदश्रुत्या आदैच्पदोपस्थित्या तत्पदोपस्थितानामेव वाक्यार्थान्वये तेषां वृद्धिपदेन वृत्त्योपस्थितिरित्यत्राऽपि न मानम्। अपि च 'मृजेर्वृद्धि' रित्यादिसूत्रस्थवृद्ध्यादिपदानां तदुपस्थितिसंपत्त्या चरितार्थानां स्वोपस्थापितपदार्थेऽभेदान्वये मानाऽभावेन ज्योतिष्टोमवाक्याद्वैलक्षण्येन तत्र नामधेयता दुरुपपादा। ज्योतिष्टोमवाक्ये तु पदद्वयस्याऽपि वाक्ये श्रवणात्तस्य फलान्तराऽभावाच्च वाक्यार्थान्वयित्वेन नामधेयता सूपपादा)।

तस्मा'न्मिदेर्गुण' इत्यादौ श्रुते गुणपदार्थजिज्ञासाया'मदेङ् गुण' इत्युपस्थित्या तदर्थबोधरूपे शक्तिग्रहे वृत्ते, विधिवाक्यार्थबोध इत्येव तद्विषये कार्यकालपक्षशरीरम्। (तत्तत्प्रदेशेषु सर्वत्र तत्तत्पदशक्तिग्रहपूर्वकं वाक्यार्थबोध इति तात्पर्यम्।

नच यत्र कुत्रापि प्रदेशे शक्तिग्रहे वृत्ते पुनः प्रदेशान्तरे तद्ग्रहो व्यर्थ इतिवाच्यम्, तत्प्रदेशस्थस्यैव तत्रार्थे शक्तिरिति संभावनया प्रदेशान्तरस्थे बोधाऽनापत्त्या सर्वप्रदेशेषु शक्तिग्रहावश्यकत्वात्)। एवं च तपरत्वं तत्पक्षेऽपि त्रिमात्रादिव्यावृत्त्यर्थम्। वृद्धिशब्दस्यादौ पाठो मङ्गलार्थः। 'एतदेकमाचार्यस्य मृष्यता' मितिभाष्ये एकपदं प्रथमार्थकम्। 'अपृक्त एकाल्प्रत्यय' इत्यादौ तु क्वचिदुद्देश्यवाचकस्य

१ क. ग. पाठः।　२ ग. नास्ति। क. पाठः।　३ ग. नास्ति क. पाठः।

प्रथमप्रयोग एव साधुत्वं, न परप्रयोगे इत्यर्थकत्वं "यच्छब्दयोगः प्राथम्य" मित्यादेरिति भ्रमवारणाय न तथाकरणमपि सूत्रकारस्य। प्रकारान्तरेण तु संज्ञासूत्रघटकपदानां, विधिघटकपदानां च सर्वेषां पदैकवाक्यतयाऽन्वयो दुरुपपाद एव। एकवृद्धिपदाऽनन्वयस्य तदवस्थत्वात्।

न चैकं वृद्धिपदमनुवादः। ईदृशकल्पनापेक्षयामदुक्त प्रकारस्यैवौचित्यात्। एवञ्च संज्ञासूत्रत्वमप्येषामाञ्जस्येनोपपद्यते। किञ्चभवदुक्तरीत्या संज्ञासूत्रार्थे[1] यस्याऽतो गुणइति प्रथममुपस्थितं तत्राऽदेङ्पदोपस्थितौ गुणपदवददेङ्षु इत्यर्थे तत्पदवत्वांशे विधिर्विशिष्टस्य चाऽनुवाद्यतेति महती दुरवस्थेत्याहुः ] अत्र चाऽतद्भावितानामपि ग्रहणम्। तद्भावितमात्रग्रहणे मानाऽभावात्। शालीयाद्यसिद्धेश्च। कुत्वं त्वयस्मयादित्वेन भत्वान्न। उभयसंज्ञकत्वाच्च संहितापाठे जश्त्वं भवत्येवेति दिक्।

भूवादयो। 'भूश्च, वाश्चे'ति द्वन्द्वः आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः। तत 'आदि' शब्देन बहुव्रीहिः। तेन भूप्रभृतयो, वासदृशा इत्यर्थः।

केचित्तु-'भूसदृशा, वाप्रभृतय इत्यर्थः धातुपाठेचाऽऽद्यावदादिगणः, तस्यचाऽऽदौ 'वा'धातुः। 'अदिप्रभृतिभ्य' इत्यत्र बहुव्रीहितत्पुरुषयोरेकशेषः। ध्वनितं चेदम् अत्रैव भाष्ये, चुरादिमनोरमायां चे'त्याहुः। स्वस्मिन्स्वसादृश्यं च प्रयोगभेदेनोपपाद्यं। तेन भूवोः संज्ञासिद्धिः। सादृश्यं च क्रियावाचकत्वेन तदाह-क्रियावाचिन इत्यादि।

क्रियावाचिनः किम्[2] ?

---

१ 'सूत्रार्थेऽतो गुण इत्यादवदेङ्' क. पाठः।

२ इतोऽग्रे [ 'याःपश्यसी'त्यादौ 'आतोधातो'रिति मा भूदिति। नचाऽर्थनिमित्तकाटापो बहिरङ्गत्वेन लोपेऽसिद्धत्वं, 'नाजाऽन्तर्ये'इति निषेधात्। ततोऽपि बहिर्भूताऽर्थनिमित्तकविभक्तिसापेक्षत्वेन लोपस्यैव बहिरङ्गत्वाच्च। नाऽप्यस्य लाक्षणिकत्वम्।

विकल्पार्थकनिपात'वा'शब्दस्यधातुत्वे, प्रातिपदिकत्वाऽभावात्सुब-भावे[1], पदत्वाऽनापत्तेः[2] । ततः'शकधृषे'त्यादि तुमुनापत्तेश्च ( वार्थस्य[3] क्रिया-काङ्क्षादर्शनेन तदर्थविकल्पस्य क्रियात्वाभावात् 'क्रियावाचिन'इत्युक्तौ न दोषः । ) न च प्रत्यासत्त्या धातुपाठपठिताऽर्थानामेव ग्रहणान्न दोषः । तद्रहितधातुपाठस्यैव प्रकृतसूत्रभाष्ये ध्वनितत्वात् । अर्थनिर्देशोऽपि तस्योप-लक्षणत्वाच्च । अतएव 'पराभवति' केशान्वपती'त्यादौ धातुत्वम् ।

क्रियात्वं च—'साध्यत्वेन प्रतीयमानत्वम् ।'

साध्यत्वं च क्रियान्तराऽऽकाङ्क्षाऽनुत्थापकतावच्छेदकवैजात्यम् । अस्त्यादीनामपि क्रियावाचकत्वं, ( षट्सु[4] क्रियाप्रकारकेषु[5] 'जायते''ऽस्ति' 'विपरिणमते'इत्यादिष्वस्तेर्गणनात् ) भूतभविष्यत्कालसम्बन्धाच्च[6] । आसन्नविनाशमुद्दिश्य 'किं करोती'ति प्रश्नेऽ'स्ती'त्युत्तराच्च ।

उपसर्गास्तु द्योतका एव, धातव एव वाचका इति प्रपचादिसमुदा-यानां न धातुत्वम् । अपाठाच्चेति सर्वं[7] भाष्ये स्पष्टम् । भ्वादयः किं ?

---

"नकारजावनुस्वारपञ्चमौ झलिधातुषु । सकारजःशकारश्चे, षाट्टवर्गस्तवर्गजः ॥"

इत्यभियुक्तोक्तेर्भ्वादिषु लाक्षणिकानामपि दर्शनेन, तद्विषये तत्परिभाषाऽ-प्रवृत्तेः । 'आतो धातो' रित्यत्र प्रतिपदोक्त आकारो गृह्यत इति तु वक्तुमशक्यम् । 'पशुष' इत्याद्यसिद्ध्यापत्तेः । 'पशुं सनोती'ति विट् । 'विड्वनो'रित्यात्वम् । अतएव 'जहातिसा'मित्यादि निर्देशाः सङ्गच्छन्ते । नचाऽऽ'तोऽनाप'इति वार्तिक-कृन्मते 'क्रियावाचिन'इति विशेषणं व्यर्थम् । याश्रुतसूत्रमते सत्वात् । ख. ग. पाठः । क. पुस्तके तु कुण्डलितः ।

१ 'सुबभावे आकारान्तस्य' ख. पाठः ।　　२ 'नापत्तेश्च' ख. पाठः ।

३ क. ग. पाठः ।　　४ क. नास्ति ।

५ 'क्रियारूपेषु परिणामिषु जायते' ग. पाठः ।　　६ 'चः' क. नास्ति ।

७ शय्यते इत्यादिभावार्थकतिङन्तानां, हिरुगादीनां च मा भूत् । तत्र धातुत्वे आदेच इत्यात्वापत्तिः । तत्र नैमित्तिकं, धातुत्वनिमित्तकञ्चेति प्रकृतसत्र-

('आणवयति' 'वट्टयती'त्यादौधातुत्वे शास्त्रविषयतया साधुत्वापत्तेः । सूत्रशेषे भाष्ये' स्पष्टमेतत् ।)

स्तंभ्वादीनान्तु सौत्राणामुदित्करणेन, तत्प्रकृतिकच्ल्यनुवादेनाऽङ्-विधानेन च[2], सार्वधातुकेपरे विकरणविधानेन च धातुत्वं ज्ञाप्यते। 'जुचंङ्क्रम्ये'त्यत्र पठितजोः 'जपजभे'त्यत्र पठितपसः, ऋतिप्रभृतीनां च धर्मिग्राहकमानात्, केषांचिद्धात्वधिकारविहितकार्योद्देश्यत्वाद्बोध्यम् । 'चुलुम्प''ढुण्ढि''विक्लुव'त्यादीनां 'बहुलमेतन्निदर्शन'मित्यनेनेति दिक् ।

**प्राग्रीश्वरात्** । 'रीश्वर'शब्दस्य चा'ऽधिरीश्वरे'इति सूत्रस्थस्य-ग्रहणम् । रेफविशिष्टोच्चारणाच्च 'ईश्वरेतो सु'नित्यादिस्थस्य न ग्रहणम् ।

---

भाष्ये स्पष्टम् । यदित्वस्योपदिश्यमानैजन्तत्वाभावान्नाऽत्र प्रसक्तिरात्वस्य । किञ्च षष्ठे आदेच इत्यत्र धातुग्रहणासम्बन्ध उक्तो भाष्ये । तर्हि आणवयति वट्टयतीत्यादीनां व्यावृत्तये पाठः । एतच्चात्रैव सूत्रशेषे 'आणवयत्यादिनिवृत्त्यर्थं पाठ'इतिवदता, 'उक्तमपी'तिवदता च भाष्यकारेण ध्वनितम् । किंच भूसादृश्य-मन्यानभिहितक्रियावाचकत्व इति शिश्ये इत्यादि सुपरिहरम् । आणवयत्यादीनां धातुत्वे हि शास्त्रविषयतया साधुत्वापत्तिरिति भाष्यसंमतः पन्थाः । हिरुगादीनां क्रियासमानाधिकरणत्वाल्लिङ्गाद्यनन्वयित्वाच्च गौणं क्रियावाचकत्वं बोध्यम् । हिरुगादीनामव्ययपाठस्तु प्रातिपदिकाद्यभावेऽप्यकजाद्यर्थः स्यात् ।

यत्तु तत्पाठसामर्थ्याद्धातुत्वाद्यभाव एव कल्प्यता'मिति । तन्न । प्रधानबा-धकल्पनापेक्षयाऽधिकृतविशेषणबाधकल्पनस्यैव न्याय्यत्वात् । यदि तु क्रियान्त-राकाङ्क्षादर्शनेन तेषां न क्रियावाचित्वं, तदाद्यम् ( शय्यते ) इत्येव प्रत्युदा-हरणम् । नच कालस्याऽपि तदर्थत्वेन क्रियावाचकत्वाऽनुपपत्तिः । कालस्यापि धात्वर्थत्वात् । लकारास्तु द्योतका एव । कालाऽवाचकभावार्थकलकारे दोषाच्च । भावार्थके 'शयितव्य'मित्यादौ दोषाच्च ।' इति ख. ग. पाठः । क. पुस्तके तु कुण्डलितः । १ क. पाठः । २ 'च' इति क. ग. नास्ति ।

अन्यथा व्याप्तिन्यायेन तस्यैव ग्रहणं स्यादिति[1] स्पष्टं भाष्ये। तत्र 'रीश्वरात्प्रा'गित्युक्तत्वेनाऽध्यंशे[2] संबन्धोऽस्त्येव। तस्य ततः प्राक् सत्त्वात्।

एतेन 'तद्विहितकर्मप्रवचनीयसंज्ञया निपातसंज्ञायाः समावेशो न स्या'दित्यपास्तम्। प्राप्तविभाषात्वाच्च 'विभाषा कृञी'त्यत्र न दोषः। यद्वा-'रीश्वरम'भिव्याप्येत्यर्थः। ल्यब्लोपे पञ्चमी। प्राग्ग्रहणं त्वेकसंज्ञाधिकारेपि गत्युपसर्ग-कर्मप्रवचनीयसंज्ञाभिः समावेशार्थम्। 'प्राक्निपाताः सन्तो गतय'इत्यर्थात्। तेनाऽव्ययत्वाद्गतिसंज्ञकेषु सुपः श्रवणं न। आद्यपक्षे तु प्रागित्यावर्त्यमित्याहुः। न चाऽव्ययसंज्ञाप्रकरणे एव 'चादयोऽसत्त्वे' इत्यादि प्रकरणमस्तु। माऽस्तु च निपातसंज्ञा। एवं चैकसंज्ञाऽनधिकारात्संज्ञासमावेशोऽपि सिद्ध्यतीत्यपरमनुकूलमिति वाच्यम्। कर्मप्रवचनीयसंज्ञयाऽपि गत्यादीनां समावेशाऽऽपत्तेः। तथा च 'जपमनुप्रावर्ष'दित्यादौ 'गतिर्गता'विति निघातः स्यात्। [ महासंज्ञाकरणं[3] तु 'नियमेन पातयन्ति स्वार्थमन्यस्मि'न्नित्यन्वर्थलाभाय। तेनैषां द्योतकत्वं बोधितम्। अत एव 'वोरी क्रियते' 'साक्षात्क्रियते' 'अनुभूयते गुरु'रित्यादौ कर्मणि लकारः सङ्गच्छते। नचैवं तत एव पशुशब्दादेर्व्यावृत्तिसिद्धौ, 'चादय'इत्यत्रा'ऽसत्त्वे'-इति व्यर्थमिति वाच्यम्। स्पष्टार्थत्वात्। अत एव च पदैकदेशानां चादीनां न संज्ञा। ( अर्थवत्त्वाऽभावाच्च )[4]। ]

पादपूरणार्थानान्तु 'निपाता'इति बहुवचनात्सा [ यद्वा 'निपतनं निपातोऽनेकेष्वर्थेषु येषा'मित्यर्श आद्यच्। तेन निपातानामनेकार्थत्वं सिद्धमित्याहुः )[5]। 'असत्त्वे'इति न प्रसज्यप्रतिषेधः, वाक्यभेदासमर्थसमासाऽऽपत्तेः। तदूर्ध्वनयन्नाह—अद्रव्येति।

सत्त्वत्वं तु—लिङ्गसंख्याकारकाऽन्वयित्वम्। नच पर्युदासपक्षे

---

१ 'स्यादितीदमुक्तमितिस्पष्टं भाष्ये' ख. पाठः।

२ 'अवध्यंशे' ग. पाठः। ३ क. कुण्डलितोऽयं पाठः।

४ क. ग. नास्ति। ५ क. नास्ति। ख. ग. पाठः।

'वातीति वा' इत्यस्य क्रियाविशिष्टद्रव्यवाचकतया, क्रियायाश्च द्रव्यभिन्नत्वेन, निपातत्वं स्यादिति वाच्यम्। द्रव्यवाचकपशुशब्दादेरपि 'त्रिकं प्रातिपदिकार्थो'दिपक्षे लिङ्गाद्यर्थकत्वेन, लिङ्गादेश्चाऽद्रव्यत्वेन, व्यावर्त्याऽलाभेन सामर्थ्याद्द्रव्यविशेष्याऽर्थकत्वविवक्षणेनाऽदोषात्। ( महासंज्ञया वारणाच्च )।

वस्तुतस्तु पर्युदासेऽनर्थकानां निपातत्वाऽनापत्या प्रसज्यप्रतिषेध एवोचित इत्याहुः। चादयः किं? स्वरादिमात्रपठिताऽसत्ववाचकानां मा भूत्। तथा सति निपातत्वादाद्युदात्तत्वं स्यादिति बोध्यम्। [ 'लोधंनयन्ति पशु 'मन्यमाना' इत्यत्र तु भवत्येव निपातत्वम्। तत्र हि'पश्चि'ति सम्यगर्थेऽव्ययम्। 'लुब्धमृषिं नयन्ति पशुं मन्यमाना'इति साऽनुस्वारपाठस्तु निरुक्तेऽसाम्प्रदायिक एव। 'लोध'शब्दार्थनिर्णयाय तस्य प्रवृत्तत्वेन पशुशब्दांऽशेऽन्यथापाठे मानाऽभावात्। अतएव 'लोध'मित्यनवगत'मिति तद्भाष्ये व्याख्यातम्। स्पष्टं चेदं प्रकृतसूत्रे हरदत्तग्रन्थे, दृशधातौ माधवग्रन्थे च ]।

**गतिसंज्ञाश्चेति**। चकार उपसर्गसंज्ञासमावेशाऽर्थः। तेन 'प्रतिप्रणीत'मित्यादौ गतित्वा'द्गतिरनन्तर'इति स्वर, उपसर्गत्वाण्णत्वादि च सिद्ध्यति। 'योग'ग्रहणन्तु यदर्थे प्रादीनामन्वयस्तं प्रत्येव गत्युपसर्गत्वमिति बोधनार्थम्। प्रत्यासत्तिन्यायात्। अत एव वाऽभेण्यर्थविशेषकत्वेऽभिसावयती'त्यादौ षत्वं न।

'प्रादय' इति,-योगविभागकरणन्तु क्रियायोगं विनाऽपि निपातत्वाय। तेन 'प्रगत आचार्यः प्राचार्य' इत्यादावव्ययपूर्वपदप्रकृतिस्वरः सिद्ध्यतीति प्राञ्चः।

---

१ 'द्द्रव्यमात्रार्थकत्व' ख. पाठः। २ क. ग. नास्ति।

३ क. पुस्तके खण्डित कुण्डलितश्च ख. ग. पाठोऽयम्।

४ 'स्यादेव' खः।

केचित्तु 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्चे'ति चाद्यन्तर्गणसूत्रेण तत्र निपातत्वसिद्धिरित्याहुः ।

वस्तुतस्त्वेतद्योगविभागसिद्धमेव तत्रोपसर्गग्रहणमिति भाष्याशय इति दिक् । प्रपरेत्यादौ ( 'प्रकृतिवदनुकरण'मित्यतिदेशात्सुपो लुक् ) अनुकार्याऽनुकरणयोरभेदविवक्षयाऽनुत्पत्तिरेव(वा) ।

निस् निर् दुस्-दुरिति । 'निसस्तपतौ' 'निसोगते' इत्यादि निर्देशात्, ('हयवरट्' सूत्रे भाष्ये 'इदुदुपधस्ये' त्यस्ये'दुदुपधसस्ये'त्यर्थं कृत्वा'दुःकृत' मित्युदाहरणात् ) 'उपसर्गस्याऽयता'वित्यत्र (दुसो) वामनोक्तेश्च सान्तौ । 'निरः कुषः' 'सुदुरोरधिकरणे' इति निर्देशाद्रेफान्तावपीति बोध्यम् ।

[ननु 'निरः कुष' इत्यादि शास्त्राणि निसि न प्रवर्त्तेरन् । न च प्रयोग एव शास्त्रप्रवृत्त्या प्रयोगस्थानामिदमनुकरणम् । 'दाधाघ्वदा'ति सूत्रस्थ-भाष्यस्वरसाच्च । प्रयोगे चोभयोरपि रान्तत्वान्न दोषः । क्वचित्त्वगत्या प्रयो-गाऽर्थं कल्पितस्याऽप्यनुकरणं, यथा 'लटः शतृ शानचा'वित्यादाविति न दोष इति वाच्यम् । एवमपि निस्सम्बन्धि-निरोलाक्षणिकतया तदनुकर-णादिति चेन्न । 'एकाच उपदेशे' इति सूत्राऽनन्तरं निरः कुषोऽनिष्ठाया' मिति लघुभूतन्यासेन सिद्धे, 'स्वरति सूती'ति विकल्पप्रकरणे 'निरः कुष' 'इण् निष्ठाया'मिति गुरुभूतन्यासकरणस्योपसर्गद्वयेन रूपस्य सिद्ध्या वैयर्थ्येन, रान्तोपसर्गग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिज्ञाप-नार्थतयाऽदोषात् । तत्र प्रमाणानां सामान्ये पक्षपातात्, व्याख्यानाच्च 'अनिष्ठाया'मिति पर्युदासे प्रत्ययत्वेनैव साहृश्यं, न कृत्त्वेनेति, 'पर्युदासेन कृत्येवेदं प्रवर्त्तते'ति न शङ्क्यम् ।

---

१ क. ग. नास्ति ।  २ ग. पाठः ।

३ क. ग. पाठः ।  ४ क. कुण्डलितोऽन्ते त्रुटितश्च, ख. पुस्तके पाठः ।

५ इत आरभ्य–'लाघवमित्याहुः ।' इति पर्यन्तं ग्रन्थोऽयं क. त्रुटितः । ख. तु दृश्यते एव । ग. नास्ति ।

नच 'कृ सृ भृ' इति क्रादिनियमा'न्निश्चुकोषिथे'त्येकमेव स्यात् । यथान्यासे तु न। 'निषेधप्रापितस्यैवाऽयन्नियम'इत्यर्थस्य वक्ष्यमाणत्वादिति वाच्यम्। नियमस्य सजातीयत्वेनोपसर्गाऽनिमित्तनिषेधप्रापितस्यैव नियमात्। 'विकल्पप्रापितस्याऽपि नियम' इति वादिनां मते यथान्यासे दुर्वारत्वेनेष्टापत्तेश्च । मदुक्तरीत्या वारणे तु समम् ।

अत एव दुर उपसर्गत्वप्रतिषेधे दुसोऽपि निषेधः। तेन 'दुःषेधती'ति चिन्त्यम्। एवं च 'निष्कोष्टा' 'निष्कोषिते'तिरूपद्वयसिद्धये विकल्पप्रकरणे पाठ आवश्यकः। अत एव क्वचिन्निस इति, क्वचिन्निर इति वैलक्षण्येन निर्देशः सूत्रकृतः सङ्गच्छते· रान्ते उभयग्रहणाय । अत एवाऽसिद्धत्वमपि न। नच यथान्यासेपि 'निरः कुषोऽनिष्ठाया'मित्येव कुतो न सूत्रितम्, 'यस्य विभाषे'त्यस्य प्राप्त्या निष्ठायां विकल्पस्याऽप्राप्तेरनिष्ठायामित्यस्य वैयर्थ्यापत्तेः। सामर्थ्येनानुमानिकवचनकल्पने तु न किञ्चिल्लाघवमित्याहुः।

[अत्र केचित् सान्तग्रहणे रान्तस्याऽग्रहणमेव। यत्र च रुत्वमसिद्धं, तत्र रान्तग्रहणेपि न सान्तग्रहणम्। तद्दृष्ट्या रुत्वस्याऽसिद्धत्वेन तयोर्निदुरत्वाऽभावात्। यत्र तु रुत्वस्य सिद्धत्वं, यथा षत्वणत्वयोः, तद्विषयोपसर्गत्वप्रतिषेधपरे 'दुरः षत्वणत्वयो'रिति वार्त्तिके कृतरेफसान्तस्यापि ग्रहणम्। उपसर्गसंज्ञायां(च)कार्यकालपक्षस्यैवाश्रयणीयत्वात्[1]। 'दुःस्थित'मित्याद्यर्थे 'दुःष्ठित'मित्यादिशिष्टप्रयोगाऽदर्शनाच्च । तद्वार्त्तिकस्य णत्वविषयोदाहरणे 'इह णत्वं माभू'दिति भाष्योक्तेश्च । सान्ताऽग्रहणे तु 'दुर्भवानी'त्यादौ णत्वसहितप्रयोगस्यापीष्टत्वेना(ऽत्र ?)णत्वमपि यथा स्या'दितिवक्तु युक्तम्।

किञ्चैवं सुषामादिषु 'दुष्ठु'शब्दपाठो व्यर्थः स्यात्। स हि 'अपदुस्सुस्थःकु'रिति दुःपूर्वकस्थाधातोः कुप्रत्यये साधुः। त्वद्रीत्या हि दुस्पूर्वकादेव कुप्रत्ययमङ्गीकृत्योपसर्गादित्येव षत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। न चास्य

---

१ क. ग. पाठः। २ 'कार्यकालपक्ष एवेति तत्राऽपि रुत्वस्य सिद्धत्वात्। दुस्थितमित्या' ग. पाठः।

रूढत्वेनावयवार्थाऽभावादुपसर्गत्वाऽभावः । अत्यन्तरूढेषु प्रतिष्ठानिष्ठादि शब्देषु षत्वाऽनापत्तेः । अर्थवत्त्वारोपेणेति चेत् । प्रकृतेपि तुल्यम् । नचैवं दुसः पाठो व्यर्थः । 'दुरयते' इत्यादौ रुत्वस्याऽसिद्धत्वेन लत्वाऽभावार्थत्वात् । दुरस्तु 'दुलयते' इतिरूपम् ।—एतेन 'दुःषुणोती'ति 'उपसर्गादि'तिसूत्रेति हरदत्तोक्तं चिन्त्यमित्याहुः ] ।

( परे तु दुस्नास्त्येव, निर्सनिर्दुरामिव सूत्रभाष्यादावव्यवहृतत्वात् । वृत्तिकारादीनां तु प्रमाद एव 'निरः कुषोऽनिष्ठाया'मित्येव सूत्रयितुमुचितम् ।

यत्तु 'इदुदुपधस्य सस्ये'त्यर्थं हयवरट्सूत्रभाष्ये उक्त्वा 'दुष्कृत'मित्युदाहरणं दत्तं, तत्तु तत्रत्यसग्रहणस्य 'अथवा इदुद्भ्यां परं विसर्जनीयं विशेषयिष्यामः' इत्युत्तरभाष्यैकवाक्यतयोपलक्षणताया आवश्यकत्वान्नाऽर्थसाधकम् । मूलं तु वृत्यनुरोधेनेत्याहुः । )

**नवेति** । 'इति'शब्दो मध्यमणिन्यायेनोभाभ्यां सम्बध्यते, व्याख्यानात् । स च लोकेऽर्थपदार्थकस्य शब्दपदार्थकत्वं करोति । ( उपस्थितत्वात् ) । यथा गवित्ययमाहेति । इह तु 'स्वं रूप'मिति परिभाषणात् शब्दपदार्थकस्याऽर्थपदार्थकत्वम् । इदमेव इतेः पदार्थविपर्यासकृत्त्वं नाम । तेनाऽर्थ एव संज्ञी, संज्ञा च । शब्दस्यैव संज्ञात्वे, 'हृक्रोरन्यतरस्या'मित्यत्रोपस्थितिर्न स्यात् । तस्यैव संज्ञित्वे तु 'विभाषाश्वे'रित्यस्य 'न'शब्दो 'वा' शब्द आदेश इत्यर्थः स्यात् । संप्रसारणग्रहणानुवृत्तावपि पर्यायः स्यात् । 'नवे'त्यखण्डनिपातार्थनिषेधस्तु न गृह्यते । 'इति' शब्दस्य प्रत्येकं संबन्धात् 'ने'ति, 'वे'तीत्यर्थात् । अतएव संज्ञाकरणं चरितार्थम् । अन्यथा विभाषाप्रदेशेषु 'ने'त्येव वदेत् ।

न च तयोरपदार्थतयाऽनन्वयप्रसङ्गः । विकल्पवाचिपदस्य तयोर्लक्षणा-

---

१ क. ग पाठः ।　२ क. ग. नास्ति । ख. पाठः ।　३ ख. पाठः ।
४ 'परिभाषणात्तत्र शब्दपदार्थकस्य' ख. पाठः । ५ 'अर्थात्'इति ख. नास्ति ।

भ्युपगमात्। तथा च लक्षणातात्पर्यग्राहकमिदं सूत्रम्। साचाऽर्थद्वये सूत्राऽनुरोधात्क्रमेणैव ( जनिताऽन्वयबोधनैराकाङ्क्षादिकमपि सूत्रबला-देव न )। ( केचित्तु[2] अर्थस्य संज्ञात्वं न दृष्टचरम्। अनेकविधिवाक्येषु विकल्पवाचिपदलक्षणागौरवग्रस्तं चेतीति शब्दसम्बन्धसामर्थ्याद्वि-भाषेत्युपस्थितार्थाक्षिप्ततद्वाचकशब्दमात्रस्य संज्ञात्वमित्याहुः )। तत्र 'विभाषोपपदेने'त्यादि प्राप्तविभाषायां नाऽस्योपयोगः। तद्विषये सर्वत्र 'स्वरितञित'इत्यादिना नित्यमात्मने पदे प्राप्ते तस्य पक्षे निवृत्तिमात्रा-र्थत्वात्[3]।

'विभाषोर्णो' रित्याद्यप्राप्तविभाषास्वपिनोपयोगः। तस्य पक्षे ङित्त्ववि-धिमात्रार्थत्वात्। अप्राप्तत्वेन निषेधाऽसंभवाच्च[4]।

किन्तूभयत्र विभाषासु 'विभाषाश्वे'रित्यादिकास्वावश्यकम्। तत्र हि संज्ञाऽसूत्राऽभावे यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात्। कित्सु तु यजादित्वान्नित्यमेव संप्रसारणं स्यात्। निषेधमुखेन प्रवृत्तौ तु कित्स्वेव प्रवृत्तिः स्यान्नपित्सु। उभयथाप्रवृत्तिस्तु वैरूप्यलक्षणवाक्य-भेदापत्तेर्वक्तुमशक्या। वस्तुतो भावतात्पर्यकतालाभेन पित्स्वेव प्रवृत्तिः स्यात्कित्सु तु न स्यादेवेति बोध्यम्। संज्ञाकरणे तु श्रुतक्रमानुरोधात्पूर्वं निषेधः कित्सु प्रवर्त्तते। ततः किदकिद्रूपे सर्वस्मिन् लिटि ऐकरूप्यं

१ क. ग. नास्ति। ख. पाठः।

२ क. ग. पाठः।

३ इतोऽग्रे—'ननु नेयं प्राप्तविभाषा, उपपदेन प्रतीयमाने कर्तृगामित्वे उक्तार्थानामप्रयोग इति न्यायेनाऽऽत्मनेपदाऽप्राप्तेः। स्पष्टं चेदं विभाषोप-पदेनेत्यत्र कैयटे इति चेन्न। कर्तृगामित्वविषये इति व्याख्यानस्यैवैतत्सूत्र-स्थभाष्यप्रामाण्येनाचितत्वात्।' ख. पाठः। क. ग. नास्ति।

४ इतोऽग्रे—'और्णुवीत्यत्र तु परत्वात्सार्वधातुकमपिदिति नित्यं ङित्वमेव भवति।' ख. पाठः। क. ग. नास्ति।

प्रापिते सति, 'पक्षे भवती'त्येकरूपेण विधिमुखेनैव विकल्पः ।

नचोभयत्र विभाषार्थमावश्यकमप्राप्तविभाषास्वपि प्राप्नोति, **'घटायोन्मीलितं चक्षुः पटं नहि न पश्यतीति'** न्यायात् । एवं च 'विभाषोर्णो' रिति सूत्रेण 'प्रौर्णुवी'त्यत्राऽपि 'निषेधाश्च बलीयांस' इति 'सार्वधातुक'-मित्यस्य निषेधे, ततो विकल्पः स्यादिति वाच्यम् ।

(विजे इडित्यत्रागमस्यैव सम्भवेनार्थाधिकारादिहाप्यागमस्यैवेटो ग्रहणेनाऽदोषात् । तत्र लक्ष्यानुरोधेन व्यवस्था । एवं च सूत्रारम्भेपि लक्ष्यानुसरणस्यावश्यकत्वेन तत एव 'विभाषाश्वे' रित्यादावप्युभयमुखेन प्रवृत्तिर्भविष्यतीति नार्थोऽनेन सूत्रेण । किञ्चाक्षिप्तशब्दमात्रं सञ्ज्ञेत्यप्यसङ्गतमेव । एकस्यार्थस्य समानफलकानेकसञ्ज्ञाकरणस्या'ऽनाकृतिः संज्ञे'ति वृद्धिसूत्रस्थभाष्येण तिरस्कारात् । 'विभाषापदस्य स्वबोध्यबोधके लक्षणे'त्यपि न । निषिद्धलक्षणापत्तेः । तस्मा'द्धृको'रित्यादौ लक्ष्यानुसारेणैवोभयमुखेन प्रवृत्तिर्वाच्या । एवं च 'विभाषाश्वे' रित्यादावपि तथैव सिध्यतीति जातिव्यक्तिपक्षयोरुभयोरपि सूत्रं भाष्यकृता प्रत्याख्यातम् ।

**केचित्तु**—किदादि विषयेऽपि परत्वा 'द्विभाषाश्वे' रित्यस्यैव प्रवृत्तिरिति 'विधिमुखेनैवं प्रवृत्ति' रितिपक्षेऽपि न दोष इत्याहुरिति दिक् । )

स्व रूपं । 'स्वं रूप'मिति न संज्ञापरं, पूर्वनिर्देशात् । रूपग्रहणेनाऽर्थ-

१ 'ततो विकल्पः स्यादिति वाच्यं । विभाषाजसी'त्यतो विभाषाग्रहणाऽनुवृत्त्या क्वाचित्कत्वाऽभ्युपगमेनाऽदोषात् । अत एवोभयशब्दे 'प्रथमचरमे'ति विकल्पो नेति वक्ष्यमाणं सङ्गच्छते । अन्यथा तत्रापि 'नवे'त्यस्योपस्थितावुभयशब्देऽन्तरङ्गाया अपि निषेधे सर्वसाधारण्येन विकल्पः स्यात् । नचाऽन्तरङ्गत्वादेव तस्या न निषेधः, 'नवे'त्युपस्थितिवैयर्थ्यापत्तेः । 'निषेधाश्च बलीयांस' इति न्यायाच्च । तत्र लक्ष्याऽनुरोधेन व्यवस्थेति दिक् ।' ख. पाठः क. ग. पाठस्थाने ।

२ क. ग. पाठः । ख. नास्ति ।

स्याऽपि विवक्षे'ति भाष्यविरोधाच्च। तस्मात्संज्ञिपरं तदाह- संज्ञीति।

'रूपं शब्दस्य संज्ञे'ति भाष्येऽपि संज्ञाशब्दः-'संज्ञायते'इति व्युत्पत्त्या बोध्यार्थपर इति न दोषः। 'राज्ञो य'दित्यादौ लौकिकव्युत्पत्त्योपस्थितार्थस्य प्रत्ययेन पौर्वापर्याऽसम्भवात्, ( शब्दद्वारा व्याख्याने मानाऽभावात् ), 'प्रातिपदिका'दित्यनेनाऽभेदान्वयाऽसंभवाच्च। सामर्थ्येन, बहुलक्ष्य-संस्काराऽनुरोधेन, तदर्थकशब्दमात्रग्रहणाऽऽपत्तौ नियमार्थं सूत्रम्। तत्र 'स्व'शब्दो न शब्दस्वरूपरूपा[2]ऽऽत्मवाची रूपग्रहणवैयर्थ्याऽऽपत्तेः।

नच'रूप'ग्रहणाऽभावे आत्मीयवाचकतयाऽर्थस्यैव संज्ञित्वं स्यान्न शब्दस्येति तच्छङ्कावारणाऽर्थं 'रूप'ग्रहणमिति वाच्यम्। प्रतीतावुपदेशा-ऽनपेक्षत्वादसाधारणत्वादन्तरङ्गत्वान्नियतोपस्थितिकत्वाच्च शब्दस्वरूप-रूपा[3]ऽऽत्मवाचकस्यैव[4] ग्रहणसम्भवेन तद्वैयर्थ्यस्य तदवस्थत्वात्। अर्थो हि प्रतीतौ सम्बन्धग्राहकमुपदेशमपेक्षते[5], साधारणश्च, पर्यायैरपि प्रतिपाद-नात्। बहिरङ्गश्च, पदज्ञानजन्यबोधविषयत्वात्। अनियतोपस्थितिकश्च-अनुकरणदशायामप्रतीतेः। तस्माद्रूपग्रहणसामर्थ्यादात्मीयवाची[6]।

तच्चाऽर्थरूपं, रूपशब्देन शब्दस्वरूपमेतदुभयं संज्ञीत्यर्थः। तत्राऽर्थो न विशेष्यः, उक्तयुक्तेः। किन्तु शब्दविशेषणम्। एवं चाऽर्थविशिष्टः शब्दः संज्ञी'ति फलितम्।[7]

१ क. ग. नास्ति।

२ 'शब्दरूपाऽऽत्मवाची, नपुंसकनिर्देशापत्तेः रूपग्रहणवैयर्थ्यापत्तेश्च'। ख. पाठः। ३ क. पाठः। ४ 'शब्दस्वरूपात्मवाचकस्यैव ग्रहणात्।' ख. पाठः।

५ 'सम्बन्धग्रहणमपेक्षते' ख. पाठः।

६ 'किन्त्वात्मीयवाची' ख. पाठः।

७ इतोऽग्रे-'नचाऽन्तरङ्गत्वादिना 'राजश्वशुरे'त्यादौ राजन्शब्दस्यैव ग्रहणे सिद्धे सूत्रं व्यर्थम्। उपस्थिताऽर्थत्यागे मानाऽभावेन तस्य विशेषणतयाऽन्व-यस्याऽपि सम्भवादिति वाच्यम्। उक्तन्यायसिद्धार्थाऽनुवादेनैव सूत्रेण

( एवञ्चेदं[1] सूत्रं विशिष्टरूपोपादानविषयमेव )। एवं चार्थवद्ग्रहण-परिभाषा सिद्धा। ( अत्र[2] चार्थः कल्पितान्वयव्यतिरेककल्पितः शास्त्रीयो-(ऽपि)गृह्यते इति 'संख्याया अती'ति सूत्रे भाष्ये स्पष्टम् ) उपस्थितोऽर्थश्च मुख्यः प्रसिद्ध एव गृह्यते। तेन गौणमुख्यन्यायः, 'अभिव्यक्तपदार्था ये' इति न्यायश्च सिद्धः। अर्थानुपस्थितौ तु केवलशब्देऽपि। इदमेवा-ऽभिप्रेत्याऽर्थवत्परिभाषा[3] ( वर्णग्रहणेषु[4][5] नेति 'लस्ये'त्यत्र भाष्ये उक्तम् )। नचाऽ'शब्दसंज्ञे'ति व्यर्थम्। 'उपसर्ग घोः कि'रित्यादावर्थे कार्यस्या-ऽबाधादिति वाच्यम्। 'दाधाघ्व'त्यस्य 'ईहल्यघो'रित्यादौचारिताथ्र्येनो-'पसर्गे घो'रित्यादौ 'स्वं रूप'मित्यनेन परत्वाद्बाध(शङ्का)वारणार्थत्वात्। [7]( कार्यकालपक्षे[6]ऽप्यविशेषाद्घुधातोर्दाधाभ्यश्च प्राप्तत्वाच्च )।

तत्र 'शब्दस्य संज्ञे'ति न षष्ठीतत्पुरुषः। कर्मसंज्ञादेरर्थसंज्ञात्वेन निषेधाऽप्रवृत्तौ, 'कर्मण्य'णित्यादौ स्वरूपग्रहणाऽऽपत्तेः। ( अर्थे कार्यस्य बाधसत्त्वात् )। किन्तु सप्तमीतत्पुरुषः। तत्र शब्दपदेन शब्दशास्त्रं लक्ष्यते। यथाश्रुते बाधात्। लुप्तविभक्त्यन्तं[8] चैतत्। तदेतत्सकलमभि-सन्धायाऽऽह—

---

शब्दार्थविषये क्वचिदुक्तन्यायाऽप्रवृत्तेरपि ज्ञापनात्। तेन 'जनपदे लुप्' 'तस्यापत्य'मित्यादौ न दोषः।

एवं चेदं सूत्रं लौकिकव्युत्पत्त्योपस्थितार्थे कार्यबाधे, तदर्थकाऽनेक-शब्दग्रहणे प्राप्ते'ऽर्थविशिष्ट उपस्थितः शब्द एव संज्ञी'त्येतदर्थं फलितम्।

अतएव प्राचामुदीचामपत्यं पशुरित्यादौ न दोषः। अर्थे कार्यस्या-ऽबाधात्।' इत्यानंशः क. ग. नास्ति। ख. तु दृश्यते एवेयं पाठः।

१ क. ग. पाठः।　　　　२ क. ग. पाठः।

३ 'परिभाषा विशिष्टोपादानविषयेत्युक्तं' ख. पाठः।

४ क. ग. पाठः।　५ ख. नास्ति।　६ क. ग. नास्ति। ख. पाठः।

७ ख. पाठः।　　　　८ 'लुप्तषष्ठ्यन्तं' ख. पाठः।

शब्दशास्त्र इति। इदमपि सूत्राऽऽशयवर्णनमात्रम्[1]। ( वस्तुतस्तु[2] अन्तरङ्गत्वादिना 'राजश्वशुरे' त्यादौ तज्जन्यबोधे प्रकारतया भासमानस्य राजन्शब्दस्यैव ग्रहणे सिद्धे सूत्रं व्यर्थम्। उपस्थितार्थत्यागे मानाभावेन तस्य विशेषणतयाऽन्वयस्य सम्भवेनार्थवत्परिभाषापि सिद्धा। लक्ष्यानुरोधेन क्वचिन्न्यायाऽप्रवृत्या 'उपसर्गेघोः कि'रित्यादौ न दोषः। अत एव 'ऊकाल' इतिसूत्रे 'स्वं रूपं शब्दस्याऽशब्दसंज्ञे'ति योगः प्रत्याख्यायते इति भाष्ये उक्तम् )।

**येन विधिः**। 'येने'ति करणे तृतीया, न कर्त्तरि। कृद्योगषष्ठ्या बाधात्। 'विधि'रिति किर्भावे। कर्म तु विधेयमनुक्तमपि प्रसिद्धत्वाल्लभ्यत[3] एव। ( करणं[4] च परतन्त्रम्। कर्त्रधिष्ठितस्यैव तथात्वात्। नचैरजित्यादाविकारादीनां पारतन्त्र्यं, धात्वादीनां च प्राधान्यं स्वरूपतोऽवभासते, वास्यादिष्विव तक्षादीनाम्। अतो विवक्षानिबन्धनं तदुभयं बोध्यम् )। एवं च तृतीयया पारतन्त्र्यं लक्ष्यते। तच्च शब्दानां विशेषणभावेन। एवं च 'विशेषण'मिति लब्धम् तदप्यन्तरङ्गत्वात्समानाधिकरणमेव, नतु व्यधिकरणम् तत्र ( तत्र[5] ) तदन्तविधौ सति तत्समानाधिकरणविशेषणत्वयोग्यताऽप्येतत्प्रवृत्तौ निमित्तम्। अत एवेन्हन्नित्यादावि[6]र्न्नंशे तदन्तविधिः। नहि इन्-अङ्गमित्यन्वयो भवति। ( बाधात्। यद्वा बाधज्ञानस्य बोधेऽप्रतिबन्धकत्वात्तादृशबोधो भवत्येवैतत्प्रवृत्त्युपयोगी। बाधज्ञानेन जायमाने बोधेऽप्रामाण्यज्ञानजननात्स न लक्ष्यसंस्कारक इत्यन्यत् )।

---

१ मात्रविषयं। ख. पाठः।　　२ क. ग. पाठः।

३ 'कर्मणि किर्न तु भावे। तथा सति कर्मणोऽनुपादानात्साकाङ्क्षतापत्तेः।' ख. पाठः।　　४. क. नास्ति। ग. तु 'कर्त्रधिष्ठितस्यैव तथात्वात्।' एतत्पर्यन्तं दृश्यते पाठः। ५ ग. पाठः। ६ क. ग. नास्ति। ख. पाठः।

एवं च बाधा'त्स्वस्य चे'त्यंशस्येदृशे विषयेऽप्रवृत्तिर्बोध्या तदाह— **विशेषणमिति** ।

**तदन्तस्येति** । प्रकरणात्तदन्तस्य शब्दस्येत्यर्थः ('स्वंरूपं'मिति सूत्रा-'च्छब्दस्ये'त्यनुवर्त्तना'त्तदन्तस्य शब्दस्ये'त्यर्थः)। अत एव यच्छब्देन शब्दो लब्धः ( यद्वा करणत्वं कार्यं प्रति । तच्चेह शास्त्रे प्रायः शब्दस्यैवेति यच्छब्देन शब्दो लब्धः ) ।

नन्वेव'मेर'ज़िति-'अय' इत्यत्र न स्यादत आह—**स्वस्य चेति** । 'स्व'मित्यनुवर्त्त्य, षष्ठ्या विपरिणम्यते इति भावः । ( तत्प्रत्याख्याने तु व्यपदेशिवद्भावेन सिद्धिर्बोध्या । ) **समासप्रेति** । विशेषणविशेष्यभावव्यत्यासे तात्पर्यग्राहकमिदमिति । एवं च 'द्वितीया श्रिते'त्यादौ श्रितादयो विशेष्यास्तद्विशेषणं सुप् । तेन 'कृष्णं परमश्रित'इत्यत्र न समासः । एवं 'नडादिभ्यः फ'गित्यादावपि नडादिविशेष्यं, प्रातिपदिकं विशेषणमिति फलितम् । तेन 'सौत्रनाडि'रित्यत्र फक् न । नन्वत्र तदन्तविधिसत्त्वेऽपि न क्षतिः । श्रिताऽन्तस्य सुबन्तत्वाऽभावात् । श्रितादिशब्दस्य तत्प्रकृतिके-लक्षणायां, तेन तदन्तविधावपि न क्षतिः । श्रितप्रकृतिकान्तसुबन्ताऽभावादिति चेन्न ।

[ समर्थपरिभाषोपस्थितसमर्थपदस्य सूत्रीयतत्तत्पदोत्तर विभक्तिसमानविभक्त्यन्तस्योपस्थितया तद्विशेषणत्वेन प्राप्ततदन्तविधेर्निषेधार्थत्वात् । तस्य च तत्प्रकृतिके लक्षणया सुपेत्यनेनान्वयः । नहि सामर्थ्यं ( तु ) सुबन्तेनैवेति नियमः । 'कुम्भकार' इत्यादौ सुबुत्पत्तेः पूर्वमपि तदङ्गीकारात् । एकार्थीभावस्याऽलौकिकेऽप्रयुक्ते एव कल्पनाच्च । 'परिपूर्णं पद' मितिन्यायस्तु यस्येतरत्राऽऽकाङ्क्षयाऽन्वयस्तद्विषये, नतु

१ ख. पाठः ।   २ क. ग. नास्ति । ख. पाठः ।

३ क. ग. पाठः ।   ४ 'श्रितशब्द' ख. पाठः ।

५ ख. नास्ति । क. ग. पाठः । अस्यैव पाठस्य स्थाने ख. पुस्तके त्वयं पाठः—

यत्रान्वयस्तद्विषय इति 'कुत्सित'इति सूत्रभाष्यात्स्पष्टमेवोपलभ्यते इति-ङ्याप्सूत्रे निरूपयिष्यामः । एतेन 'सम्बुध्यन्तमेवोदाहर्त्तव्य'मिति कैयटाद्युक्तं,'टाबन्तमपी'ति नव्योक्तं च परास्तम् । मदुक्तरीत्या सर्वत्र समासस्य प्राप्तत्वात् । नचात्र वार्त्तिके समासग्रहणं व्यर्थं, समासे क्वापि समर्थ-पदादेर्विशेष्यत्वप्रयुक्ततदन्तविधेरदर्शनादिति वाच्यम् । 'अपपरी'ति सूत्रे उगिदञ्चुग्रहणे तद्दर्शनात् । अन्यथा केवलाञ्चतिना क्विबन्तेनैव समासः स्यात् । न च तद्योगे पञ्चमी दुर्लभा । 'प्रयागाद् गत'इतिवद-पादाने संभवात् । न च सा न प्रतिपदोक्ता दिक्शब्दत्वेनैव सिद्धि-माश्रित्याऽञ्चूत्तरपदग्रहणस्य भाष्ये प्रत्याख्यानेन प्रतिपदोक्ताया दुर्लभ-त्वादिति दिक् ] ।

उगिदिति । ( उगिता, वर्णेन च यत्र प्रातिपदिकं विशेष्यते, तत्र तेन तदन्तविधिर्भवत्येवेत्यर्थः ) । तेना'ऽति भवती'त्यत्र 'उगितश्चे'ति ङीप्, 'दाक्षि'रित्यत्रा'ऽत इ'ञितीञ्च सिद्धः । सूत्रन्तु 'भवतु' इति सर्वादि पठिते, 'अस्यापत्यम्–इः काम' इत्यत्र च चरितार्थम् । ञित्त्वं तु 'बाह्वादिभ्य-श्चे'त्युत्तरत्र चरितार्थम्[2] ) । ( अत्र[3]'स्वस्य चे'त्यंशो व्यपदेशिवद्भा-वेन सिद्धः ) ।

'श्रितप्रकृतिकान्तसुबन्ताऽभावादिति चेन्न । समभिव्याहृतसुबादिप्रत्य-याऽऽक्षिप्तप्रकृत्यंशं प्रति श्रितादीनां विशेषणत्वेन प्राप्ततदन्तविधेर्निषे-धार्थत्वात् । अतएव 'खट्वाक्षेपे' इत्यादि चरितार्थम् । अन्यथा 'सुबन्तो यः खट्वा शब्द'इत्यर्थेऽसम्भवः स्यात् । एतेन 'सम्बुध्यन्तमेवोदाहर्त्तव्य'-मिति कैयटाद्युक्तं, 'टाबन्तमपी'ति नव्योक्तं च परास्तम् । मदुक्तरीत्या सर्वत्र समासस्य सुलभत्वात् । अन्तरङ्गानपी'ति न्यायेन संबुद्धिलोप-हल्ङ्यादिलोपाऽप्राप्तावुक्तरीत्या तत्रापि दोषाऽभावाच्च' ।

१ ख. पाठः । क. ग. नास्ति । २ 'चरितार्थमित्याहु'रिति क. ग. पाठः । ३ ख. पाठः ।

विरामः । भावे घञ् । शब्दानुशासनप्रस्तावादाह—वर्णानामिति । शब्दनित्यत्वे वर्णानामुच्चारणाऽभाव इत्यर्थः । सच स्वभावाद्व्याख्यानाद्वा-किञ्चिद्वर्णोच्चारणाऽनन्तरकालिक एव गृह्यते । प्रदेशा—'वाऽवसाने' इत्यादयः । अभावस्याऽपि बुद्धिकृतपौर्वापर्यमस्त्येव । यथोच्चरितप्रध्वं-सिनां नित्यविभूनां वा वर्णानाम् । परशब्दो नाऽन्यार्थः । अन्यत्वस्या-ऽव्यभिचरितत्वादत आह—अतिशयित इति । अर्द्धमात्राऽतिरिक्त-कालव्यवायेन रहितः । परः किम् ? । अवग्रहे माभूत् । मात्राकालो ह्यवग्रहः । अन्यथा संनिकर्षस्य पुरुषभेदेनाऽव्यवस्थितत्वादत्रापि[1] स स्यात्[2] । ( परग्रहणे तु तत्सामर्थ्यात्–अर्द्धमात्राकालातिरिक्तकालव्यवाया-ऽभावरूपसंनिकर्षस्य ग्रहणान्न दोषः । संनिकर्षश्च क्वचित्पूर्वेण । प्रायः परेण । अतएव'ऽणो प्रगृह्यस्ये'त्यादीनां संहिताकारे पाठः संगच्छते । पूर्वसंनिकर्षमात्रेणैव तत्र तत्प्रवृत्तेः । ध्वनितं चेदं 'विसर्जनीयस्य स' इति सूत्रे भाष्ये इति दिक् । )

( केचित्तु[4] पुरुषभेदेन सन्निकर्षस्याऽव्यवस्थिततया, सूत्रारम्भ-सामर्थ्यादेवोक्तसंनिकर्षलाभे, 'पर'ग्रहणं व्यर्थमेवेत्याहुः ) । संन्निकर्षश्च न संबन्धः, गुणानां परस्परं संयोगसमवाययोरभावात् । ( आशुविना-शित्वाच्च ) 'नित्यविभुद्रव्यता'पक्षेऽपि न । अजसंयोगनिराकरणतात् ।

---

१ 'अत्रापि सत्त्वात् ।' ग. पाठः ।

२ ख. पुस्तके त्वितोऽग्रेऽयं पाठः—'परग्रहणे तु तत्सामर्थ्यात्सर्वाऽपेक्षया न्यूनस्याऽर्द्धमात्राकालव्यवायस्य संनिकर्षस्य ग्रहणान्न दोषः । एतेन परशब्दग्रहणसामर्थ्यात्पूर्वपरयो संनिकर्ष एव संहिताधिकारे पाठः सङ्गच्छत इति । पूर्वसंनिकर्षमात्रेणैव तत्र तत्प्रवृत्तेः । ध्वनितं चेदं 'विसर्जनीयस्य स'इत्यत्रभाष्ये इति दिक् ।' ख. पाठः ।

३ क. ग. पाठः ।

४ ख. पाठः । क. ग. नास्ति ।

५ क. ग. पाठः ।

अत आह—संनिधिरिति । व्यवायाऽभाव इत्यर्थः ।

**सुप्तिङन्तम्** । सुप्प्रत्याहारो, न सप्तमीबहुवचनं । तिङ्साहचर्यात् । स च सुपः पकारेणैव, न कपः । 'स्वादिष्वि'त्यादिग्रहणात् । अन्यथा 'सुप्यसर्वनामस्थाने'इत्येव वदेत् । यद्यपि प्रत्ययाक्षिप्तस्य(स्व)प्रकृत्यवयवकसमुदायस्य सुप्तिङ्भ्यां विशेषणात्सिद्धं तदन्तग्रहणं, तथाऽपि 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति ज्ञापनार्थमन्तग्रहणम् । ( केचित्तु[1] प्रत्ययेन तादृशार्थस्य नियताक्षेपे, आक्षिप्तस्य वा शाब्देऽन्वये मानाऽभावेन, वाचनिक एवायं तदन्तविधिः । तत्र वाचनिकत्वमेव युक्तम् । अन्यथा'वनोरच'त्यादि समासप्रत्ययविधावस्यापि स निषेधः स्यात् । मम तु सौत्रस्यैव स निषेध इत्याहुः ) ।

नच ज्ञापितेऽपि फलाभावः, प्रत्यययोरेव पदसंज्ञायामपि, पदप्रदेशेषु प्रत्ययग्रहणपरिभाषया तदन्तग्रहणाऽसम्भवात् । 'यस्मिन् ज्ञापिते यस्य चारितार्थ्यं तत्तेन ज्ञाप्य'मिति सिद्धान्तादिति वाच्यम् । पदसंज्ञायाः 'स्वादिष्वसर्वनामस्थान'इति प्रकृतिसाधारणतया, पदग्रहणे प्रत्ययग्रहणस्यैवाऽभावात् । अत्र सूत्रे 'प्रत्ययग्रहणे यस्मात्स विहित'- इत्यंशस्तु प्रवर्त्तत एव तेन नाऽतिप्रसङ्गः । 'यस्मात्प्रत्ययविधि'रित्याद्यनुवृत्तेर्वा । ज्ञापनफलं तु 'तरप्तमपौघ'इति सूत्रेण तरप्तमयोरेव संज्ञा, न तदन्तस्य । तेन 'गौरी ब्राह्मणितरे'त्यत्र न ह्रस्वः । विहितांऽशोपस्थितिफलन्तु पदसमुदायस्य पदत्वाऽभावः । 'हरिषु'इत्यादौ सोः पदत्वाऽभावश्च । पदत्वे हि 'सात्पदाद्यो'रिति षत्वनिषेधः स्यात् । नच केवलस्य सुपो न तदन्तत्वं, व्यपदेशिवद्भावेन सुलभत्वात् । यस्माद्विहित स्तदादित्वन्तु न तेन लभ्यम् । ( अ[2]शास्त्रीयत्वात् । ) 'व्यतिसे' इत्यादौ [3]प्रत्ययमात्रस्य पदत्वन्तु 'अस् से' इत्यवस्थायां प्रकृति-प्रत्ययसमुदाये प्रागेव प्रवृत्तं, स्थानिवद्भावेन बोध्यम् । 'रामा'वित्यादावप्येकदेशविकृत-

१ ख. नास्ति । क. ग. पाठः । २ ख. नास्ति ।

३ 'इत्यादौ 'से' इति प्रत्ययमात्रस्य' ख. पाठः ।

न्यायेनैव पदत्वम् । एकादेशात्प्रागेव पदत्वप्रवृत्तेः । नत्वेकादेशे कृतेऽस्य प्राप्तिरस्ति । उभयत आश्रयणेऽन्तादिवत्त्वविरहात् । स्थानिवद्भावेनाऽपिनाऽस्य सुबन्तत्वम् । यस्माद्विहितस्तदादित्वस्याऽशास्त्रीयत्वेनाऽतिदेष्टुमशक्यत्वात् । ईदृशे विषये लक्ष्याऽऽनुरोधाद्यथोद्देशपक्ष एवाऽऽश्रीयते । कार्यकालपक्षे तु 'व्यतिसे' इत्यादौ षत्वनिषेधैकवाक्यतापन्ना संज्ञा दुर्लभेति प्राञ्चः ।

केचि[1]त्तुकार्यकालपक्षो नाम'कार्यप्रवृत्तिसमये कार्यविधायकैकवाक्यतापन्नस्य संज्ञाविधायकस्य प्रवृत्ति'रित्येव । 'सा चोपदेशे नैवे'त्यत्र संकोचे न किञ्चिन्मानम् । अतिदेशवाक्यस्याऽप्येकवाक्यताया: सुवचत्वात् । (सा[2] चेत्थं–'सुप्तिङन्तं पदसंज्ञं, तदादेशश्च तद्वत्पदं, तस्य पदस्यादेः सस्य षत्वं ने'ति । ) 'दिवः कर्म च' 'गतिबुद्धि' 'कर्त्तुरीप्सिततम'मित्यादीनामनेकेषां 'कर्मणि द्वितीये'त्यादिभिरेकवाक्यताया दृष्ट[3]त्वात् ।

( किञ्चैक[4]देशविकृतन्यायेनाऽशास्त्रीयमप्यतिदिश्यते इति वक्ष्यते । एवञ्च 'रामा'वित्यादौ कार्यकाल पक्षेपि न दोषः ) ।

किञ्च[5] 'व्यतिसे' इत्यादौ यतः प्रत्ययविधिस्तदादित्वमपि व्यपदेशिवद्भावेन सुल[6]भम् । नहि 'तेन शास्त्रीयस्यैवाऽतिदेश' इति वक्तुं युक्तम् । एकाच्त्वादेरतिदेशाऽनापत्तेः । तस्य लोकन्यायसिद्धताया भगवतोक्तत्वाच्च । 'विशिष्टोऽपदेशो व्यवहारो यस्य समुदायस्य तद्व्यवहारा एकस्मिन्नपि कर्त्तव्या' इति तदर्थः । ( 'समु[7]दाये दृष्टाः शब्दा

---

१ 'यत्तु' ख. पाठः । २ क. ग. पाठः ।

३ इतोऽग्रे–'इति । तन्न । अतिदेशेन हि पूर्वसंज्ञाया आरोपमात्रम् । सा च स्वरादिविध्येकवाक्यतापन्ना । तस्या आरोपेऽपि षत्वनिषेधस्य दुर्लभत्वा दित्याहुः।' इति ख. पाठः । ४ क. ग. पाठः ।

५ क. ग. पाठः । ख. पुस्तके तु 'किंचे'त्यस्य स्थाने 'वस्तुतस्तु' इति पाठः ।

६ 'सुलभमितिकार्यकालपक्षेऽपि न दोषः ।' ख. पाठः । ७ ख. पाठः ।

अवयवे वर्त्तन्ते' इति तत्र तत्र भाष्योक्तेश्च )। अतएव प्रत्ययान्तत्वप्रयुक्त-प्रातिपदिकसंज्ञानिषेधस्तस्य सिद्ध्यति। सति हि प्रातिपदिकत्वे औत्सर्गिक प्रथमैकवचनाऽऽपत्तिः[1]।

ध्वनितं चेदमर्थवत्सूत्रे भाष्ये। तत्र हि प्रत्ययपर्युदासः पृथग् नोक्तः। नचैवं 'यस्माद्विहित'इत्यत्र विहितत्वांऽशनिवेशो व्यर्थः। अधिकव्या-वृत्त्यर्थत्वात्। अत एव 'देवदत्तश्चिकीर्षतो'त्यादौ देवादेर्न सनन्तत्वादि-प्रयुक्तधातुत्वादीति स्पष्टमङ्गसंज्ञासूत्रे भाष्ये। [[2]स्पष्टं चाऽधिकमात्र-व्यावृत्त्यर्थत्वमस्याऽनुपसर्जनादित्यत्र कैयटेनोक्तम्।

नचाऽवयवधर्मस्य समुदायेऽप्यारोपसम्भवे तत्राऽपि धातुत्वादि दुर्वारम्। तादृशाऽऽरोपस्य लोके बहुशोऽदृष्टत्वात्। तदादिग्रहणपरि-भाषायां विहितत्वांऽशनिवेशाच्च। न च तेन 'तदंशे व्यपदेशिवद्भावादि-ने'त्येव ज्ञाप्यताम्। 'सात्पदाद्योरि'ति 'साति' ग्रहणेनाऽवयवे तत्प्रवृत्त्य-ङ्गीकारात्। अतएव 'व्यपदेशिवदेकस्मि'न्नित्येव पठन्ति।

किञ्च प्रत्ययग्रहणे स्वाऽऽक्षिप्तस्वप्रकृत्यवयवकसमुदायस्य विशेष्य-त्वात्तदन्तविधौ तन्मूलकाऽतिप्रसङ्गनिवारणाय कृतया 'प्रत्ययग्रहणे'इति परिभाषयाऽधिकव्यावृत्तिरेव युक्तेत्यन्यार्थकल्पने मानाऽभावः। अत एव 'रदाभ्या'मित्यादौ 'प्रत्ययग्रहणं चाऽपञ्चम्या' इति तदन्तविधिनिषेधे'नास्याः प्रवृत्तिः] अतएवाऽस्याऽपत्यमित्यादौ तद्धितान्तत्वप्रयुक्तप्रातिपदिकत्व-सिद्धिः कार्यकालपक्षेऽपि। ('अततेर्डः अ'इत्यत्र कृदन्तत्वनिमित्तक प्रातिप-दिकत्व सिद्धिश्च। 'इयन्मात्र'मित्यत्र' वत्वन्तात्स्वार्थे'इति मात्रच्सिद्धिश्च)। नचैवं 'हरिषु'इत्यादौ सोरपि पदत्वे षत्वाऽनापत्तिः [3]'हलिसर्वेषा'मित्यादि

---

१. इतोऽग्रे–'करोषी'त्यादौ फिट्स्वराऽऽपत्तिश्च। सिपः पित्त्वन्तु 'सार्वधा-तुकमपि' दित्यर्थं।' ख. पाठः।

२ [] एतदन्तर्गतः पाठः क. ग. नास्ति। ख. पाठोऽयम्।

३ क. ग. पाठः।

निर्देशैस्तादृशाऽऽरोपेण क्वचित्कार्याऽप्रवृत्तिज्ञापनात्[1] ।

( यद्वा[2]—'व्यपदेशिवदेकस्मि'न्नित्युक्तेरीदृशे स्थले व्यपदेशिवद्भावो नास्त्येव । 'निजौ चत्वार एकाच' इति भाष्यन्त्वभ्युपेत्यवादेन । अत्र पक्षे 'हरिस्वि'त्यादौ सोः प्रातिपदिकत्वं यथा न, तथा वक्ष्यते ) ।

तस्माद्यथोक्तमेव साधु, भाष्यसंमतं[3] चेति वदन्ति । वाचकतासंबन्धेन पदशब्दवत्त्वमेव पदत्वव्यवहारप्रयोजकमिति नाऽननुगमः ।

हलोऽनन्तराः ।

['गर्गाः[4] शतं दण्ड्यन्ता'मित्यत्र समुदाये शतदण्डनवदत्र समुदायस्यैव संज्ञा, न प्रत्येकम् । अत एव 'सुदृषद्भाती'त्यत्र संयोगान्तलोपो न । न च 'संयोगावन्तौ यस्ये'ति भाष्योक्तरीत्या निर्वाहः । नानाविधक्लिष्ट-कल्पनामाश्रित्य, श्रुताऽनन्तरा इत्यस्योपलक्षणतामाश्रित्य च प्रत्येक-संज्ञाकल्पने फलाऽभावात् । ध्वनितं चेदं प्रत्येकं संज्ञापक्षे दोषानुद्धृत्य, पुनर्यदि वृद्धिसंज्ञायां 'प्रत्येक'मित्युच्यते, इहापि 'सह' ग्रहणं कार्यम् । ब्राह्मणभोजनन्यायात्तत्र तदकरणे, गर्गदण्डनन्यायेनेहाऽप्येतन्न कार्य' मित्युपसंहारभाष्येण ।

---

१ इतोऽग्रे–'किञ्च तदन्तविधिसूत्रे 'स्वस्य चे'त्यनुवर्त्तयतां, 'तस्यचे'ति वचनं कुर्वतां वार्त्तिककृतां च मते 'हरिषु'इत्यादौ सुपः पदत्ववारणाय ज्ञापकमा-वश्यकम् । तदन्तविध्यङ्गभूतप्रत्ययग्रहणपरिभाषाया अयोग्यतया'स्वस्य चे'त्यंशेऽप्रवृत्त्या विहितत्वांशनिवेशाऽभावात् । नच तत्परिभाषायाः सामर्थ्येन प्रत्ययांऽशे 'तस्य चे'त्यंशाऽप्रवृत्तिरेवेति वाच्यम् । अधिकव्या-वृत्त्या चारितार्थ्यात् । सातिग्रहणवैयर्थ्याऽऽपत्तेश्च ।

तदर्थे'मर्थव'त्सूत्रेऽप्रत्यय इत्यावर्त्य व्याख्याने विपरीतं गौरवम् । अतएवाऽस्याऽपत्यं 'इ'रित्यतो यूनि'यञिञोश्चे'ति फक् सिद्धिः' । ख. पाठः ।

२ क. ग. पाठः । ३ 'भाष्यसंमतं चेति दिक्' ख. पाठः ।

४ क. ग. पाठः ।

यत्तु 'संयुज्यन्ते वर्णा यत्र समुदाये इत्यन्वर्थसंज्ञाविरोधान्न प्रत्येकं सञ्ज्ञे'ति। तन्न। तदाश्रयणे 'घटपटौ संयुज्येते यत्रे'त्यादौ संयोगानुपयोगि-प्रतियोग्यतिरिक्तस्यैवान्यपदार्थतया प्रतीतेर्व्युत्पन्नत्वेन, तद्व्यतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य संज्ञापत्तावनिष्टापत्तेः। तस्मान्महासंज्ञाकरणं प्राचामनुरोधेनेत्येव न्यायः। अत एव भगवता गर्गदण्डनन्यायाश्रयणेन 'सह' ग्रहणं प्रत्याख्यातं, नतु महासञ्ज्ञयेति दिक्[1]]।

'हल्'इति जातौ बहुवचनम्। तेन द्वयोरपि सिद्ध्यति। अतएव 'शिक्षेत्यादौ 'गुरोश्च हल'इत्यप्रत्ययः।

यत्र तु बहवः श्लिष्टास्तत्र द्वयोर्बहूनां च सा। यदि बहूनामेव स्यात्तर्हि 'गोमान्करोती'त्यादौ मतुपस्तकारस्य संयोगान्तलोपो न स्यात्। अत एव झलि परे संयोगादिलोपविधानं चरितार्थम्। न ह्यन्यथा झलि परे संयोगः संभवति। झल्सहितस्यैव तत्संज्ञाप्रवृत्तेः। (यत्र[2] बहवः श्लिष्टास्तत्र बहूनामपि संयोगत्वे फलं चिन्त्यम्।) आनन्तर्यं = व्यवधानाऽभावः। व्यवधानं च[3] विजातीयेनैव। स्पष्टं चेदमत्रैव भाष्ये इत्याशयेनाह— अज्भिरिति।

हलः किं?। 'तितउ देव'। अत्र 'गुरोरनृत'इति प्लुतः स्यात्।

---

१ 'गर्गाः' इत्यारभ्य दिक्पर्यन्तस्य क. ग. पुस्तकपाठस्य स्थानेऽयं— 'महासंज्ञाकरणं 'संयुज्यन्ते वर्णा अत्रे'त्यन्वर्थलाभार्थम्। तेनाऽत्र समुदायस्यैव संज्ञा, न प्रत्येकम्। अत एव 'सुदृषद्ब्राती'त्यत्र संयोगान्तलोपो न। नच 'संयोगावन्तौ यस्ये'ति भाष्योक्तरीत्या निर्वाहः। प्रयोगनिर्वाहेऽप्यन्वर्थसंज्ञाविरोधेन तत्पक्षोपपत्त्यभावात्। ध्वनितं चेदं प्रत्येकं संज्ञापक्षे दोषानुद्धृत्य' पुन'र्यदि वृद्धिसंज्ञायां प्रत्येक'मित्युच्यते, इहाऽपि 'सह'ग्रहणं कार्यम्। ब्राह्मणभोजनन्यायात्तत्र तदकरणे, गर्गदण्डनन्यायेनेहाऽप्येतन्नकार्य'मित्युपसंहारभाष्येणेति दिक्।'—ख. पाठः।

२ क. ग. पाठः। ३ चकारः ख. पुस्तके नास्ति।

अनन्तरा: किं ?। 'पनसम्' । अत्र हि सकारमकारयोः संयोगत्वे 'स्को'रिति लोपः स्यात् ।

यत्तु 'स्को'रिति सूत्रे 'झल'इति वर्त्तते । तेन झलः परयोः स्कोर्लोप इति नाऽत्र तत्प्राप्ति'रिति । तन्न । 'द्रप्स'मित्यादौ दोषस्य दुर्वारत्वात् । विच्छिन्नत्वे नाऽनुवृत्तौ प्रमाणाऽभावाच्चेत्यन्यत्र विस्तरः ।

**ह्रस्वं लघु** । ननु ह्रस्वप्रदेशेष्वपि लघुसंज्ञयैव व्यवहारोऽस्तु, ह्रस्वसंज्ञा च[2] मास्त्विति चेन्न । ( एक[3]संज्ञाधिकारात् ) गुरुसंज्ञया लघुसंज्ञाया बाधात् 'सर्पिष्ट्व'मित्यादौ 'लघोस्तादा'विति षत्वाऽनापत्तेः । 'अततक्ष'दित्यादौ सन्वद्भावाऽभावार्थन्तु त[4]या तस्याबाध आवश्यकः । 'भेत्ते'त्यादौ गुणस्तु क्नोः कित्त्वसामर्थ्येन भूतपूर्वलघूपधग्रहणात्सुसाधः ।

**इति संज्ञाप्रकरणमिति** । प्रथमाऽध्या[5]यस्थानां सन्धिकार्योपयोगिनीनां संज्ञानां प्रकरणम्-इति = समाप्तमित्यर्थः[6] । तेनाऽऽम्रेडितसंज्ञा-प्रगृह्यसंज्ञा-भसंज्ञाद्यनुपन्यासेऽपि न दोषः ।

'अ अ' इत्याद्युपन्यासस्तु प्रासङ्गिक इत्याहुः ।

॥ इति संज्ञाप्रकरणम् ॥

---

१ इति उत्तरं—महासंज्ञयैवाऽव्यवधानेऽपि लब्धेऽ'नन्तरा'इति चिन्त्य-मिति कश्चित्' । इति ख. पुस्तके पाठः ।

२ 'च' इति ख. नास्ति । ३ ख. पाठः । ४ तया = गुरुसञ्ज्ञया, तस्याः = लघुसञ्ज्ञाया इत्यर्थः । ५ 'प्रथमाध्यायस्थानामष्टाध्यायीस्थ-सूत्रविहितसन्धिकार्योपयोगिनीनाम्' ख. पाठः ।

५ इतोऽग्रे–'लोपसंज्ञा तु नोपन्यस्ता । तस्या अन्वर्थसंज्ञयैवाऽर्थबोधे सिद्धे शक्त्यग्राहकत्वात् । प्रसक्ताऽदर्शनस्यैव लोपसंज्ञा यथा स्यादित्येतदर्थं तदित्यग्रे स्फुटी भविष्यति । तथा च 'संज्ञानामेवेदं प्रकरण' मित्यर्थो, न तु 'संज्ञानामिदमेवप्रकरण'मिति बोध्यम् ।' क. कुण्डलितः पाठः । ग. पुस्तके नास्त्येव । ख. तु दृश्यते ।

इको गुणवृद्धी। अयं नाऽधिकारः, तथा सतीको गुणवृद्धी नेति नञा संयुज्यैव पठेत्, सर्वस्य द्वे इत्यादिवत्। नह्युत्तरसूत्रोपस्थितिकत्वाऽविशेषे[१] किञ्चित्संयुज्य, किञ्चिद्विभज्य पठितुं युक्तम्। प्रत्ययः परश्चे त्यादौ तु पारार्थ्याविशेषेऽपि विधेयभेदाद्युक्त एव विभागः[२]। 'एकाचो द्वे' 'अजादे' रित्यादावुद्देश्यभेदाद्यथा। नाऽपि विधिः। तत्तद्विधीनां वैयर्थ्याऽऽपत्तेः। पूर्वोत्तरसाहचर्येण परशास्त्रोपकारकत्वस्य निर्णयाच्च। तस्मात्परिभाषेयम्।

गुणवृद्धिशब्दाभ्यामिति। गुणवृद्धिग्रहणाऽनुवृत्त्यैव सिद्धे गुणवृद्धिग्रहणसामर्थ्यादिति भावः। अनुवर्त्तमानं च संज्ञिपरमेव स्यात्। संज्ञाकरणेनाऽन्यत्र संज्ञिपरत्वात्। ([३]वस्तुतस्त्वर्थोऽधिकाराऽत्तस्य शब्दपरता वक्तुं शक्या। किञ्च) लक्षणप्रतिपदोक्तपरिभाषया 'विभाषादिक् समासे' इति सूत्रे दिक्शब्दमुच्चार्य विहितस्य समासस्य यथा ग्रहणमेवं प्रकृतेपि गुणवृद्धिशब्दोपस्थितगुणवृद्ध्योर्ग्रहणमित्यनुवृत्त्यैव सिद्धे, गुणवृद्धिग्रहणं व्यर्थम्[४]। नच वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिः। अत एव 'ह्रस्व नद्याप' इत्यादेः 'श्रीपाणां कुलाना' मित्यादौ प्रवृत्तिरिति वाच्यम्। तत्राऽप्रवृत्तिज्ञापकेन प्रतिपदोक्तपरिभाषाऽनित्यत्वस्यैव ज्ञापनात्[५]। ध्वनितं चेद'मो'त्सूत्रे भाष्ये ([६]इति चेन्न स्पष्टार्थत्वात्)। तेन 'त्यदादीनामः' 'दिव औ'दित्यादौ नाऽस्योपस्थानम्।

ननु 'गुणवृद्धी इकः स्थाने स्त' इत्येवाऽर्थोऽस्तु। अलोऽन्त्यपरिभाषाशेषा चेयम्। तत्र 'सार्वधातुकार्द्धधातुकयो'रित्यत्राऽऽङ्गस्य[७] सार्वधातु-

---

१ 'पस्थितिकत्वाऽविशेषेऽपि' ख. पाठः। २ 'योगविभागः' इति ख. पाठः।

३ क. पुस्तके कुण्डलितः पाठः। ग. पुस्तके नास्ति।

४ 'ग्रहणं चिन्त्यप्रयोजनम्' ख. पाठः।

५ इतोग्रे–'अर्थोऽधिकारप्रतिपदोक्तपरिभाषाऽनित्यत्वज्ञापकमिति तत्त्वम्'। ख. पाठः। क. पुस्तके तु कुण्डलितः। ६ क. ग. पाठः। खे. तु नास्ति।

७ 'सार्वधातुकार्द्धधातुकयोर्गुणो भवतीत्यन्तवाक्यार्थे'ति ग. पुस्तके पाठः।

कार्द्धधातुकयोर्गुणो भवती'त्यवान्तरवाक्यार्थबोधोत्तरं, स्वस्वनिमित्तवशात् 'गुणवृद्धी इकः स्थाने स्तः', 'षष्ठीनिर्दिष्टान्त्याऽऽदेश' इत्यर्थकं परिभाषाद्वयमुपस्थितं, तदेकवाक्यतया महावाक्यार्थप्रतिपादने विशेष्यविशेषणभावे कामचारेण, यद्यङ्गस्येति पूर्वमेवाऽन्त्यमलं नीयते-'अङ्गाऽन्त्यस्य गुण'इति, ततोऽङ्गान्त्यस्येको,ऽनिकश्च गुणे[1] प्राप्ते, 'इक एवे'ति नियमाय-पश्चादिकाऽन्त्यो विशेष्यते, तदेकपरिभाषा शेषभूता, विशेषणत्वात् । यदि पूर्वमिकाऽङ्गस्य विशेषणेन 'इगन्तस्याऽङ्गस्ये'त्यर्थः । स च भवन्नलोऽन्त्यस्येति, तदेयं तस्याः शेषः । न चाऽलोन्त्यपरिभाषायाः स्थानषष्ठीनिमित्तत्वेनाऽवान्तरवाक्यार्थबोधोत्तरं 'प्रवृत्त्या बहिरङ्गत्वम् । इयं तु पदार्थोपस्थितिमात्रनिमित्तिकाऽन्तरङ्गा । अस्यां स्थानषष्ठ्या लिङ्गत्वे मानाऽभावादिति वाच्यम् । विहितगुणवृद्धयोः, स्थानिनियममात्रार्थत्वेनाऽस्या अप्यवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्तेरिति[2] चेन्न ।

एवं हि 'मिदेर्गुण'इत्यादाविक्परिभाषाऽलोन्त्यपरिभाषयोः परस्परविरोधात्त्यागे सर्वाऽऽदेशो गुणः स्यात् । अस्याश्च तदविरोधेन 'सार्वधातुकार्द्धधातुकयो'रित्यादिरवकाशः ।

स्यादेतत् । 'मिद इः' 'लघ्वी उपधा' 'पुकि अन्त'इति भाष्योक्तरीत्या[3] निर्वाहः । नच 'यापयती'त्यादौ गुणाऽऽपत्तिः । सन्निपातपरिभाषया

---

१ 'गुणादौ' ख. पाठः ।

२ 'अप्यवान्तर्वाक्यार्थबोधोत्तर मेव प्रवृत्तिः । इकोगुणवृद्धी इत्यस्य प्रागुक्ताऽर्थबोधकाले सार्वधातुकार्द्धधातुकयोरित्यादीनामप्यवान्तरवाक्यार्थोत्पत्तौ बाधकाऽभावेन परिभाषाद्वयस्याऽपि समत्वाच्चेति चेन्न' । ख. पुस्तके पाठः ।

३ 'भाष्याद्यक्तरीत्या' ख. पाठः ।

वारणात्। नच 'क्ष्मोपयती'त्यत्र दोषः[1][2]। पुकी'त्यस्य विवक्षितसप्तमीत्वेनाऽदोषात्[3]।

न च वार्णादाङ्गस्य बलीयस्त्वाद्यलोपं बाधित्वा यस्य गुणाऽऽपत्तिरिति वाच्यम्। व्याश्रयत्वात्।

ननु 'वार्णादाङ्ग'मिति परिभाषा समानकार्यिकत्वरूपसमानाश्रये इत्येव धर्मिग्राहकमानेन लभ्यते। तथाहि—'अभ्यासस्याऽसवर्णे' इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणं हि तज्ज्ञापकम्। तद्धीषतुरित्यादावियङ्व्यावृत्त्यर्थम्। एतत्परिभाषाऽभावे तु तद्वृत्त्यर्थम्। 'ईषतु'रित्यादावन्तरङ्गेण सवर्णदीर्घेण बाधात्। इयङुवङौ हि अङ्ग-संज्ञाऽभ्यास-संज्ञाऽपेक्षत्वाद्बहिरङ्गौ। नचेयङपवादः। 'येन नाऽप्राप्तिन्यायेने'यर्त्तीत्यादिसकललक्ष्यप्राप्तयणपवादत्वस्यैव निर्णयात्।

ननु 'इयेषे'त्यत्रापि तर्हि पूर्वप्रवृत्तगुणस्य, 'इयाये'त्यत्र पूर्वप्रवृत्तवृद्धेश्च 'द्विर्वचनेऽची'ति रूपाऽतिदेशेनाऽपहारे, द्वित्वे च कृते, पुनः प्राप्ते गुणवृद्धी बाधित्वाऽन्तरङ्गत्वात्सवर्णदीर्घाऽऽपत्तिः।

अथाऽ'भ्यासस्ये'तिसूत्राऽऽरम्भसामर्थ्यान्न दीर्घः। नचेयर्त्तीत्यादौ चारितार्थ्यम्। तावन्मात्रप्रयोजनकत्वे हि[4]—

उरित्येव ब्रूयात्। 'य्वो'रित्यनुवर्त्तते 'इणो य'णितिसाहचर्या-

---

१ 'क्ष्मापयतीत्यादौ' ख. पाठः।

२ एतदग्रे—'पूर्वं पूर्व'मिति पक्षे यलोपस्याऽसिद्धत्वात्'—इति ख. पाठः।

३ 'अदोषाच्च' ख. पाठः।

४ तावन्मात्रप्रयोजनकत्वे हि—अभ्यासस्यार्त्तावित्येव ब्रूयात्। नच श्तिपानिर्देशाद्यङ्लुकि न स्यात्। अभ्यासग्रहणसामर्थ्येनाऽदोषात्। अर्ति इयर्त्तीत्यादौ तु प्रत्यासत्त्या स्थाननिमित्तयोरेकाङ्गपऽत्त्वे एव तत्प्रवृत्त्याऽदोषात्। 'अभ्यासस्याऽर्त्ते'रितिन्यासे दोषाऽभावाच्च। यद्वा—'उरित्येवब्रूयात्—ख. पाठः।

द्व्याख्यानाच्च ऋधातोरेव ग्रहणम् । अर्तेरिवर्णस्येयङित्यर्थः । ( अभ्यासस्यार्त्ता' विति तु गुरुत्वान्न युक्तम् । एव 'मभ्यासस्यार्त्ते' रिति च । )

नच 'ए' 'ऐ' 'ओ' 'औ' शब्देभ्य आचारक्विबन्तेभ्यो लिटि इयङाद्यर्थम'भ्यासस्ये'ति सूत्रमावश्यकम् । तथा ओणृधातोर्ण्वुलन्तादिच्छाक्यजन्तात्सनि 'उवोणकोयिषती' त्याद्यर्थमप्यावश्यकमिति वाच्यम् । षष्ठाऽध्यायप्रथमाऽह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानादिति चेन्न ।

एवं तर्हि ( इयेषे त्यत्रैव ) ईषतुरित्यत्राऽपि सवर्णदीर्घबाधः स्यादिति तत्रेयङादिवारणार्थमसवर्णग्रहणमावश्यकमितिचेत् । सत्यम् । एवं तर्हि संपूर्णसूत्रमेव तदर्थज्ञापकमस्तु । यद्यपि भाष्ये 'यदयमभ्यासस्याऽसवर्णे इत्यसवर्णग्रहणं करोती'त्यनेनाऽसवर्ण-ग्रहणस्यैव ज्ञापकता लभ्यते, तथापि 'नह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवती'ति तदुपपादनग्रन्थेन संपूर्णसूत्रस्यैव ज्ञापकता लभ्यते । (तदग्रे च 'नैतदस्ति ज्ञापक 'मित्युक्त्वा अस्त्यर्थमेतत्स्या'दित्यनेन सूत्रसार्थक्यं दर्शितम् । असवर्णग्रहणस्यैव ज्ञापकत्वे तद्वैयर्थ्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात् । )

नन्वकृतव्यूहपरिभाषया 'इयेषे'त्यादौ सवर्णदीर्घाऽप्राप्तिः । 'यदि दीर्घो न स्यात्तर्हि गुणः स्या'दिति संभावनायाः सत्त्वेन परिभाषाप्रवृत्तेः सूपपादत्वात्–इति कथं संपूर्णसूत्रस्य ज्ञापकतेति चेन्न । भाष्यप्रामाण्येन,

---

१ क. ग. पाठः ।

२ 'तथेति' ख. पुस्तके नास्ति ।

३ 'अनभिधानात् । अभ्यासस्येत्यत्राऽचिश्न्वित्यतो धातुग्रहणाऽनुवृत्त्याऽभ्यासेन धात्वाक्षेपेण च धातावेव धातौ, न तु नामधाता'विति व्याख्यानाद्वाऽदोष इति चेन्न ।' ख. पाठः । क. ग. नास्ति ।

४ क. ग. पाठः ।

५ ख. नास्ति ।

६ सूपपादत्वात् । न च तेनैव न्यायेन गुणस्याऽप्यप्राप्तिर्दीर्घसंभावनायाः सत्त्वादिति वाच्यम् । बहिरङ्गकृतनिमित्तविनाशस्यैव परिभाषाप्रवृत्तिनिमित्तत्वात् । नचैवमपि गुणवृद्ध्योः कृतयोः, स्थानिवद्भावेन

धर्मिग्राहकमानेन चाऽन्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव यत्र तन्निमित्तविनाशकबहिरङ्गविधेः प्राप्तिस्तत्रैव तत्परिभाषाप्रवृत्तिस्वीकारेणेहाऽप्राप्तेः ( तस्या असत्त्वाच्च )। अन्यथा तवाप्यसवर्णग्रहणाऽभावे 'ईषतु'-रित्यत्रेयङः सम्भावनासत्त्वेनाऽकृतव्यूहपरिभाषया दीर्घाऽप्राप्ताविय़ङादिव्यावृत्त्यर्थमसवर्णग्रहणं चरितार्थमिति, तस्याऽपि कथं ज्ञापकत्वं स्यात्।

नचाऽन्तरङ्गत्वाद्दीर्घेऽपि 'इयाये'त्यादौ पूर्वान्तवत्त्वेनाऽभ्यासत्वादिवर्णत्वाच्च णल्यसवर्णे इयङ्विधानेन सूत्रं चरितार्थम्। नचा'ऽचिश्नु' इत्यनेन सिद्धिः। वृद्धिबाधनार्थत्वादिति वाच्यम्। ( प्रत्यासत्त्याऽसवर्णपदेनाऽभ्यासोत्तरखण्डसम्बन्ध्यसवर्णाऽच एव ग्रहणात्। शास्त्रबाधकल्पनाऽपेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्च। एवं चेदमेवज्ञापयति–'वार्णादाङ्गं बलीय' इति। एवञ्च'इयाय इयेषे'त्यादौ सवर्णदीर्घं बाधित्वा गुणादावियङ् सिद्धिः। यदि तु समानर्निमित्तकत्वरूपसमानाश्रयत्वे एवाऽस्याः प्रवृत्तिःस्यात्तदा ज्ञापितेऽपि तदसिद्धिः। सूत्रवैयर्थ्यं च तदवस्थमेव[3] )।

---

दीर्घो दुर्वारः। दीर्घस्य पूर्वपरविधित्वेन तत्र कार्ये–स्थानिवत्त्वाऽप्रवृत्तिरिति कथं संपूर्णसूत्रस्य'–ख. पाठः।

१ क. ग. पाठः। ख. नास्ति। २ क. ग. पाठः। ख. तु नास्ति।

३ ख. पुस्तके तु (एतदन्तर्गतस्य क. ग. पाठस्य) स्थाने 'अचः परस्मि'न्निति स्थानिवत्त्वेन तदप्रवृत्तेः। स्थानिभूतादचः पूर्वसम्बन्धिविधौ हि सः। सम्बन्धश्च पूर्वधर्मावच्छिन्नोद्देश्यकत्वम्। स्थानिभूतादचः पूर्वोऽस्थानिभूत एव गृह्यत इत्यत्र न मानम्। तक्रकौण्डिन्यन्यायाऽनित्यत्वात्। तत्र च सूत्रेऽभावातिदेशोऽपि वक्ष्यते। स्पष्टं चेदं सर्वं 'कृदतिङ्'सूत्रे भाष्ये इति निरूपितम्भाष्यप्रदीपोद्योते।

न चाऽत्र न समानाश्रयत्वमिति भ्रमितव्यम्। अभ्यासेवर्णस्य सवर्णदीर्घेयङौ प्रति स्थानितया, ततः परस्यैव निमित्ततया तत्त्वाक्षतेः।

'स्योन' इत्यत्र तु न प्रत्यय इव बाहुलकाद्यणादेशः। नचैवमपि इयायेत्यादावियङ् दुर्लभः। तत्र कर्त्तव्ये वृद्ध्यादेः स्थानिवत्त्वेनाऽसवर्णे इति प्रतिषेधादिति वाच्यम्। सूत्राऽऽरम्भसामर्थ्यादेव स्थानिवत्त्वाऽप्रवृत्तेः। तच्च ज्ञापकं सामान्याऽपेक्षम्—अभ्यासस्य कार्ये तदुत्तरखण्डाऽऽदेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्वं नेति। अत एवाऽऽरतीत्यादौ यणादेशस्य स्थानिवत्त्वादभ्यासस्य ('ढ्लोपे' इति दीर्घो दुर्लभ इत्यपास्तम्। दीर्घविधौ तन्निषेधाच्च। 'अरियिया' दित्यत्र च स्थानिवत्त्वेनेयङ् भवत्येव। तस्याऽभ्यास) कार्यप्रतिबन्धकत्वाऽभावात्। (किञ्च) अङ्गस्य 'आडजादीनां''शृदृप्रां ह्रस्वो वा''उपसर्गाद्ध्रस्व ऊहते'रित्यादिसूत्रस्थकैयटादिप्रामाण्यात् ("सामान्येन च वार्णादाङ्गं बलवदित्याश्रीयते न समानाश्रयाङ्गवर्णविषय" मित्य'जादेर्द्वितीयस्ये'ति सूत्रे कण्ठतः कैयटोक्तेश्च) षाष्ठप्रथमाऽऽह्निकान्ते भाष्येऽस्याः परिभाषायाः प्रयोजनाना'मियाये'त्यादीनां व्याश्रयसाधारणानामुपन्यासाच्च न समाननिमित्तकत्वरूपसमानाश्रयत्वे एवाऽस्याः प्रवृत्तिरिति नियमः। समानकार्यिकत्वमात्रन्त्वाश्रीयते।

यत्र त्वप्रवृत्तिरिष्टा, तदर्थमनित्यत्वमाश्रयणीयम्। तत्र प्रमाणं च 'च्छ्वोः शू'डिति सूत्रस्य सतुक्कनिर्देश एव। (इयं चाङ्गसम्बन्धिन्याङ्ग एवेति 'स्वरितो वे'ति सूत्रे भाष्ये स्पष्टम्। तत्र हि 'कुमार्यै'इत्यादौ यणुत्तरमाट् दर्शितः। एवञ्च 'क्ष्मापयती'त्यत्रानयापरिभाषया लोपं बाधित्वा गुणो

---

सा च ज्ञाप्यमाना आङ्गवर्णयोः समानाश्रयत्वे, युगपत्प्राप्तावेव च प्रवर्त्तते। ज्ञापकस्य सजातीयाऽपेक्षत्वात्'। अयं ख. पाठः।

१ 'न चैवमपि असवर्णग्रहणे कृते इयायेत्यादा' ख. पाठः।

२ क. ग. पाठः। ख. तु नास्ति। ३ क. ग. पाठः।

४ क. ग. पाठः। ५ '–समानाश्रयत्वादावस्याः' ख. पाठः।

६ क. ग. पाठः। ख. नास्ति।

दुर्वार इति चेन्न। लघूपधसाहचर्येण पुक्यन्तस्याऽच एव ग्रहणादितिचेत्। अत्राहुः-(क्ष्मापयनिर्वेन्) 'क्नोपयती'त्यादौ गुणाऽनापत्तेः। किञ्च तच्छेष-पक्षे लघूपधांऽशे इक्परिभाषाऽनुपस्थितावनिग्लक्षणत्वा 'द्भिन्न'मित्यादौ गुण-निषेधाऽनापत्तिः। क्नोः कित्वस्याऽनिग्लक्षणत्वेऽपि लघूपधगुणनिषेधप्रवृत्ति-ज्ञापत्वाऽऽश्रयणे तु पदोपस्थितिपक्षज्ञापकत्वमेवोचितम्। एवं हि ज्ञापन-मूलकं वाक्याऽन्तरं न कल्प्यमिति लाघवम्।

अपि च 'मृजेर्वृद्धि'रित्यत्राऽच इत्यपकर्षे, 'ऋच्छत्यृता'मित्यत्र ऋकार-प्रश्लेषे, 'ऋदृशोऽङी'त्यादौ योगविभागादिकल्पने च तच्छेषपक्षे विपरीत-गौरवम्। (किञ्च विध्यङ्गत्वात्परिभाषाणां गुणत्वेन, गुणानां च परस्पर-मसंबन्धेन तच्छेषत्वस्योक्तिसंभवाऽभावः। किञ्च परस्परापेक्षावशाद्द्वयोः शेषशेषिभावो भवति। न चैतयोः साऽस्तीतिदिक्।)

न[3] च गुणविधावङ्गस्येति न स्थान षष्ठी। किन्तु इगपेक्षयाऽवयव-षष्ठी। एवं चा'ऽलोन्त्यस्ये'त्यस्य प्राप्तिरेव न। एवं च 'मेद्यतो'त्यादौ न दोष इ[4]ति वाच्यम्। 'सार्वधातुके'ति गुणस्य 'ईहिते'त्यादावप्या-पत्तेः। (जुसिचे'ति गुणस्या'ऽनेनिजु'रित्यादावप्यापत्तेश्च)। तस्मादत्र पदोपस्थितिपक्षः।

तत्र च (विधेयस[5]मर्पक) गुणवृद्धिपदश्रुति[6]र्लिङ्गम् (तदाह— विधीयेते इति। भाष्येऽप्युक्तं) 'गुणो वृद्धिर्भवती'ति यत्र ब्रूयादिति

---

१ क. ग. पाठः। २ ख. नास्ति। क. ग. पाठः।

३ 'न च' इति स्थाने ख. पुस्तके 'एतेन' इति पाठः।

४ 'इत्यपास्तं' ख. पाठः। ५ क. ग. पाठः।

६ क. ग. पाठः।

७ '-पदश्रुतिर्लिङ्गं'। 'विधीयते' इति तु अनुवादे परिभाषोपस्थित्यभावा-न्न्यायसिद्धम्। गुणो वृद्धिर्भवतीति' ख. पाठः।

( तत्र[1] प्रथमाया विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्वनिर्णयः । अत एव गुणादिपपदानामिक्पदोपस्थापनेन चरितार्थानामपि वाक्यार्थोन्वयिता । तदन्वयित्वे उपस्थापकत्वस्यैव भङ्गापत्तेः । 'वृद्धिर्यस्ये' त्यादौ यत्पदसमभिव्यहाराद्विधेयसमर्पकत्वाऽभावनिर्णयः ) ।

न चैव'मचोञ्णिति' 'ओर्गुण' इत्यादौ पदश्रुतिमात्रनिमित्तकेक्परिभाषोपस्थितिर्दुर्वारा । नच निर्दिष्टस्थानिकत्वान्न प्रवृत्तिः । अच इत्यादेः स्थानित्वनिर्णयस्य वाक्यार्थबोधोत्तरकालिकतया पूर्वमभावादिति वाच्यम् ।[2](लिङ्गस्य[3] श्रुत्यपेक्षया दुर्बलत्वेन प्रथमतः श्रौताऽजादिपदार्थघटितवाक्यार्थबोधे निर्दिष्टस्थानिकत्वेनोपस्थितस्यापि तस्य वाक्यार्थानन्वयित्वात् । सार्वधातुकेत्यादौ तु तदुपस्थितिं विना स्थान्याकाङ्क्षाशान्त्यभावेन बोध एव नेत्यन्तरङ्गेयम् । )

तत्र वृत्ते स्थानषष्ठीत्वनिर्णये[4] उपस्थिताऽलोन्त्यपरिभाषाया अन-

---

१ क. ग. पाठः । ख. पुस्तके त्वस्य पाठस्य स्थाने—'गुणा वृद्धिर्भवतीति यत्र ब्रूयादिति भाष्ये 'भवती'त्यप्येवमेव । ध्वनितं चेद 'मचश्चे'ति सूत्रभाष्ये । एतेन 'गुणवृद्धिपदमनुवर्त्य' गुणो वृद्धिरिति ये गुणवृद्धी इति योजनयेदं लभ्यते इति परास्तम् । अनुवृत्तौ, योजनायां च फलाऽभावात् । अन्तरङ्गत्वाऽनापत्तेश्च । अनुवृत्त्या सिद्धेः, सामर्थ्यादिदं शब्दपरमिति वक्तुं युक्तम् ।' इत्ययं पाठः ।

२ 'पूर्वमभावादितिवाच्यम् । लिङ्गेनोपस्थितिसमये वा बाधकाऽभावेनाऽवान्तरवाक्यार्थबोधे श्रौताऽच्पदेनैव स्थान्याकाङ्क्षाशान्तये पुनस्तत्पदैकवाक्यतया सामानाधिकरण्याऽसंभवात्सामानाधिकरण्येन बोधान्तरं कल्प्यते इत्यन्तरङ्गेयम् ।' ख. पाठः ।

३ क. ग. पाठः ।

४ इतोऽग्रे—'इक्पदघटितवाक्यार्थबोधकाले एव उपस्थिताऽलोन्त्य' ख. पाठः ।

न्त्यगुणव्यावृत्तये वाक्यैकवाक्यतया, बोध इति बहिरङ्गा सा । ('अलोन्त्य' सूत्रस्य यत्र स्थानषष्ठी तत्राऽलोन्त्यस्येत्युपतिष्ठते' इत्यर्थेऽपि वाक्येन वाक्यस्यैवैकवाक्यता । )

'मिदेर्गुण' इत्यादाववान्तरवाक्यार्थसमये उपस्थितेकपदेन सामानाधिकरण्याऽसंभवाद्वैयधिकरण्येनाऽन्वये जाते ( स्थानेषष्ठीत्वाऽभावनिर्णयेन न प्रवर्तते । ) तदेतदाह—पदमुपतिष्ठत इति । सूत्रे षष्ठ्यन्ताऽनुकरणाच्छब्दस्वरूपपरतया नपुंसकात्सोर्लुगिति बोध्यम् । ( केचित्तु यत्र गुणवृद्धिपदं तत्रेकामुपस्थितिरित्येव वाक्यार्थः । तत्रेक इति पदे षष्ठ्युपादानात् इकारादयोऽप्युपतिष्ठमाना षष्ठ्यन्ता एवोपतिष्ठन्ते इत्याहुः।

इक इति किम् ? 'एधिते'त्यादौ व्यञ्जनादीनां गुणो मा भूत् । ज्ञापकेनाऽनिष्टवारणे तु प्रतिपत्तिगौरवम् । 'भिन्न'मित्यादौ निषेधप्रवृत्तये इग्लक्षणत्वसम्पत्यर्थमावश्यकत्वाच्च ।

ह्रस्वदीर्घप्लुतशब्दैरिति । 'ऊकाल' इति सूत्रात् 'ह्रस्वदीर्घप्लुत' इति, 'अजिति चाऽनुवर्त्तते इति भावः । फलन्तु 'दिव उत्' 'अष्टन आ विभक्तौ' ( 'युष्मदस्मदोरनादेशे ) इत्यादावेतदनुपस्थितिरिति

---

१ 'वाक्यैकवाक्यतया' पदैकवाक्यतया वा बोध इति बहिरङ्गा सा । तस्याऽपि 'यत्र स्थानषष्ठी तत्राऽलोन्त्यस्येत्युपतिष्ठते' इत्यर्थे पदैकवाक्यतया बोधः' । ख. पाठः ।

२ क. ग. पाठः ।

३ 'जातेऽवान्तरवाक्यार्थबोधकालिकस्थानषष्ठीत्वभ्रमेणेकपदघटितवाक्यार्थबोधकाले उपस्थिताऽप्यलोन्त्यपरिभाषोपजीव्यस्थानषष्ठीत्वाऽभावनिर्णयेन वर्त्तते इति न तद्घटितवाक्यार्थबोधः ।' ख. पाठः । क.ग. नास्ति ।

४ क. ग. पाठः ।

५ क. ग. पाठः ।

६ ख. पाठः । क. ग. नास्ति ।

( [1]'अचो रहाभ्यां द्वे''नाऽचि च' 'आदिन्याक्रोशे पुत्रस्ये'ति वक्तव्ये नञ्द्वयोपादानेन वैयर्थ्यशङ्कायुक्तोत्तरनञ्घटितवाक्यस्य 'नादिनी'त्यस्याऽनित्यत्वकल्पनात्। न च स्त्रीप्रत्ययान्त एवाऽप्रवृत्तिरस्त्विवति वाच्यम्। उदाहरणपरभाष्यविरोधाऽऽपत्तेः )। तद्ध्वनयन्नाह—पुत्रादिनीति।

केचित्तु 'आदिनो'ति ङ्यन्ताऽनुकरणं लुप्तसप्तमीकमित्याहुः। अत एव 'तत्परे चे'त्यस्याऽऽदिनीशब्दो यस्मात्परस्तत्र परे' इति हरदत्तो व्याख्यानमकृत। 'अद्'धातौ माधवस्वरसोऽप्येवमेव। अत्र[2] मूलेऽपि क्वचित्—'आदिनीशब्दे परे'इत्येव पाठो दृश्यते। नञ्द्वयोपादानन्तु स्पष्टार्थमेव। एतत्सूत्रसाहचर्यादत्रोपसङ्ख्यातत्वाच्च 'वा हते'ति वार्त्तिकमपि स्त्रियामेव। तदाह—पुत्रहतीति। अत एवा'ऽनचि चे'त्यनेन सिद्धे 'वा हते'ति चरितार्थम्। '[3]पुत्रस्य क्तान्ते चेद्धतजग्धयोरेव, आक्रोशे एवे'ति नियमार्थत्वात्।

संयुक्तेष्विति। 'त्रिप्रभृतिषि्व'ति सूत्रे परस्परसाहचर्याद्वर्णानां सजातीयानामेव ग्रहणम्। न च तथाऽचः सम्भवन्ति। अत एवा'ऽचो रहाभ्या'मिति सूत्रं सार्थकमिति भावः। निर्धारणे सप्तमी। 'अच'इत्यनुवर्त्तते। तेन[4] त्रिप्रभृतिसंयुक्तवर्णमध्येऽचः परस्य यरो द्वे वा न स्त इत्यर्थः। तेनेन्द्रः, राष्ट्रमित्यत्र नकार-षकारयोरेव प्राप्तद्वित्वस्य निषेधविकल्पः। स्पष्टंचेदं हरदत्तग्रन्थे।

न चा'ऽनचि चे'त्येव विकल्पे सिद्धे 'त्रिप्रभृतिष्वि'त्यादिसूत्रत्रयं व्यर्थमिति वाच्यम्। विकल्पस्यैव मतभेदप्राप्तव्यवस्थाबोधनार्थत्वात।

एतेन 'शाकटायनग्रहणाऽनुवृत्त्यैव सिद्धावुत्तरसूत्रयोः शाकल्यादिग्रहणं

१ ख. पाठः। क. ग. नास्ति। २ 'अत्र मूलेऽपि क्वचित्' इति ख. नास्ति। क. ग. पाठः। ३ 'नियमार्थत्वात्' इत्यन्तः क. ग.पाठः। ख. पुस्तके तु 'पुत्रस्यक्तान्ते चेद्धतजग्धयोरेवे'ति नियमार्थमित्येके। 'आक्रोश एवे'ति नियमार्थमिति कश्चित्।'— इति पाठः। ४ इत आरभ्य 'इत्यर्थः' इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

ऽयर्थ'मित्यपास्तमिति सूत्राऽऽशयः । ( इदमेव ध्वनयितुमनचीति सूत्रे 'वा'ग्रहणानुवृत्तिर्दर्शिता 'नाज्झला'विति सूत्रे भाष्यादौ । तेन ह्यस्य सूत्रत्रयस्याऽनावश्यकता ध्वनिता ) ।

( यत्तु[2] 'दीर्घादाचार्याणा'मित्यत्राऽऽचार्यग्रहणं पूजार्थम् । 'नित्य एव निषेधो दीर्घात्पर'इति । तन्न । 'वाक्' 'वाक्क्' इति भाष्योदाहरणविरोधाऽऽपत्तेः । न चाऽत्राऽनचीत्यनुवर्त्त्य पर्युदासपरतया 'हली'त्यर्थाद्धलि पर एव नित्यनिषेध इति वाच्यम् । 'सर्वत्र शाकल्यस्ये'तिवदस्यापि प्रपञ्चाऽर्थतयैवोपपत्तौ, माधवादिविरुद्धक्लिष्टशब्दाऽधिकाराऽऽश्रयणे मानाऽभावात् । 'आस्ते'इत्यत्र 'स'द्वित्वविकल्पस्य माधवेनाऽङ्गीकृतत्वात् । पूजाऽर्थतायाः प्रामाणिकैरनुक्तेश्च । 'त्रिप्रभृतिष्वि'त्यत्र शाकटायनग्रहणस्याऽपि तथात्वापत्तौ 'संस्कर्त्ते'त्यत्र त्रिसकारपरकैयटादिग्रन्थविरोधाच्च ।

यत्तु 'नाऽऽदिनी'त्यादौ वृत्तावनचीत्यादिप्राप्तिमुद्भाव्य, 'त्रिप्रभृतिषु' 'सर्वत्रे'त्यनयोः प्राप्तिमनुद्भाव्य, पुन'र्दीर्घादि'त्यत्राऽनचीति प्राप्तिरुद्भाविता हरदत्तेन । तस्याऽयमाशयः–निषेधविकल्पे प्राप्त्युद्भावनं नाऽऽवश्यकं, तद्विकल्पे विधिविकल्पस्य फलितत्वेन विधेरेवाऽप्राप्तविषयविकल्पसम्भवात् । नित्यनिषेधे तु तदुद्भावनमावश्यक'मिति । तन्न ।

विकल्पेऽपि निषेधप्रकरणान्नुल्लेखस्याऽऽवश्यकत्वेन प्राप्त्युद्भावनस्याऽऽवश्यकत्वात् । 'मध्येऽसम्बन्धो, मण्डूकाऽनुवृत्तिरग्रे' इत्यत्र मानाऽभावाच्च । 'सर्वत्रे'ति सूत्रस्य द्वित्वमात्रनिषेधकतेति बोधयितुं तदनुल्लेखाच्च । 'त्रिभृतिष्वि'त्येतद्विषयै नकारषकारयोर्द्विर्वचनाऽभाव'इति मिश्रग्रन्थेन प्राप्त्युल्लेखस्य कृतप्रायत्वाच्च । वृत्ति-हरदत्तयो 'र्नोदिनि' 'शरोची'त्यनयोरपि बहुषु पुस्तकेषु प्राप्त्युल्लेखस्याऽनुपलभ्यमानत्वाच्चेत्यलम् ) ।

---

१　अयं पाठः क. कुण्डलितः । ख. ग. नास्त्येव ।

२　क. कुण्डलितः ख. पाठः । ग. तु नास्ति ।

अचो रहा[1]। 'अच' इति श्रुतत्वाद्रहाभ्यां सम्बध्यते।

'गु[2]णः कृताऽऽत्मसंस्कार' इति न्यायाच्च। 'विधौ परिभाषोपतिष्ठते' इत्यस्याऽनित्यत्वात्, उक्तन्यायाच्च 'तस्मादित्युत्तरस्ये'त्यस्याऽच इत्यंशेऽप्युपस्थितिः। तदाह—**अचः पराभ्यामिति**।

**वा यमीति**। 'झयो ह' इत्यतोऽन्यतरस्यामित्यनुवृत्तेः। भा[3]ष्यसंमताऽष्टाध्यायीपाठे तु 'वाऽवसाने' इत्यतोऽनुवृत्तिर्बोध्या।

अत्र च ज्ञापकं ग्राहकसूत्रस्थाऽणग्रहणम्। तद्धि 'सँय्यन्ते'त्यादावनुनासिकयादीनां द्वित्वाऽर्थम्। लोपस्य नित्यत्वे व्यर्थमेव स्यात्। यद्यपि गुणानामभेदकत्वेनैव साऽनुनासिकानां द्वित्वसिद्धेरज्ग्रहणमेव कर्तुं युक्तं, त[4]थाऽपि यण्विषये गुणभेदकत्वमेवेति ज्ञापयितुमणग्रहणम्। नह्येकेनैकमेव ज्ञाप्यमिति नियमः। अणग्रहणप्रत्याख्यातृवार्त्तिकमते तु व्याख्यानादेव तदनुवृत्तिः। स्पष्टं च 'लणि'ति सूत्रे भाष्ये वैकल्पिकत्वमुक्तम्।

**आदित्य इति**। 'आदित्य'शब्दाद्देवताऽर्थे ण्यः। 'यस्येति चे'

---

१ 'अचो रहा। अचः परस्य रेफहकाराभ्यां परस्य यर' इति वाच्योऽर्थः। न च पृथक् निमित्तता स्यादिति वाच्यम्। चकाराऽभावेन, स्पष्टप्रतिपत्तये 'अचो द्वेऽनचि रहाभ्या'मित्येव न्यासे कर्त्तव्ये, ईदृशन्यासेन ( च ), तदभावकल्पनात्। तत्राऽ'णुरपी'ति न्यायेन विधेयसन्निहितत्वेन 'रहाभ्या'-मित्यत्रैव निर्दिष्टांऽशाऽबाधः। 'अच' इत्यंशे तु सामर्थ्यात्तद्बाधः। व्यवधानश्चोपस्थितरेफहकारकृतमेव गृह्यते, नाऽन्यकृतम्। तदेतत्फलितमाह–अचः पराभ्यामिति। एतेनाऽनुवादे परिभाषाणामनुपस्थितेरिदमनुपपन्नमिति परास्तम्।'—इति ख. पाठः, क. ग. पाठस्थाने।

२ ख. पाठस्थाने क. ग. पाठोऽयम्।

३ इत आरभ्य 'अनुवृत्तिर्बोध्या' इत्यन्तः पाठः ख. नास्ति। क. ग. पाठः।

४ 'तथापि गुणा भेदका' इति पक्षमपि ज्ञापयितुं' ख. पाठः।

त्यल्लोपेऽनेन यलोपः । 'आपत्यस्ये'ति तु न । भवाद्यर्थण्यप्रत्ययान्ताण्ण्ये तदप्राप्तेः[1] । [2]यथासङ्ख्येति । स्थानाख्यप्रमाणेनेत्यर्थः । हल इति किम् ? । शय्या । यमामिति किम् ? आध्नोत् । आर्त्नी । ( [3]आङ्पूर्वादृतेर्बाहुलकान्नि-प्रत्ययः । धनुषः कोटी उच्येते । एतेन 'हलो यरां यरि सवर्णे लोप' इत्येव सूत्रमस्तु, 'झरो झरी'ति च न वक्तव्य'मिति परास्तम् । 'आर्त्निः पीडा-धनुःकोट्यो'रित्यमरे तु नकाररहितः पाठो दृश्यते । 'अर्त्ति'रिति तत्र पाठान्तरम् ) । यमीति किम् ? । रामाभ्याम् ।

**एचोऽय** । 'इचोऽचि यणयवायाव' इति सूत्रयितुमुचितम् । न च 'हूहूयति' 'तोष्टूयते' इत्यादौ 'वान्तो यी'ति यणादेशप्रसङ्गः । 'वान्तौ यि प्रत्यये' इति न्यासेन वारणात् । 'एकवान्तसाहचर्यादपरोऽपि मुख्य-वान्त एव गृह्यते' इति नोक्ताऽतिप्रसङ्ग' इत्यपरे । 'स्वल्पक्लेशोच्चारणयुक्त-कण्ठ्य-तालव्यादेः स्वल्पक्लेशोच्चारणयुक्तः सः । अधिकक्लेशोच्चारण-युक्तस्याऽधिकक्लेशोच्चारणयुक्त' इति स्थानेऽन्तरतमपरिभाषयैव निर्वाहः । एतदेव ध्वनयितुं यथासङ्ख्यसूत्रं नोपन्यस्तम् । क्रमादिति तु फलितार्थ-कथनं बोध्यम् । उदात्तगुणयुक्तानामनुदात्तादिगुणयुक्तव्यावृत्त्यर्थं 'स्थाने-ऽन्तरतम'परिभाषाया आवश्यकत्वाच्च ।

**तस्य लोपः** । 'उपदेशेऽजि'त्यत 'इदि'त्यनुवृत्या, विभक्तिविपरिणा-मेन च सिद्धौ 'तस्य'ग्रहणं सर्वलोपाऽर्थम् । तेन ञिटुडूनामन्त्यस्य लोपो न । 'नाऽनर्थके' इति परिभाषा त्व'लोन्त्यादि'ति सूत्रे भाष्ये प्रत्याख्यातैवेति दिक् ।

**वान्तो ( यि )** । 'येन विधि'रित्यस्याऽपवादभूतया, वाचनिक्या, 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया लभ्यमर्थमाह—**यकारा-**

---

१ 'तदप्राप्तेश्च' ख. पाठः ।

२ 'यथासंङ्ख्येति स्थानाख्यप्रमाणेनेत्यर्थः' इति पाठः । ग. नास्ति ।

३ क. पुस्तके कुण्डलितः ख. पाठः । ग. तु नास्त्येव ।

दाविति । ( 'यान्ते'इत्यर्थे तु गव्यत्यादिभ्यो लिटि, आमि, अतो लोपे, 'गव्याञ्चकारे'त्यादावेव स्यात् । न चाऽ'चः परस्मिन्नि'ति स्थानिवद्भावः । 'येन विधिस्तदन्तस्ये'ति सूत्रप्रवृत्तिसामर्थ्येन श्रुतिकृत-यान्तस्यैव ग्रहणात् । अत एव 'ढकि लोप' इत्यत्र ढकल्पनं सङ्गच्छते । अन्यथा (पं[2] ?) ढकोऽभावे निर्दिष्टपरिभाषाबाधे 'गाङ्गेय-पितृष्वसे'त्यादौ लोपाऽऽपत्तिरित्याहुः ) । ओदौतोरिति । वान्तज्ञानाय पूर्वसूत्रपर्यालोचनस्याऽऽवश्यकतया तत्र तौ प्रति निर्णीतयोरेव स्थानिनोर्ग्रहणादितिभावः ।

भाष्ये[3] तु यथास्थितसूत्रन्यासे 'ओदौतोरिति वक्तव्य'मिति वचनमेवाऽऽश्रितम् । उक्तयुक्तिस्तु शिथिलैव । सूत्रपर्यालोचनेऽपि तदीय-लक्ष्यसंस्कारकवाक्यार्थपर्यालोचने मानाऽभावात् । अन्तरतमपरिभाषा-सहकारेण हि तत्र तयोः स्थानित्वनिर्णयः । ततः प्राक् झटित्युपस्थितेनैच इत्यनेन वाक्यार्थबोधे बाधकाऽभावात् । न च पश्चादन्तरतमपरि-भाषापर्यालोचनया एकारैकारयोस्त्यागः । सप्तम्यन्तपाठस्याऽभावात् । एतदेवाऽभिप्रेत्य 'पूर्वत्र स्थानिविशेषलाभो यथासङ्ख्यसम्बन्धात्, इह तु निमित्ताऽभावात्तल्लाभाऽभाव'इति कैयटेन षष्ठे उक्तम् । न चाऽचीत्य-नुवर्त्त्य'अचि परतो यादृशो वान्त आदेशः पूर्वं दृष्टस्तादृशो यि प्रत्यये भवती'ति सूत्रार्थः । ओस्थानिकश्च अव् , औस्थानिकश्च आव् , तत्र दृष्ट इति वाच्यम् । वाच्यवृत्त्येदृशाऽर्थाऽलाभात् । 'यि प्रत्यये'इति दृष्ट्वाऽचीत्यस्य निवृत्तेश्चेति दिक् । गव्यमिति । भत्वाद्वलोपो न । वान्तः किम् । रैयति । 'यी'ति किम् ? । गोभ्याम् । प्रत्यये किम् ? । गोयानम् ।

गोर्यूताविति । न चा'ऽप्रत्ययकारादौ चेद्यूतावेवे'ति नियमा'द्गोयान-

---

१ क. ग. नास्ति । ख. पाठः ।

२ 'अन्यथाऽत्र ढकोऽभावे' इति, 'अन्यथा पितृष्वसुर्ढकोऽभावे' इति वा अत्र पाठः स्यात् ।

३ इत आरभ्य 'निवृत्तिश्चेति दिक' इत्यन्तोऽयं क. ग. पाठः । ख. नास्ति ।

मि'त्यादिव्यावृत्तौ व्यर्थं सूत्रे प्रत्ययग्रहणमिति वाच्यम् । 'यूतौ चेद्गोशब्द-स्यैव,' 'गोशब्दस्य चेद्यूतावेवे'ति वा विपरीतनियमस्याऽपि सम्भवात् ।

ननु 'गव्यूति'रित्यत्र वस्य 'हलि सर्वेषा'मिति, 'लोपः शाकल्यस्ये'ति वा लोपः स्यादत आह—वान्त इत्यत्रेति । न च विशेषविहितेन कार्यित्वेन निमित्तत्वबाधाद्वकारे 'लोपो व्यो'रिति दुर्लभमिति वाच्यम् । निमित्तत्वाऽनाक्रान्ते विषये कार्यित्वस्य प्रकृते एव चारितार्थ्यात् ।

एवं च 'यादौ प्रत्यये श्रूयमाणवकारान्त आदेश'इत्यर्थः । तत्र यद्यपि सूत्रविषये नाऽस्य फलम् । प्रत्ययेऽस्य प्रवृत्तेः । स हि द्विविधः-कृत्, तद्धितो वा । उभयथाऽपि पूर्वस्य पदत्वाऽभावः । आद्ये तदप्राप्तेः, द्वितीये भत्वेन बाधात् । 'गो'शब्दादिभ्यः क्यचि तु 'नः क्ये'इति नियमात्पूर्वस्य पदत्वमेव न । तथापि वार्त्तिके तदनुवृत्त्या तत्र फलमिति भावः । एवं तर्हि वार्त्तिक एव प्रश्लेषोऽस्तु, लाघवादित्याशयेनाह—छकाराद्वेति ।

न च'लोपो व्यो'रिति सूत्रे वकारस्य भगवता प्रत्याख्याततत्वेन कथमत्र वलोपः । लौकिकोदाहरणाऽभावेन तदर्थतया प्रत्याख्यानेऽपि, शास्त्रीय-सौत्रप्रयोगाऽर्थत्वे बाधकाऽभावात् । अत एवा'ऽतो ल्रान्तस्ये'ति 'लुप्त-निर्दिष्टो वकार'इति 'इको गुणवृद्धी'इत्यत्र भाष्ये उक्तम् । न चैवं'विष्णवे'-इत्यादौ 'तस्य लोप' इति लोपो दुर्वारः, उच्चारणस्य 'गव्यूति''नाव्य'-मित्यादौ चारितार्थ्यादिति वाच्यम् । 'गवि च युक्ते' 'यतोऽनाव' इत्यादि-निर्देशैर्वारणात् । 'इति यवयोर्लोपो ने'त्यत्र वकारग्रहणन्तु वार्त्तिके प्रश्लेषपक्षे आवंशे उपायाऽन्तरपरतया योज्यम् ।

केचित्तु—'वान्तो यी'ति सूत्रे वान्तग्रहणं व्यर्थम् । न च तदभावे 'चेय'मित्यादावतिप्रसङ्गः । 'क्षय्यजय्या'विति योगं विभज्य, 'कण्ठ्य-तालव्यस्य चेत् क्षिज्योरेवे'ति नियमेनाऽदोषात् । 'क्षिज्योः शक्यार्थे

---

१ इतोऽग्रे 'सर्वत्रैव निमित्तत्वबाधाऽऽपत्तौ 'रलो'ति वक्तव्ये 'वलो'त्यस्य वैयर्थ्यात् ।'—इति ख. पाठः ।

एवे'ति द्वितीयसूत्रार्थः । एवञ्च ओदौतोः स्थानित्वलाभाय न यत्न आस्थेयो भवति । एवञ्च तद्योगविभागेनान्यत्राऽपि विधानार्थम् । 'तेन'गव्यूति'-रितिसिद्धेर्वार्त्तिकं नाऽपूर्वम् । यकारांऽशे हलरूपेऽशि 'हलि सर्वेषा'मित्यस्यैव प्रवृत्तेर्यकारसाहचर्याद्वस्याऽप्यजरूपेऽश्येव 'लोपः शाकल्यस्ये'त्यस्य प्रवृत्तिरिति नाऽत्र तत्प्रवृत्तिः । एवं'भो'सादिसाहचर्या'द्धलि सर्वेषा'मित्यस्याऽपि एचो ऽयवादिसम्बन्धि-विषयेऽप्रवृत्तेर्न दोष इत्याहुः ।

धातोस्त । अत्र 'धातु'ग्रहणाऽभावे यद्यपि 'यिप्रत्यये चेत्तर्हि तन्निमित्तस्यैवे'ति सामान्यनियमो नाऽऽपादनाऽर्हः, तथा सति योगविभागैवकारवैयर्थ्याऽऽपत्तेः । विशिष्टविषयविधिनाऽपि तत्फललाभात् । तथाऽपि प्रातिपदिकमात्रविषयो नियमः सम्भाव्येत । तथा च 'बाभ्रव्य' इत्यत्रैव स्यात् । 'गव्य'मित्यत्र न स्यात् । 'औयते'त्यत्र च स्यात् । अतो 'धातु'-ग्रहणम् । 'एव'कारस्त्विष्टतोऽवधारणाऽर्थः । अन्यथा 'तन्निमित्तस्य चेद्धातोरेवे'त्यपि नियमः सम्भाव्येत । तथा च 'बाभ्रव्य' इत्यत्र न स्यात् । धातोस्त्वतन्निमित्तस्याऽपि स्यात्–'औयते'त्यादाविति बोध्यम् ।

[४]केचित्तु—'अयं नियमो धातुप्रत्ययविषय एव । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञान'मिति परिभाषणात् । तेन 'भू'धातोः क्विपि 'भुवे हित'मित्यर्थे 'उगवादिभ्यो य'दिति यति न वान्तादेशो, यद्यभिधानमस्तो'त्याहुः । लव्यमिति । लुनातेरचो यत् । 'सार्वधातुकार्द्ध'ति गुणः ।

लाव्यमिति । 'ओरावश्यके' इति ण्यत् । उभयत्राऽपि गुणवृद्ध्योर्यत्-ण्यन्निमित्तत्वेन यादिप्रत्ययनिमित्तत्वमेवेति बोध्यम् । तन्निमित्तस्येति

---

१ इत आरभ्य 'यत्न आस्थेयो भवति' इत्यन्तः क. ग. पाठः ख. नास्ति ।

२ इतः आरभ्य 'हलि सर्वेषामित्यस्यैव प्रवृत्तेः' इत्यन्तः क. ग. पाठः । ख. नास्ति । ३ 'मित्यस्याऽपि 'एचोऽयवा'दिसूत्रविहितसम्बन्धि-य-व-विषये' इति ख. पाठः ।

४ 'केचित्त' इति ख. नास्ति । ५ 'अयंच नियमो' ख. पाठः ।

किमिति । सूत्रमेव किमर्थमिति प्रश्नः ।

ओयते इति । 'वेञ्'धातोः कर्मणि लटि, यकि, यजादित्वात्सम्प्रसारणे'ऽकृत्सार्वे'ति दीर्घे, आङा सह'ऽऽद्गुणः'। धातूपसर्गकार्यस्याऽन्तरङ्गत्वाद्वान्तादेशे गुणो नाऽसिद्धः। इदं च 'सुट् कात्पूर्वः' इत्यादौ तत्प्रत्याख्यानाय भाष्ये स्पष्टम् । यत्तु 'धातूपसर्गयोः कार्यमन्तरङ्गम्'-इत्यस्य गृह्यमाणधातूपसर्गकार्यविषयकत्वमिति । तन्न । 'ओमाङोश्चे'ति सूत्रस्थाऽऽङ्ग्रहणस्य तज्ज्ञापकतापरभाष्यविरोधात् । 'सुट् कात्पूर्व'इत्यादिज्ञापकसिद्धे 'पूर्वं धातुः साधनेन युज्यते' इति पक्ष आह—औयतेति । तस्मादेव कर्मणि लङ् । आडागमे वृद्धिः । शेषं पूर्ववत् ।

क्षय्यज । 'क्षि क्षये' 'जि जये' इत्यनयोरेव ग्रहणम्, न तु 'क्षीष् हिंसायाम्' 'क्षै जै क्षये'इत्यनयोः, व्याख्यानात् । अत एव 'क्षिज्योरेवैच' इति भाष्ये ह्रस्वनिर्देशः । तद् ध्वनयन्नाह—क्षेतुं जेतुमित्यादि । 'अर्हे कृत्यतृचश्चे'ति कृत्यः । न चैवं तेषामशक्यार्थे 'क्षेयम्' 'जेयमि'त्यादेः प्रयोगस्य सिद्धत्वात् 'शक्याऽर्थे' इत्यनर्थकम्, अशक्यार्थे 'क्षय्यमि'ति वारणेन चारितार्थ्यात् ।

तस्मै प्रेति । क्रयाऽर्थे वस्तुनि 'क्रय्य' इति निपात्यते इत्यर्थः । ननु[2] सर्वनाम्नां प्रधानपरामर्शित्वस्यौत्सर्गिकत्वात्प्रत्ययार्थपरामर्श एवोचित इति चेन्न । यतः प्रत्ययार्थपरामर्शे यदि 'स एवाऽर्थ' इति तत्पुरुषः, तदा क्रय्यशब्दः स्वार्थे एव वर्त्तते इति 'तदर्थ'ग्रहणं व्यर्थं स्यात् । अथ 'सोऽर्थो यस्ये'ति बहुव्रीहिस्तथाऽपि (शब्दे[3] शब्दस्य वृत्त्यभावात्) अनर्थकमेव तत्स्यात्[4] । तस्मात्सामर्थ्याद्गुणभूतस्याऽपि ग्रहणम् । 'चतुर्थी

१ 'सूत्रमेव किमिति प्रश्नः' इति ख. पाठः ।

२ 'ननु सर्वनाम्नां प्रधानपरामर्शित्वस्यौत्सर्गिकत्वात्प्रत्ययार्थपरामर्शः स्यादत आह—तस्मै प्रेति । क्रयार्थे वस्तुनि 'क्रय्य' इति निपात्यते इत्यर्थः । अयं भावः—प्रत्ययार्थपरामर्शे यदि स एवार्थः' ख. पाठः ।

३ क. ग. नास्ति । ४ 'तत्स्यादिति भावः । केचित्तु विनिमयो नाम' ग. पाठः ।

तदर्थार्थे'ति समासः। क्रयार्थत्वञ्च फलोपधानरूपम्, न तु योग्यतामात्रम्। 'तदर्थे' इति विशेषणात्। तदाह–क्रेतार इति। योग्यतामात्रग्रहणे त्वव्यावर्त्तकमेतत्स्यादिति भावः।

केचित्तु[1] विनिमयो नाम स्वीयं धान्यादि दत्वा परतस्तन्मूल्यग्रहणम्। तत्र–धान्यं क्रय्यम्। येनाऽन्यदीयं द्रव्यं गृह्यते तत् 'क्रय्यमि'ति यावत्। यत्र तु स्वीयं द्रव्यं दत्वा परकीयधान्यादिग्रहणं, तत्र (धान्यं)[2] क्रेयमिति। समानेऽपि विनिमये द्रव्ये न क्रय्यत्वं, नाऽपि क्रेयत्वम्। किन्तु धान्यादावेव। शब्दशक्तिस्वभावात्। भाष्यस्वरसोऽप्येवमेव। 'क्रयणाऽर्हमि'ति मूलस्याऽप्यत्रैव तात्पर्यमित्याहुः।

लोपः शा। 'भोभगोअघोअपूर्वस्ये'त्यशीति चाऽनुवर्त्तते। तत्र–ओकारान्ते'ष्वोतो गार्ग्यस्ये'ति बाधकमित्याशयेनाह–अवर्णपूर्वयोरिति।

यवयोरिति। यद्यपि 'व्योरि'त्यनुवर्त्तते, तथापि वर्णसमाम्नाये यकारस्य प्राक् पाठात्तत्क्रमेणैवं व्याख्यातम्। हर एहीति। 'ओमाङोश्चे'ति पररूपं प्राप्तम्। इदं सूत्रं लघुप्रयत्ने न प्रवर्त्तते। शाकटायनमते तयोर्विधानेन शाकल्यमते तदभावात्। अवर्णेति किम्?। हरिव् गच्छति। पदान्तयोः किम्?। हरये।

अशि किम्?। वृक्षं वेतीति वृक्षवीः। क्विप्। तमाचष्टे, करोति वेति ण्यन्ताद्विच्। वृक्षव् करोति। क्विपि तूठ् स्यात्। वि[3]ज्निमित्तको 'लोपो व्यो'रिति लोपस्तु न। णिलोपटिलोपयोः स्थानिवत्त्वात्। प्रातिपदिकाण्णिजुत्पत्त्या पदत्वाऽभावेन 'न पदान्ते' तिनिषेधाऽप्रवृत्तेः।

[ न[4]नु विचि 'लोपो व्यो'रिति वलोपाऽऽपत्तिः। न च णिलोपस्य, टिलोपस्य वा स्थानिवत्त्वम्। 'न पदान्ते'ति निषेधात्। न चाऽस्य न पदत्वम्। 'सुबन्ताण्णि'जिति हरदत्तादिमतेऽन्तर्वर्त्तिसुपा पदत्वस्यैकदेश-

---

१ 'केचित्तु' इत्यारभ्य 'तात्पर्यमित्याहुः' इत्यन्तः क. ग. पाठः।

२ ग. नास्ति। ३ इत आरभ्य 'निषेधाऽप्रवृत्तेः' इत्यन्तः क. ग. पाठः।

४ 'संग्रहः' (१८० पृष्ठे) इत्यन्तः क. कुण्डलितोऽयं ख. ग्रन्थः। ग. नास्ति।

विकृतन्यायेन वान्तेऽपि सुलभत्वात् । न च'इष्ठवदि'त्यतिदिष्टेन भत्वेन पदत्वबाधः । णिचो लुप्तत्वात् । न च प्रत्ययलक्षणम् । 'णाविष्ठवदि'त्यनेन 'यचि भमि'तिशास्त्रस्यैवाऽतिदेशेन, तस्य वर्णाऽऽश्रयत्वात् ।

भाष्यमते प्रत्ययलक्षणसूत्रस्य 'प्रत्ययस्याऽसाधारणं रूपं यत्राश्रीयते तत्रैव प्रत्ययलक्षणमि'ति नियमार्थत्वात् । अत्र[1]ऽतृणेढित्यादाविवाऽप्राधान्येनाऽलाश्रयणेऽपि न दोषः । वार्त्तिकोक्तस्या'ऽप्राधान्येनाऽलाश्रयणे विध्यर्थ'मिति विधित्वपक्षस्याऽसार्वत्रिकत्वाच्च । ( [2]कार्याऽतिदेशपक्षेऽपि,—स्वादित्वमात्रविरहप्रयुक्तभत्वाऽप्राप्तिमति श्रूयमाणणिचि चरितार्थस्य, स्वादित्वा-ऽजादित्वविरहप्रयुक्तभत्वाऽप्राप्तिमति लुप्तणिच्यतिदेशाऽप्रवृत्तेर्न दोषः ) ।

न चा'ऽचः परस्मिन्नि'त्यनेन स्थानिवत्त्वाद्भत्वं सुलभम् । णिलोप[3]स्य तेन स्थानिवत्त्ववट्टिलोपस्यापि स्थानिवत्त्वापत्तौ, वान्ते भत्वस्य दुर्लभत्वेन तेन तद्गतपदत्वाऽनिवृत्तेः । पदत्वं तु तत्रैकदेशविकृतन्यायेनेति न दोषः । यदि तु टिलोपस्थानिवत्त्वस्य वान्तगतपदत्वसंरक्षणद्वारा, 'न पदान्ते'तिनिषेधप्राप्तिद्वारा, पदान्तस्थानिकवलोपप्रापकतया 'न पदान्ते'ति निषेध इत्युच्यते तदा ([4]अस्य) णिलोपस्थानिवद्भावस्याऽपि 'न पदान्ते'ति निषेधप्रतिबन्धद्वारा, पदान्तस्थानिकवलोपप्रतिबन्धकतया तत्राऽपि 'न पदान्ते'तिनिषेधो दुर्वारः । (तत्प्रवृत्तेः प्राक् पदत्वसत्त्वाच्च । विधिनिषेधयोरेकवाक्यतयैवाऽनुष्ठापकत्वाऽङ्गीकारात् । निषेधविषये तदप्रवृत्तेश्च ) ।

'पटित' इत्यादौ तु बहिरङ्गत्वेन टिलोपस्याऽसिद्धत्वेन न जश्त्वम् । 'अत्यरराज'दित्यादौ भत्वनिमित्तकोऽपि टिलोपोऽन्तरङ्गत्वाण्णिलोपात्प्रागेव । अकृतव्यूहपरिभाषा त्वनित्यत्वान्न प्रवर्त्तते । तस्या असत्त्वाच्च । (अत[6] एव) टिलोपस्य बहिरङ्गाऽसिद्धत्वाच्च तत्र कुत्वमपि न । ( [7]णिचि भत्वसत्त्वेन तत्र कुत्वाऽप्राप्त्या, भ्रष्टावसरन्यायेन णिलोपेऽप्यप्रवृत्तेः )

---

१ 'इत आरभ्य 'न दोषः' इत्यन्तः ख. ग. नास्ति । क. पाठः । २ क. नास्ति ।
३ 'इत्युच्यते तदा' इत्यन्तोऽयं क. ग. पाठः । ४ क. ग. नास्ति ।
५ ख. पाठः । क. ग. नास्ति । ६ क. ग. पाठः । ७ क. ग. नास्ति । ख. पाठः ।

—इति चेन्न[1]। कार्यातिदेशपक्षे 'णाविष्ठव'दित्यतिदेशस्य प्रत्ययलक्षणेन प्राप्तेः। न हि तत्र वर्णाश्रयत्वम्। प्राधान्येन कार्याऽतिदेशस्यैव युक्तत्वात्। सुबन्ताण्णिजितिपक्षो न सूत्रभाष्यवार्त्तिकसम्मत इति चुरादौ वक्ष्यते इति प्रातिपदिकात्तदुत्पत्तौ पदत्वाऽभावाच्च।

ध्वनितं चेदं सर्वं[2] 'न पदान्त'सूत्रे 'हरदत्तादिमते' इत्युक्त्या **मनोरमायाम्**। आदिना—शास्त्रातिदेशाश्रयणेन णिलोपे भत्वाऽनङ्गीकर्त्तॄणां संग्रहः ]।

नन्वेवमपि 'करोती'ति 'क'निमित्तो 'लोपो व्यो'रिति वलोपो दुर्वारः। न च स्थानिवत्त्वम्। 'न पदान्ते'ति निषेधात्। (विजुत्तरसुब्निमित्तकपदत्वस्य बहिरङ्गतयाऽसिद्धत्वेनाऽन्तरङ्गभसंज्ञया बाधाऽयोगात्। अन्तरङ्गपदत्वन्तु वचनसामर्थ्याद्बाध्यत एव )–इति चेन्न। 'न पदान्त'-सूत्रे भावसाधनं विधिशब्दमाश्रित्य, चरमाऽवयववाच्यन्तशब्दमाश्रित्य, कर्मषष्ठ्या समासेन 'पदचरमावयवे कर्त्तव्ये' इत्यर्थात्। इह च विधेयो लोपो न पदचरमावयवः। 'न[3] पदान्त'सूत्रनिरूपितरीत्या परपदस्थाऽजादेशस्यैव पदान्तविधौ स्थानिवत्त्वनिषेधाच्च।

किञ्च[4] 'यः सम्प्रति पदान्त' इति भाष्योक्तरीत्या स्थानिवत्त्वनिषेधं विनाऽस्य पदान्तत्वाऽभावादत्र निषेधाऽप्रवृत्तिः। स्थानिवत्त्वनिषेधज्ञाने पदान्तत्वज्ञानं, तन्निर्णये च स्थानिवत्त्वाऽभावज्ञानमित्यन्योन्याश्रयो हि तत्राऽप्रवृत्तौ बीजमिति बोध्यम्। (एतेन[5] 'पदान्तस्य स्थाने विधा'वित्यर्थवर्णनं परास्तम्। अत्र वलोपाऽऽपत्तेः। न चेष्टाऽऽपत्तिः। 'वृक्षवयतेरप्रत्ययः; वृक्षव् करोती'ति 'विभाषा भवद्भगवदि'ति वार्त्तिकस्थभाष्यविरोधाऽऽपत्तेः )। न च पदसंज्ञायां टिलोपस्य स्थानिवत्त्वाद्रस्य

---

१ 'इति चेन्न। कार्योऽतिदेशपक्षे 'णाविष्ठव'दित्येतद्विषयकप्रत्ययलक्षणोपप्लवस्य व्यक्तिपक्षे वैयर्थ्याऽऽपत्त्या प्रागुक्तकल्पनाया अयुक्तत्वात्'—इति ख. पाठः।

२ क. ग. नास्ति। ३ 'बोध्यम्' इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

४ 'किञ्च' इति क. ग. नास्ति। ख. पाठः।

५ ख. पाठः। क. ग. नास्ति।

पदान्तत्वमेव नास्तीति–'अशी'ति व्यर्थमिति वाच्यम् । 'पूर्वत्राऽसिद्धीये' इति निषेधात् । साक्षात्परम्परया वा पूर्वत्राऽसिद्धीयप्रापक-प्रतिबन्धकाऽतिदेशस्य तेन निषेधादित्याहुः ।

**कानि सन्तीति** । वाक्यसंस्कारपक्षे एतदुदाहरणम् । तत्रापि[1] पक्षे पूर्वोपस्थितनिमित्तकत्वरूपाऽन्तरङ्गत्वाद्यादायाऽन्तरङ्गाणां पूर्वं[2] प्रवृत्तिसत्त्वादिकारादेः स्थानिभूतादचः पूर्वत्वं द्रष्टव्यम् । एतन्मूलकमेव वाक्यसंस्कारपक्षे श्रुतवर्णक्रमेणैव लक्ष्यसंस्कार इति वदन्ति ।

न च स्थानिवत्त्वाऽभावेऽप्यल्लोपस्य बहिरङ्गत्वादसिद्धत्वं दुर्वारम् । पदद्वयाऽऽश्रितत्वेन यणावोरेव बहिरङ्गत्वात् । ( 'नाऽजानन्तर्ये' इति निषेधाच्च ) ।

**एकः पूर्वपरयोरित्यधिकृत्येति** । स्यादेतत् । 'एक'ग्रहणं किमर्थम् ?। न च 'रदाभ्यां निष्ठातो न' ('उभौ[3] साभ्यासस्य') इतिवदनेकस्य स्थानित्वेन स्थानिसमसङ्ख्याकाऽऽदेशव्यावृत्त्यर्थमिति वाच्यम्[4] ।

---

१ 'तत्रापि' इत्यारभ्य 'वदन्ति' इत्यन्तोऽयं क. ग. पाठः । ख. पुस्तके तु— 'वाक्यसंस्कारपक्षे एतदुदाहरणम् । नन्वेतत्पक्षेऽपि परस्परपरिहारेण लब्धाऽवकाशयोः समवस्थितयोरेकस्मिँल्लक्ष्ये युगपत्प्राप्तिरूपविरोधाऽभावेन सर्वशास्त्राणां युगपत्प्रवृत्त्या, सर्वविधिभ्यो लोपविधेर्बलवत्त्वाच्च शिभावादपि पूर्वं लोपे, इकारस्य स्थानिभूतादचः पूर्वत्वाऽभाव इति चेन्न । वाक्यसंस्कारपक्षेऽपि प्रकृतवर्णक्रमेणैव लक्ष्यसंस्कारकल्पनात् । अत्र च पदान्तग्रहणस्यैतदुदाहरणपरभाष्यमेव मानम् । 'सर्वविधिभ्य'इत्यस्यां परिभाषायां मानाऽभावाच्च । भाष्यादावपठितत्वाच्च ।'—इति पाठः ।

२ ख. पाठः । क. ग. नास्ति । ३ ख. पाठः । क. ग. नास्ति ।

४ इतोऽग्रे—'अग्नीषोमाभ्यामि'त्यादौ द्वन्द्वोत्तरचतुर्थ्या समुदिते एकप्रदेयनिरूपितैकदेवतात्वबोधवत्, 'पूर्वपरयोरि'त्यत्र द्वन्द्वोत्तरषष्ठ्या एकविधेयनिरूपितसमुदायनिष्ठैकस्थानित्वबोधेनाऽऽदेशद्वयाऽप्राप्तेः । 'ज्वरत्वरे'त्यादौ

विधेयत्वेन[1]'गुण'इत्यादावेकत्वसङ्ख्याया विवक्षितत्वेन, उभयोरपि पूर्वपरयोरेकवाक्यतयैव विधेयान्वयेन च, 'अनयोः पूलयोः कटं कुर्वि'त्यादित इव उभयसम्बन्ध्येकविधेयस्यैव प्रतीतेः। 'रदाभ्या'मित्यत्र तु भिन्नविभक्तिनिर्देशाच्चकाराच्च वाक्यभेद एवेति चेत्सत्यम्। न्यायसिद्ध एवार्थः सुखप्रतिपत्त्यर्थमेकग्रहणेन सूत्रकृता दर्शित इति बोध्यम्। विस्तरस्तु भाष्यप्रदीपोद्द्योते द्रष्टव्यः।

**आद्गुणः।** न चा'ऽवर्णादचि पूर्वपरयोरेक आदेश'इत्येतावतैव स्थानेऽन्तरतमपरिभाषया गङ्गेशाऽऽदिनिर्वाहे, किं 'गुण'ग्रहणेनेति वाच्यम्। 'कृष्ण ऋकार'इत्यादौ[2] द्विमात्रिकस्य सार्द्धद्विमात्रिकाऽऽरादेशव्यावृत्त्यर्थम्, उक्तोदाहरणेषु ऐकारादिव्यावृत्त्यर्थं च तत्सत्त्वात्। 'वृद्धिरेची'त्यादे वृद्धिरेच्येव' 'ऋति धातावेवे'त्यादिनियमाश्रयणेऽपि 'गङ्गौघ' इत्यादौ गुणाऽऽपत्तिः। 'वृद्धिरेवैची'त्येवंविधनियमे तु गङ्गेशादौ

---

'उपधायाश्चे'ति चेन समुदित एव स्थानित्वपर्यवसानम्। यत्र'त्वेत्येधती'त्यादौ समुदायस्यैकनिरूपितस्थानित्वाऽसम्भवस्तत्र वाक्यभेदकल्पनयाऽगत्या प्रत्येकमादेशः। 'रदाभ्या'मित्यत्र तु लक्ष्याऽनुरोधाच्चकाराच्च 'पूर्वस्य च द' इति वाक्यभेदाश्रयणान्न दोषः। 'उभौ साभ्यासस्ये'त्यत्राऽपि 'अभ्यासेने'त्येव 'व्यवाय'पदाध्याहारेण सिद्धे, बहुव्रीहिरूप-गुरुभूत-'साऽभ्यासस्ये'ति निर्देशसामर्थ्याद्द्वयस्य स्थानित्वलाभे, 'उभौ'ग्रहणसामर्थ्यादादेशद्वयसिद्धिः। विधेयत्वेन प्राधान्यात्, लक्ष्यानुसारेण, व्याख्यानाच्च 'गुण' इत्यादावेकत्वसङ्ख्याया विवक्षितत्वाच्चेति चेत्। सत्यम्। न्यायसिद्ध एवाऽर्थः सुखप्रतिपत्त्यर्थमेकग्रहणेन सूत्रकृता दर्शित इति बोध्यम्। विस्तरस्तु भाष्यप्रदीपोद्द्योते द्रष्टव्यः। अत्र 'पूर्वपरयो'रितीतरेतरयोगद्वन्द्वनिर्देशेन प्रत्येकं स्थानित्वमपि बोध्यम्। अत एवैकाऽऽदेशस्य ऋकारस्थानिकत्वेन रपरत्वसिद्धिः'—इति ख. पाठः।

१ 'विधेयत्वेन' इत्यारभ्य 'इति बोध्यम्' इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

२ 'कृष्ण ऋकार इत्यादौ त्रिमात्रिकस्य' ख. पाठः।

वृद्ध्यापत्तिः । उभयविधनियमाश्रयणे तु मानाऽभावो, गौरवं, खट्वेन्द्रादौ त्रिमात्राद्यापत्तिश्च ।

उरण् ( रपरः ) । अनुवादे परिभाषाऽनुपस्थानेऽपि 'षष्ठी स्थाने' इत्यतः 'स्थाने' इत्यनुवृत्तिमभिप्रेत्याऽऽह— **तत्स्थाने** इति । 'स्थानेऽन्तरतम' इति सूत्राद् द्वितीयमपि 'स्थाने' ग्रहणमनुवर्त्तते । 'प्रसङ्गाऽवस्थाया'-मिति तदर्थः । तदाह—**रपरः सन्नेवेति** ।

'रपर'[1] इति अवयववाचिना परशब्देन षष्ठ्यर्थे बहुव्रीहिः । न तु व्यवस्था-वाचिना पञ्चम्यर्थे । तथा सत्यभक्तत्वाऽऽपत्तौ 'वव्रे' इत्यादौ हलादिः शेषो न स्यात् । अभ्यासावयवस्यैवाऽनादेस्तेन निवृत्तिबोधनात् । इदमेव बोधयितुम-न्तशब्दानुवृत्त्या पूर्वाऽवयवत्वं बोधितं भाष्ये । किञ्चाऽनवयवत्वे ऋकारस्य गुणवृद्धी जायमाने अरारावेवेति नियमो न स्यात् । गुणशब्देन अकारा-देरेव रेफपरस्यैतत्सूत्रैकवाक्यतया विधानम् । गुणत्वादिकं त्वकारादिनिष्ठ-मेव । तेन तु नाऽऽन्तर्यमिति स्पष्टमेव । अवयवत्वे तु 'यदागमा' इति न्यायेन विशिष्टे गुणत्वमितीष्टसिद्धिः । वर्णग्रहणे क्वचिदेव तदप्रवृत्तेः ।

एतेन 'अणमनूद्य रपरत्वं विधीयते' इति परास्तम् । उक्तनियमा-ऽनुपपत्तेः । क्व रपरत्वं, क्व लपरत्वमिति व्यवस्थाऽनुपपत्तेश्च ।

**तत्राऽऽन्तरतम्यादिति** । स्थानत इति भावः । रेफशिरस्कतया-ऽऽदेशस्याऽपि मूर्द्धस्थानत्वात् । यत्तु 'वृद्धिरारालैच्' 'अरलेङ् गुणः' 'ऋत

---

१ 'रपर' इत्यारभ्य 'तत्रान्तरतम्यादिति' इत्यन्तोऽयं क. ग. पाठः । ख. पुस्तके तु-'रपरः सन्नेवेति । ये तु अणमनूद्य रपरत्वं विदधति, तेषां 'क्व रपर-त्व'मिति, 'क्व लपरत्व'मितिव्यवस्था न सिद्ध्येत् । अभक्तत्वाऽऽदिशङ्काव्या-वृत्तये 'यस्य गुणादिशब्दैरण् विहितस्तदन्ताऽवयव' इत्यर्थेकाऽन्तग्रहणाऽनुवृत्ति-क्लेशश्च । मम त्वान्तरतम्येन व्यवस्थासिद्धिः । अरादिरूपेणैव विधानात् । स्थान्यवयवकाऽवयवत्वलाभश्च । तद्ध्वनयन्नाह—तत्राऽन्तरतम्यादिति' —अयं पाठः ।

इर्' 'उरोष्ठ्ये'त्येव सिद्धा'वुरण् रपर' इति सूत्रं व्यर्थ'मिति। तन्न। 'आपृज्ञप्यृधामीदि'त्यस्य रपरत्वाऽनापत्तेः। 'भृञामित्' 'ऋत उत्' इत्यादौ दोषाऽऽपत्तेश्च। ( 'गेमुलि'त्यादेः कपिलकाऽऽदित्वेन साधने तु पृषोदरादित्वाऽऽश्रयणेन सम्पूर्णशास्त्रस्यैव प्रत्याख्यानापत्तिः ) इति दिक्।

अत्राऽण् पूर्वेणैव, न परेण। 'उरन्रपर' इत्येव सिद्धेऽण्ग्रहणात्, 'प्रशास्तृणा'मित्यादिनिर्देशाच्च।

**पक्षे द्वित्वमिति।** ऋधेर्धस्येति भावः।

**झरो झरि।** 'हलो यमा'मित्यतो 'हल' इति, 'झयो ह' इत्यतो'ऽन्यतरस्या'मि'ति, 'वाऽवसाने' इत्यतो 'वे' ति वाऽनुवर्त्तते। इदं च 'हयवर-डि'ति सूत्रशेषे भाष्ये स्पष्टम्। 'हलो यमामि'त्यस्य वैकल्पिकत्वेन तद्विषये 'हर्य्यनुभव' इत्यादौ चरितार्थ'मचो रहे'ति द्वित्वमिति, अस्य नित्यत्वे 'शरोऽची'ति तन्निषेधो व्यर्थ इति–अस्याऽप्यनित्यत्वे ज्ञापकम्।

तत्सूत्रस्थमस्य ज्ञापकत्वखण्डनपरं 'द्वित्वं लोपाऽपवादः स्यादि'ति भाष्यन्तूभयोर्लोपयोर्वैकल्पिकत्वे इदं ज्ञापकमित्यर्थखण्डनपरमिति न तद्विरोध इत्याहुः।

**लोप इति।** ऋध्धातोर्झर इति भावः। **असतीति।** 'द्वित्वाऽभावे' इत्यनुकृष्यते। **त्रिधमिति।** यत्तु 'द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्ध'-मित्यर्थक'पूर्वत्राऽसिद्धमद्वित्वे' इत्यनेन धातुधकारस्य जश्त्वे कृते, दकारे

---

१ 'ऋत उत्' इति ग. नास्ति। २ ख. पाठः। क. ग. नास्ति।

३ 'वावसाने' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः। ख. पुस्तके तु-'अन्यतरस्यामिति चानुवर्त्तते। इदं च 'नाज्झला'विति सूत्रे भाष्ये स्पष्टम्। व्याख्यानमेव चाऽत्र शरणम्। यद्यपि 'हलो यमा'मित्यत्राऽणुदित्सूत्रस्थाऽणग्रहणं ज्ञापकमस्ति, तथाऽपि नेह तादृक्किञ्चिदस्ति। न च 'शरोऽची'ति निषेधोऽत्राऽपि ज्ञापकः। लोपस्य नित्यत्वे'ऽचो रहे'ति द्वित्वमारम्भसामर्थ्याल्लोपाऽपवाद इति तस्य सार्थक्यात्। लोप इति।'—इति पाठः।

द्वित्वस्योचितत्वेन, 'त्रिधमि'ति चिन्त्यमि'ति । तन्न । अस्य वार्त्तिकस्य परिभाषावृत्तिकृद्भिः परिभाषात्वोक्त्याऽदोषात् ।

तथा हि—'पूर्वत्राऽसिद्धमि'त्यधिकारभवशास्त्रत्वमस्या लिङ्गम् । नियामकत्वमेव च परिभाषात्वम् । नियमश्च फलविशेषायैवेति,—यत्र फलाऽविशेषस्तत्र न प्रवर्त्तते । अत एव 'व्रीहीनवहन्ती'त्यादौ दृष्टफले विशेषाऽभावान्नियमजन्याऽदृष्टं कल्पयन्ति वाक्यार्थविदः । ( कृष्णलेषु तु नाऽवघातः । दृष्टफलाऽभावात् । दृष्टद्वारैव चाऽदृष्टकल्पना । त्रिधकारकत्वन्तु प्रक्रियाऽभिप्रायेण बोध्यम् ) ।

न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषोऽस्ति । तदनन्तरं जश्त्वप्रवृत्तेः सत्त्वात् । त्रिधकारत्वन्तु प्रक्रियाऽभिप्रायेण बोध्यम् ।

(किञ्च वाक्यसंस्कारपक्षे 'कृष्ण ऋध् ति' इत्यस्यामवस्थायां पूर्वं गुणः । श्रुतवर्णक्रमेण लक्ष्यसंस्कारस्योचितत्वात् । तद्दृष्ट्या धत्व-द्वित्वादीनामसिद्धत्वाच्च । ततो द्वित्वस्याऽसिद्धत्वा'ज्झषस्तथोरि'ति धत्वम् । ततोऽकृतव्यूहपरिभाषया जश्त्वाऽप्रवृत्तौ, ततः पूर्वं द्वित्वेनाऽदोषात् । द्वित्वे ऋध्धकार–प्रत्ययधकारा-ऽऽनन्तर्यरूपजश्त्वनिमित्तविनाशसम्भावनायाः सत्त्वात् । द्वित्वेनोत्पद्यमानश्चाऽऽगन्तूनामन्ते निवेशादसति बाधके परत्रैवेति न कश्चिद्दोषः ) ।

'यणो मय'इति लक्षणाऽन्तरेण पुनर्द्वित्वे, चतुर्धमपि बोध्यम् । एतदुपपत्तिरपि 'संस्कर्त्ते'त्यत्र वक्ष्यते । पञ्चमीति । विनिगमकाऽभावाद् व्याख्याद्वयमित्यर्थः । अत एवेदं द्वित्वं वैकल्पिकमिति बोध्यम् ।

**वृद्धिरेचि** । नन्वस्य गुणाऽपवादत्वात्, 'एक' इत्यधिकारादन्तरतमपरिभाषया च सिद्धे वृद्धिग्रहणं व्यर्थम् । (न च पाक्षिकगुणवारणार्थम् । 'वा सुपी'त्यत्र 'वा'ग्रहणवैयर्थ्यापत्तेः— ) इति चेन्न । 'वृद्धि'रिति-

१ ख. पाठः । क. ग. नास्ति । २ 'बोध्यम्' इत्यन्तोऽयमिहैव क. ग. पाठः । ख. तु पूर्वत्राऽयं पाठः ।
३ ख. पाठः । क. ग. नास्ति । ४ क. ग. नास्ति । ख. पाठः ।

योगविभागाऽर्थत्वात् । तेना'ऽक्षादूहिन्यामि'त्यादि नाऽपूर्वमित्याहुः ।

कृष्णैकेति । 'कृष्णे'ति सम्बुद्ध्यन्तं पृथक् पदम् । एवमग्रेऽपि । एतेन 'पूरणगुणे'ति निषेधात्समासो दुर्लभ इत्यपास्तम् । गुणेन निषेधस्याऽनित्यत्वाच्च । संख्याया अगुणत्वाच्च ।[1]

एत्ये । 'ऊठ उपघाते' इत्यस्य भ्वादावेकीयमतेन पठ्यमानस्य दीर्घाऽऽदेस्तु न ग्रहणम् । तथा[2] सति 'ऊठिषु' इत्येव स्पष्टप्रतिपत्तये वदेत् । आदेशस्य प्रसिद्धत्वाच्च । अष्टाध्यायीस्थत्वेन प्रत्यासन्नत्वाच्च ।

'एची'ति नोठो विशेषणम्, व्याख्यानात् । सर्वस्योठस्तत्त्वाऽसम्भवात् । 'विश्वौहः' 'प्रष्ठौह' इति 'विभाषा पूर्वाह्णे'तिसूत्रे भाष्यप्रयोगाच्च ।

(न च[3] 'आ अवतो'ति औः । जनस्य और्जनौः । 'जनोभ्या'मित्यादावेवेः कावूठि, आङाऽऽदूगुणे परादिवत्त्वेनोठत्वात्सम्भवोऽस्ति । न च 'वृद्धिरेची'ति सिद्धिः । 'ओमाङोश्चे'त्यनेन बाधादिति वाच्यम् । 'ओमाङोश्चे'त्येतद्बाधकल्पनाऽपेक्षया सामर्थ्येन, लक्ष्यानुरोधेन च 'एची'त्यसम्बन्धस्यैव कल्पयितुमुचितत्वात् ) । तदाह—एजाद्योरिति । अत एव 'एत्येधत्यो'रिति योगं विभज्य, 'तयोरेवैची'ति विशेषणं कृतं भाष्ये । 'इणीकारादौ प्रतिषेधो वक्तव्य'इति वार्त्तिके इण्ग्रहणमुपलक्षणमिति तात्पर्यम् ।

अत्र एतिशब्देन इण एव ग्रहणम् । प्रसिद्धत्वात् । (एधतिसाहचर्येणाऽप्रश्लिष्टसानुबन्धकस्यैव ग्रहणाच्च ) । तेन 'वी गतौ'त्यत्र प्रश्लिष्टस्य न वृद्धिरित्याहुः ।[4]

'उपैती'त्यादौ 'वृद्धिरेची'त्यनेन गतार्थत्वमाशङ्क्याह—पररूपगुणेति । एत्येधत्योरेङि पररूपस्य, ऊठि चाऽऽद्गुणस्येति विवेकः ।

---

१ 'संख्याया अगुणत्वाच्च' इति ख. नास्ति ।

२ 'तथा सति' इत्यारभ्य 'भाष्यप्रयोगाच्च' इत्यन्तः क. ग. पाठः । ख. पुस्तके त्वत्र—'दीर्घादेस्तु न ग्रहणम् । अल्पाच्तरत्वेऽप्यूठः परनिपातकरणात् । अत एवैचीति नोठो विशेषणम् । असम्भवाच्च'—इति पाठः ।

३ 'न च' इत्यारभ्य 'कल्पयितुमुचितत्वात्' इत्यन्तः क. पुस्तके कुण्डलितः, ख. पाठः । लघुशब्दरत्ने चाऽयं पाठो दृश्यते । ४ क. ग. नास्ति ।

प्रष्ठौह इति । प्रष्ठं वहतीत्यर्थे वहेर्ण्वौ, ततः शसि, वाह ऊठि, संप्रसारणपूर्वरूपेऽनेन वृद्धिः ।

प्रैदिधदिति । ( अकृतव्यूहपरिभाषया ), वार्णादाङ्गपरिभाषया (च) पूर्वं 'णौ चङी'ति ह्रस्वे कृते, स्थानिवद्भावेन एधत्वेपि, पूर्वपरविधित्वात्, 'अचः परस्मिन्नि'ति स्थानिवत्त्वाऽभावेनैजादित्वाऽभावादिति भावः ।

अन्यथा मध्येऽपवादन्यायेना'ऽऽद्गुणं' बाधित्वेद्धैव स्यात् । 'उपैधते' इत्यादौ तु परत्वात्पररूपमेव स्यादिति बोध्यम् । यद्यपि 'पर'शब्देन एधतेरेव ग्रहणेन सम्पूर्णस्यैकादेशः प्राप्नोति, तथाऽ'प्यादेः परस्ये'त्यादेर्बोध्यः । न चाऽयमेधयतिर्नैधतिरिति वाच्यम् । प्रकृतिभागस्य एधरूपत्वाऽनपायात् । अत एवा'ऽभिषावयती'त्यादौ सुनोतित्वप्रयुक्तषत्वं भाष्ये उक्तम् ।

[ अत एवोपैधयते इत्यादौ वृद्धिः । नन्वेवमपि 'अजादेर्द्वितीयस्ये'ति धिशब्दस्थाने 'धि-धि'शब्दाऽऽदेशे वस्रसोरिव प्रकृतिप्रत्ययसंमोहः । एधतेरादेशाऽभावेन, अर्द्धाऽधिकविकारेण चैकदेशविकृतिन्यायेनाऽपि नैधतित्वं प्रत्याशेति चेन्न । षाष्ठद्वित्वे 'द्विःप्रयोगो द्विर्वचन'मिति-सिद्धान्तात् । अन्यथेद्धैव णिलोपो न स्यात् । न च 'णेरनिटी'त्यस्य 'ण्यन्तस्याऽङ्गस्य लोप' इत्यर्थः । स चाऽलोन्त्यपरिभाषयाऽन्त्यस्य । एवं च प्रकृते न दोषः । 'सर्वे सर्वपदादेशा' इति न्यायेन 'इधि' इत्यस्य 'इधिधि'-इत्यादेशसत्त्वेन, स्थानिनो ण्यन्ततयाऽऽदेशेऽपि स्थानिवद्भावेन ण्यन्तत्वस्य सुलभत्वादिति वाच्यम् । अलोन्त्यपरिभाषया, निर्दिश्यमानपरिभाषया च 'णेरनिटी'त्यस्य 'ण्यन्तस्याऽङ्गस्याऽन्त्यो यो निर्दिश्यमानो णिस्तस्य लोपः' इत्यर्थस्य सत्त्वेन 'आद्या'दित्यादौ सूत्रस्य चारितार्थ्येनाऽत्र तदप्राप्तेः । अन्ते णेरसत्त्वात् । अर्थवद्ग्रहणपरिभाषा त्वनित्य-

---

१ ख. पाठः । क. ग. नास्ति । २ चकारः क. ग. नास्ति ।

३ 'अचः परस्मिन्निति' इति क. ग. पाठः । ख. नास्ति ।

४ क. कुण्डलितः ख. पाठः । ग. नास्ति ।

५ 'अन्ते णिचोऽसत्त्वात्' ख. पाठः । ६ 'इति बोध्यम्' इत्यन्तोऽयं क. नास्ति ।

त्वान्न प्रवर्त्तत इति बोध्यम् । तथा–'जिघांसती'त्यादौ सन्सकार-विशिष्टस्य द्वित्वे कृते कुत्वं न स्यात् । हन्त्यवयवहकाराऽभावात् । न चाऽल्पपदार्थाऽपेक्षत्वेनाऽन्तरङ्गत्वान्नित्यत्वाच्च द्वित्वे, 'णौ चङी'ति ह्रस्वो दुर्लभः । ओणेर्ऋदित्करणेन बहिरङ्गस्याऽपि 'णौ चङी'त्यस्य प्रथमं प्रवृत्ति-ज्ञापनात् । ध्वनितं चेदं षष्ठस्य प्रथमाह्निके भाष्ये ]।

नन्वेजाद्योरिति व्यर्थम्, 'उपेतः' 'प्रेदिध'दित्यत्र निर्दिश्यमानपरि-भाषयैव वृद्धिवारणात् । तथाहि–'अवर्णाद् एत्येधत्योः पूर्वस्य, परस्य च निर्दिश्यमानयोरन्त्याद्योर्वृद्धि'रिति सूत्राऽर्थः । तत्र निर्दिश्यमान एकार एव, न त्विकार इति न तत्र दोषः । अत एव 'पचेयुरि'त्यादौ 'पच-इयुरि'ति-स्थिते 'उस्यपदान्तादि'ति न । अन्यथा 'यदागमा'इति न्यायेनेयुस उस्त्वेन तद्दुर्वारं स्यात् । मम त्विकारस्याऽनिर्दिश्यमानत्वान्न दोष इति चेन्न । 'निर्दिश्यमानस्ये'त्यस्य यतः षष्ठी उच्चारिता तस्य ग्रहणमित्यर्थः । 'आदची'-त्यत्र च न षष्ठी । 'पूर्वपरयो'रिति षष्ठी तु पूर्वपरशब्दाभ्याम् । तयोस्तु न ग्रहणमिष्टम् । तदर्थयोस्तु न उच्चारणेन षष्ठ्युच्चारणमित्यदोषात् । 'येन विधि'रित्यत्र भाष्यकैयटयोर्ध्वनितमेतत् । 'पचेयुरि'त्यादौ तु न दोषः । वाक्यार्थबोधवेलाया'मादेः परस्ये'त्येकवाक्यतया 'पूर्ववर्ण-पराद्योरेकादेश' इत्यर्थे उपस्थितत्वादुकारस्यैव परादित्वेन ग्रहणात् । 'यदागमा'इति न्यायस्तु लक्ष्यसंस्कारवेलोपस्थितिक इत्यदोष इत्याहुः ।

१ 'तथाहि अवर्णात्' इति ख. नास्ति । क. ग. पाठः ।

२ 'निर्दिश्यमानावयवयोरन्त्याद्योः' ख. पाठः ।

३ 'निर्दिश्यमानावयव एकार एव' ख. पाठः।

४ 'अनिर्दिश्यमानावयवत्वान्न' ख. पाठः ।

५ 'इत्याहुः' इत्यन्तोऽयं क. ग. पाठः । ख. पुस्तके तु–'मम त्विकारस्याऽनिर्दिश्यमानाऽवयवत्वान्न दोष इति चेन्न । धातुनिर्देशविहितश्तिपा धातोरेव निर्दिश्यमानत्वात् । स्थानिवद्भावेन स्थानिबुद्ध्यैव कार्यप्रवृत्त्याऽदोषाच्च । अत एव 'उपैती'त्यादौ वृद्धिः । अपरे तु इणीकारादौ'—इत्येवं पाठः ।

अपरे तु–'इणीकारादौ प्रतिषेधो वक्तव्य'इति वार्त्तिकात्, 'एत्येधत्यो-रेची'ति भाष्यस्य एधत्यंशे उपरञ्जकतया विशेषणत्वेनाऽप्युपपत्तेश्च, 'न त्वेधतेरव्यभिचारादि'ति वृत्तेश्च, 'मा भवान्प्रेदिधदि'त्यादेरनभिधान-मेव। यत्तु क्वचित्कैयटपुस्तके 'मा भवान्प्रेदिधदित्यत्र व्यभिचारादेध-तेरपि विशेषणमि'ति, तद्बहुषु पुस्तकेष्वनुपलम्भादप्रामाणिकम्। वार्त्तिक[1]-विरोधाच्चेत्याहुः। **पुरस्तादिति**।' पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते, नोत्तरानि'ति न्यायः। अवश्यं स्व-परस्मिन्बाधनीये, भेदेनाऽपेक्षायां प्रथमोपस्थितबाधेनाऽऽकाङ्क्षानिवृत्तिर्हि तद्बीजम्। **असाधुरेवेति**। आङि-णोरेकादेशस्य पूर्वान्ततया आङि पररूपेण बाधादिति भावः।

**अक्षादू**। अत्रा'ऽप्यक्षादूहिनीशब्दे परे वृद्धि'रिति वाक्यार्थे स्थिते'ऽलो-न्त्यस्ये'त्यनेनाऽकारस्य, 'आदेः परस्ये'त्यूकारस्य च वृद्धिः। ( '[2]तस्मादि-त्युत्तरस्ये'त्येतद्बोधितपरत्वघटितशास्त्रविषये एवाऽस्य प्रवृत्तिरि'ति मता-न्तरे तु–) [3]पदाऽस्वैरीतिनिर्देशादक्षशब्दाऽवयवाऽकारादूहिनीशब्दाऽवय-वेऽचि, विशेष्यभूतयोः पूर्वपरयोर्वृद्धिरित्यर्थ इति प्रत्ययलक्षणसूत्रस्थभाष्य-स्वरसः।

**अक्षौहिणीति**। ऊहोऽस्त्यस्या–ऊहिनी। अक्षाणामूहिनीति विग्रहः। परिमाणविशेषविशिष्टा सेना। 'पूर्वपदादि'ति णत्वम्।

---

१　'वार्त्तिकविरोधाच्च। लेखकप्रमादपतितं वेत्याहुः।' ख. पाठः।

२　क. पुस्तके कुण्डलितोऽयमंशः ख. पाठः। ग. तु नास्ति।

३　'पदास्वैरीति निर्देशादर्थाऽधिकाराच्च पूर्वपरशब्दाभ्यां वर्णयोः परस्पराऽव्यव-हितयोरेव ग्रहणेन, 'एकाऽऽदेशोऽवयवभूतयोरचोरेव, न तु कृत्स्नस्ये'ति सामान्याऽपेक्षज्ञापनेन वा, 'तदवयवेऽची'त्याद्यर्थज्ञापनेन वा, न कश्चिद्दोष इत्याहुः। परन्त्विदं 'ज्यादादीयस'इत्याद्यसिद्ध्याऽयुक्तमिति प्रागेव निरू-पितम्। अक्षौहिणीति'—इति खः पाठः।

( यदा तु 'अक्षाणामूह' इति विगृह्यते, तदाऽन्तरङ्गत्वाद्गुणे, 'अक्षोहिणी'त्येव। अपवादभूताया अपि वृद्धेरूहिनीशब्देन विग्रहे चारितार्थ्यात्।

न चैवं विग्रहेऽपि वृद्धिरेव युक्ता। अकृतव्यूहपरिभाषया गुणस्य दुर्लभत्वात्। अस्त्यत्राऽपि–'यदि गुणो न स्यात्तर्हि वृद्धिः स्यादि'ति सम्भावना। सम्भावनामात्रेण च तत्प्रवृत्तेः प्रागुपपादितत्वादिति वाच्यम्। 'समर्थ'-ग्रहणेन कृतसन्धिकार्यादेव तद्धितोत्पत्तिबोधनेन, तद्धितविषये प्रकृत्यंशे तदप्रवृत्तः। तद्घटकीभूतोहिनीशब्दस्य कल्पिताऽर्थेनाऽप्यर्थवत्त्वाऽभावाच्च। एतेन 'उपजनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते' इति न्यायेन गुणो न स्या'दित्यपास्तम्। तस्याऽचरितार्थविषयकत्वाच्चेत्याहुः )।

स्वेनेरितुमिति। यदा त्वीरणमीर इति घञन्तेन 'स्व'शब्दस्य स्वेनाऽभिप्रायेण ईर इति 'साधनं कृते'ति समासे, मत्वर्थीयेनिः, मत्वर्थन्नन्तेरिन्शब्देन वा समासः, तदा तदवयवीभूतेरशब्दमादायैव सिद्धिरिति भावः। भाष्यकृत्तु मत्वर्थीयेनिना स्वैरिशब्दं साधयित्वा, णिनेश्चाऽनभिधानं स्वीकृत्येरिन्ग्रहणं प्रत्याचख्यौ। केचित्तु[2]—स्वतन्त्ररूढ-'स्वैरि'शब्दे ताच्छीलिकणिनेः प्रसङ्ग एव न। फलाऽपेक्षायामपि स्वेच्छया व्यवहरणम्-स्वातन्त्र्यम्। फलाऽनपेक्षश्च व्यापारस्ताच्छील्यमिति भेदादित्याहुः। ( '[3]ईरेरिण्योरि'ति क्वाचित्कोऽपपाठः। 'स्वैरी'तिणिन्यन्तस्याऽस्त्रियां वृद्ध्यनापत्तेः। 'स्वैरिणी'त्यत्र तु ङीपः प्रागभागमादायैव वृद्धिः। लिङ्गविशिष्टपरिभाषोपन्यासस्तु निष्फल एव। स[4]मर्थपरिभाषा चेदृशेषु नेति 'ओत्वोष्ठयोरि'त्यत्र व्युत्पादयिष्यते )।

अर्थवद्ग्रहण इति। अस्या बीजं 'स्वं रूपमि'ति सूत्रे निरूपितम्।

---

१ क. कुण्डलितोऽयं ख. पाठः। ग. नास्ति।

२ 'केचित्तु' इति क. ग. पाठः। ख. नास्ति। ३ क. कुण्डलितः ख. पाठः। ग. नास्ति।

४ ख. पाठः। क. ग. नास्ति।

सीरदेवोक्तमस्या ज्ञापकं 'व्रश्चा'दि सूत्रे उपपादयिष्यते। दू[1]षयिष्यते च।

प्रैष्य इति। ण्यन्तादिषेः क्त्वो ल्यपि 'प्रेष्य गत'इत्यादौ पररूपमेव, न वृद्धिः। 'एष'साहचर्येणाऽनव्ययस्यैव एष्यस्य ग्रहणात्। ( न[2] च क्त्वाऽन्तेन समासकाले एवाऽन्तरङ्गत्वात्पररूपं भविष्यतीति वाच्यम्। अकृतव्यूहपरिभाषया तदप्राप्तेः। अस्ति चाऽत्राऽपि-'यदि पूर्वं पररूपं न स्यात्तर्हि वृद्धिः स्यादि'ति सम्भावने'त्याहुः)।

सुखार्त इति। कार्यकालपक्षे ऋत[3]शब्द-तृतीयासमाससापेक्षतया बहिरङ्गत्वेन वृद्धेरसिद्धत्वान्न विसर्गः। न च बहिरङ्गत्वस्यान्तरङ्गसापेक्षत्वेनाऽन्तरङ्गस्य च 'पूर्वत्राऽसिद्ध'मित्यसिद्धत्वादस्य बहिरङ्गत्वाऽभाव इति वाच्यम्। कार्यकालपक्षे बहिरङ्गपरिभाषोपस्थितिसामर्थ्येन[4]—पूर्वत्राऽसिद्धत्वस्य बाधात्। अत एव 'नार्कुट' इत्यादौ न विसर्गः।

न चैवमपि 'किं कार्यकालपक्षमाश्रित्य 'पूर्वत्राऽसिद्धमि'त्यस्य बाधः कार्यः, उत यथोद्देशमाश्रित्याऽऽन्तरङ्गपरिभाषाया बाध' इत्यत्र विनिगमकाऽभावादनया पूर्वाऽसिद्धत्वेन 'पूर्वत्राऽसिद्धमि'त्यस्य प्रवृत्तिप्रतिबन्धेन, तेन च परस्याऽसिद्धत्वे, तन्निरूपितबहिरङ्गत्वाऽभावेनाऽस्याः प्रतिबन्धेन, प[5]रस्परविरोधे, द्वयोरप्यप्रवृत्त्या[6]पत्तौ विसर्गो दुर्वारः। स्पष्टं चेदं 'खरवसानयोरि'ति सूत्रे भाष्ये इति वाच्यम्। लक्ष्याऽनुरोधेनाऽत्र कार्यकालपक्षस्यैव, बहिरङ्गपरिभाषाया एव चाऽङ्गीकारात्। 'हरिरि'त्यादौ पूर्वसवर्णदीर्घादीन्प्र[7]ति विसर्गाऽसिद्धत्वबोधनेन 'पूर्वत्रा-

---

१ 'दूषयिष्यते च'इति क. नास्ति।

२ ख. पाठः। क. ग. नास्ति। ३ 'सापेक्षत्वेन' इत्यन्तः क. ग. पाठः। ख. नास्ति।

४ 'सामर्थ्येन' इत्यन्तः ख. नास्ति।

५ 'परस्परविरोधे' इत्यतोऽग्रे 'विनिगमकाऽभावाच्च' इत्ययमंशः क. पुस्तके स्थितोऽपि तत्रैव मसीलेपेन दूरीकृतः। 'द्वयोः परस्परविरोधे' इति तु ख. पाठः।

६ 'प्रवृत्त्यापत्तेश्च परत्वाद्विसर्गो' ख. पाठः।

७ पर्वसवर्णदीर्घाऽसिद्धत्वबोधनेन पूर्वत्रासिद्धमित्यस्य' क. पाठः।

ऽसिद्धमि'त्यस्य सर्वथा बाधाऽभावाच्च। स्पष्टं चेदं तत्रैव कैयटे। 'संयोगान्तलोप'सूत्रे भाष्ये च ध्वनितम्।

ननु 'नाऽजानन्तर्य'इति निषेधः। अत्र च 'षत्वतुकोरि'ति सूत्रस्थ-षत्वग्रहणं ज्ञापकम्। अन्यथा 'कोऽसिचदि'त्यादौ पदाऽन्तरसापेक्ष-बहिरङ्गैकादेशस्याऽसिद्धत्वेन षत्वाऽप्रवृत्तौ किन्तेन ?। त्रिपादीस्थेऽपि षत्वे कार्यकालपक्षाश्रयेणाऽस्याऽसिद्धत्वमिति चेन्न। पश्चात्प्रवर्त्तमाने विधावजानन्तर्ये तत्प्रवृत्तेः। अत एव 'पचावेद'मित्यादिसिद्धिः।

न च षत्वविधाविण्ग्रहणं, तच्च परेणैवेति न तत्राऽजानन्तर्यम्। तन्मध्येऽचामप्यन्तर्भावसत्त्वेनाऽदोषात्। अत एव 'अचोरानन्तर्यमि'ति वदन्तः परास्ताः। धर्मिग्राहकमानादेव चाऽस्याः स्वबोधकोत्तरविभक्ति-बोधिताऽज्निष्ठाऽऽनन्तर्य एव प्रवृत्तिः। अत एव 'ग्रामणि कुल'मित्यादौ 'ह्रस्वस्ये'ति तुक्-असिद्धिपरिभाषया व्यावर्त्तितः 'ङमो ह्रस्वा'दिति... 'कृन्मेजन्त'सूत्रे भाष्ये।

एतेन 'तुग्ग्रहणमपि ज्ञापकमि'ति परास्तम्। 'प्रेत्ये'त्यादौ–( धातूप-सर्गकार्यत्वेनैकादेशस्याऽन्तरङ्गत्वाच्च। किञ्च )–समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं पूर्वपदसम्बन्धेन समासे जाते, तत्र संहिताया नित्यत्वात्, ल्यबुत्पत्ति-पर्यन्तमप्यसंहितयाऽवस्थानाऽसम्भवेन पूर्वमेकादेशे, बहिर्भूतल्यबपेक्षतुग-पेक्षया धातूपसर्गकार्यत्वेन तस्याऽन्तरङ्गत्वेन बहिरङ्गाऽसिद्धत्वस्य दुरुप-पादत्वाच्च। 'अकृतव्यूह'परिभाषाया अन्तरङ्गपरिभाषाऽपवादकत्वेन तयाऽप्राप्ततुक्प्राप्तयेऽसिद्धत्ववचनस्याऽऽवश्यकत्वाच्च–इति दिक्।

वत्सतर। अत्र 'वत्स'-'वत्सर'शब्दावपि केचित्पठन्ति, तद्भाष्या-ऽनुक्तम्।

उपसर्गादृ। 'ऋतो'ति तपरकरणमुत्तरार्थम्। तेन 'उपऋकारीयती'-

---

१ 'अस्याऽसिद्धत्वम्' इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

२ क. ग. नास्ति। ख. पाठः।

३ 'बहिर्भूतल्यबपेक्षया' ख.पाठः। ४ 'इति दिक्' इत्यन्तः ख.पाठः। क. ग. नास्ति।

५ 'धातुग्रहणात्' इत्यन्तोऽयं ग्रन्थः ख. नास्ति।

त्यादौ न 'वा सुपी'ति वृद्धिः । 'ऋकारशब्दादाचारक्विपि 'उपकारती'त्यादौ वृद्धिवारणायेहार्थमपी'त्यन्ये । सौत्रऋतिग्रहणन्तु न । 'ऋतावि'त्येव सिद्धे धातुग्रहणात् ।

'आदि'त्यनुवृत्तेन विशेषणेन तदन्तविधिमभिप्रेत्याऽऽह—**अवर्णान्तादिति** । 'यस्मिन्विधिरि'ति परिभाषालभ्यमाह—**ऋकारादाविति** ।

न च 'गतेर्ऋती'त्येव सूत्र्यताम् । 'अच्छर्छति' 'अच्छौखती'त्यादौ दोषाऽऽपत्तेः ।

**अन्ता** । इह 'एकः पूर्वपरयोरि'त्यनुवर्त्तते । यथासङ्ख्यं च । अन्ताऽऽदिशब्दावुपस्थितैकादेशस्थानिपरौ । पूर्व-परशब्दौ च तद्घटित-समुदायपरौ । तदयमर्थः—

'पूर्वस्य, परस्य च समुदायस्याऽन्ताऽऽदिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्व-सुबन्तत्व-प्रत्ययत्वादयस्ते कृतैकादेशस्याऽपि भवन्ति' । एवञ्च 'रामावि'त्यादौ पराऽऽदिवद्भावेन 'औ' इत्यस्य सुप्त्वे, पूर्वमान्तस्यैकदेशविकृतन्यायेन रामशब्दत्वे, यस्माद्विहितस्तदादि-तदन्तत्वमार्थसमाजग्रस्तम् । तदेतत्फलितमाह—**योऽयमित्यादि** ।

इदमल्विधौ न प्रवर्त्तते । तुक्यसिद्धत्ववचनाज्ज्ञापकात् । अन्यथा-ऽधीत्ये'त्यादावादिवद्भावेन ह्रस्वप्रयुक्ततुक्सिद्धेरसिद्धवचनवैयर्थ्यं स्पष्टमेव । तेन ह्वेञो 'जुहावे'त्यादौ'आत औ णल' इत्यौत्वं, 'खट्वाभिरि'त्यत्र ऐस् च न । 'अयजे इन्द्रमि'त्यादौ सवर्णदीर्घश्च न ।

---

१ 'सौत्रऋतिव्यावृत्तिस्तु 'आदची'ति वर्णप्रकरणात्'—इति क. कुण्डलितः ख. पाठः । ग. तु नास्ति ।

२ इतोऽग्रे—'यद्यप्यन्ताऽऽदिशब्दाभ्यामेव ससम्बन्धिकत्वात्तौ समुदायावाक्षेप्तुं शक्येते, तथाऽपि 'पूर्वपरयोरि'त्यनुवृत्तिसामर्थ्यादयमर्थः' इति ख. पाठः ।

३ 'एकादेशविशिष्टस्यापि' ख. पाठः ।

४ 'पूर्वमान्तस्य' इत्यारभ्य 'यस्माद्विहितः' इत्यन्तोऽयं क. ग. पाठः । ख. नास्ति ।

५ 'अत एव इदमल्विधौ' इति ख. पाठः ।　　६ 'ज्ञापकाच्च' ख. पाठः ।

अत एव 'वर्णाऽऽश्रये चाऽन्तादिवद्भावप्रतिषेधो वक्तव्यः । न वाऽताद्रूप्याऽतिदेशादि'ति भाष्यं सङ्गच्छते ।

( यत्तु 'काण्ड' इत्यादौ परादिवद्भावेन प्रत्ययाऽन्तत्वात्प्रातिपदिकाद्य-भाव' इत्यर्थवत्सूत्रे भाष्ये उक्तम् । 'प्रातिपदिकाऽप्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेने'ति च । तत्सम्यगेव । न च 'प्रत्ययग्रहणे' इति परि-भाषया उभयत आश्रयणात्तन्निषेधः । तदन्तग्रहणप्रयुक्ताऽतिप्रसङ्गनिरा-करणं हि तत्फलम् । तया हि 'तदन्त'शब्दे तावत एवाऽन्यपदार्थता बोध्यते । एवं च सुबन्तत्वादिना निमित्तता, न तु यस्माद्विहितत्वादिना-ऽपि निमित्ततेति भाष्याशयात् । 'अभीया'दित्यादौ तूपसर्गत्वेण्त्वाभ्यां निमित्तता स्पष्टैवेति बोध्यम् । 'यस्माद्विहितत्वादिनाऽपि तदुपस्थिति'रिति वादिनान्तु स्थानिवद्भावेन प्रत्ययान्तत्वं बोद्धव्यम् । 'न लुमते'ति सूत्रे भाष्ये—'सुप्तिङन्त'मितिसूत्रे 'यस्मात्प्रत्ययविधि'रित्याद्यनुवृत्तिरुक्ता, तत्पक्षेऽपि स्थानिवत्त्वेनैव 'रामा'वित्यादौ पदत्वं बोध्यम् ) ।

एवं च 'पूर्वपरयोरि'ति द्विवचननिर्देशेनोभयोरपि प्रत्येकं स्थानित्व-सत्त्वेन स्थानिवत्सूत्रेणैव सिद्धे, इदं न कार्यम्[1] । ( एवं[2] च 'प्राच्छंती'-त्यादौ विसर्गवारणाय ज्ञापकाश्रयणमपि न कार्यम्[3] । यतस्तत्र स्थानि-वत्त्वेन रेफान्ते पदत्वं दुर्लभम् । तस्य तत्स्थानिधर्मत्वाऽभावात् ।

आनुमानिकवचनकल्पनया[4] 'च ऋषी'त्यस्य 'चर्ष्या'देशे तु समुदाये 'च'शब्दधर्माणां[5] स्थानिवत्त्वेन लाभेऽपि, रेफे पदान्तत्वस्य दुर्लभत्वात् ) —इति प्राञ्चः ।

अत्र वदन्ति,—एकादेशे वर्णयोरेव स्थानित्वं, न समुदायस्येति

---

१ ख. पाठः । क. ग. नास्ति ।

२ 'न कार्यमिति प्राञ्चः' इत्येवं क. ग. पाठः ।

३ ख. ग्रन्थः । ग. नास्ति । क. कुण्डलितोऽयम् ।

४ 'वचनकल्पनया 'प्र-ऋच्छेत्यस्य प्रर्च्छादेशे तु' इति क. पाठः ।

५ 'समुदाये 'प्र'-शब्दधर्माणाम्' इति क. पाठः ।

'सर्वो'शब्दादेः ( पूर्वान्तत्वेन[1] लभ्यमान—) सर्वनामत्वाऽप्रसङ्गः। सर्वनामत्वस्यैकादेशस्थानिधर्मत्वाऽभावात् । आनुमानिकाऽऽदेशकल्पकवाक्यन्तु 'पूर्वपरघटितसमुदायस्यैकादेशघटित आदेश' इत्येव, न तु तयोः समुदाययोः प्रत्येकं स्थानित्वबोधकम् , मानाभावादिति न तत्पक्षमादायाऽप्युपपत्तिः। तथात्वे च 'स्वाऽश्व'शब्दस्याऽऽनुमानिकं स्थान्यादेशभावं गृहीत्वा, समुदायस्य स्थानिवत्त्वेन 'स्व'शब्दत्वात्तत'ईरिन्'शब्दे वृद्ध्यापत्तिरिति[2]। स्थानिवत्सूत्रे[3] च यथाकथञ्चित्स्थानषष्ठीनिर्दिष्टस्यैव ग्रहणम्।

किञ्चोभयत आश्रयणे नाऽन्तादिवदित्यस्याऽसङ्गतौ 'अभीयादि'त्याद्यसिद्धिः। स्थानिवद्भावस्तूभयत आश्रयणे इष्यत एव। अन्यथा ( पद[4]संज्ञायामुभयाश्रयणाऽङ्गीकर्तॄणां मते 'अ'शब्दस्य सप्तम्येकवचने 'ए' इत्यादौ स्थानिवद्भावेन पदत्वाऽनापत्तिः। स्थानिवत्त्वेन लभ्ये कार्ये उभयत आश्रयणे नेत्यर्थेन पदत्वेऽपि तत्सत्त्वात्। अन्यथा 'अभीयादि'त्यत्र ह्रस्वस्याऽप्यापत्तिः)। 'अचः परस्मिन्नि'त्यस्याऽप्युभयत[5] आश्रयणेऽप्रवृत्त्यापत्तौ 'प्लायते'इत्याद्यसिद्ध्यापत्तेः। ( भाष्योक्त[6]न्यायसिद्धताऽनापत्त्या वचनाऽऽरम्भे गौरवञ्च। 'अन्तादिवच्चेति' सूत्रसत्त्वे तु भाष्योक्तन्यायसिद्धता युक्ता। अन्ताऽऽदिशब्दाभ्यां नानादेशत्वस्य शब्दोपात्तत्वात्। तथा च भाष्यं—'नास्ति यौगपद्येन सम्भवः। नैक उभयोः प्रेष्योऽविरोधार्थी कस्याऽपि करोती'ति। न चाऽतिदेशेनाऽऽहार्योऽऽरोपबोधनाज्ज्ञानयौगपद्यस्याऽपि स्वीकाराच्च कथं यौगपद्येनाऽसम्भव इति वाच्यम्। ज्ञानयौगपद्याऽनङ्गीकर्तृमते भाष्यस्य सत्त्वात्। यौगपद्याऽङ्गीकारे तु वचनमावश्यकमेव )।

---

१ क. ग. नास्ति। ख. पाठः। २ 'स्वाशब्दस्य' ग. पाठः।

३ 'स्थानिवत्सूत्रे' इत्यारभ्य 'ग्रहणम्'इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

४ क. ग. नास्ति। ख. पाठः।

५ 'अचः परस्मिन्नित्यस्योभयत' ख. पाठः। ६ क. ग.नास्ति। ख. पाठः।

इदमेवाऽभिप्रेत्य भाष्यकृताऽन्तादिवत्सूत्रं न प्रत्याख्यातम् । किञ्च 'षत्वतुकोरि'तिसूत्रे 'पदान्तपदाद्योरेकादेशोऽसिद्ध' इत्यवश्यं वाच्यम् । अन्यथा वेञ आत्वे क्विपि संप्रसारणे 'उदि'त्यादौ तुगभावापत्तेः । 'शक-हूष्वि'त्यादौ ह्वेञः क्विपि संप्रसारणे षत्वाऽनापत्तेश्च । एवं च तत्र'पदस्ये'-त्येव वाच्यम् । 'अन्ताऽऽदी'त्यनुवृत्त्या, 'पूर्वपरयोरि'त्यनुवृत्त्या चेष्टाऽर्थ-लाभः । 'पूर्वपरयोरि'त्यनुवृत्त्या 'उदि'त्यत्र पदस्य विभज्याऽन्वाख्यानपक्षेऽपि न दोषः । 'पूर्वपदान्त–परपदाद्योरि'त्यर्थात् । 'अभिप्रेत्ये'त्यादौ तुक्-सिद्धिस्तु सुबन्तेन समासे बोध्या । 'गतिकारके'त्यस्याऽनित्यत्वात् । पदशब्देनाऽर्थवत उपलक्षणाद्वेति दिक् ।

निर्देशादिति । (धातूपसर्गकार्यत्वेन वृद्धेरन्तरङ्गत्वाद्बहिरङ्गत्वेन समा-धानमशक्यमिति भावः । वस्तुतो धातूपसर्गनिमित्तवृद्ध्यपेक्षयोपसर्गो-ऽवयवमात्रनिष्ठपदान्तत्वनिमित्तकविसर्गेऽन्तरङ्गत्वमस्त्येवेति तदप्यत्र समाधानं वक्तुं शक्यमित्याहुः ) । यत्तु'कर्त्तरि चर्षी'त्यादौ गुणस्य पदद्वयाऽऽश्रितत्वेन बहिरङ्गत्वाद्रेफाऽभावादेव न विसर्ग' इति, तन्न ।

पदद्वयसम्बन्धिवर्णद्वयाश्रितत्वेन गुणस्येव, पदद्वयसम्बन्धिरेफ-खरात्मकवर्णद्वयाश्रितत्वेन विसर्गस्याऽपि तत्त्वात् । एवञ्च निर्देशज्ञापकता 'कृष्णर्द्धिरि'त्याद्यर्थमावश्यिकैव । परनिमित्तकत्वमप्युभयोः समम् ।

(न च 'संयोगान्तलोप'सूत्रे-'यणः प्रतिषेधो वाच्यः' । दध्यत्र । 'संयोगा-

१ पूर्वपरयोरित्यनुवृत्त्या वेञः क्विपि, सम्प्रसारणे, भ्यामि, 'उभ्यामि'त्यादौ पदस्य विभाज्याऽन्वाख्यानपक्षेऽपि 'उत् भ्यामि'त्यादौ न दोषः' ख. पाठः । क. ग. नास्ति । २ ख. पाठः ।

३ इत आरभ्य 'समम्' इत्यन्तोऽयं क. ग. पाठः । ख. तु–'तन्न । गुणशास्त्रेण पदद्वयाऽनपेक्षणात् । न च संयोगान्तलोपसूत्रे' इति ख. पाठः ।

४ ख. पाठः ।

दिलोपे च' । काक्यर्थम् । न वा, झलो लोपात् । झलो लोपः संयोगान्तलोपः । बहिरङ्गलक्षणत्वाद्वे'ति भाष्यमसङ्गतं स्यात् । त्वदुक्तरीत्या 'दध्यत्रे'त्यत्र यणो बहिरङ्गत्वाऽनापत्तेरिति वाच्यम् । परस्थानिकमिव परनिमित्तकमपि बहिरङ्गमित्याशयेन तत्सत्त्वादिति यावद्वाधं साधु ) ।

उपसर्गेणैवेति । तत्संज्ञायाः क्रियायोगनिमित्तत्वादित्यर्थः । अत एव[1] 'यदर्थे क्रियारूपे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्व'मिति प्रागुक्तत्वात्, प्रत्यासत्तिन्यायेन ऋकारादिनिमित्तोपसर्गत्वस्य ग्रहणाच्च 'प्रभूत ऋद्धः प्रर्द्ध' इत्यत्र नाऽतिप्रसङ्ग इति[2] बोध्यम् ।

पुनरिति । इदं प्रकृतसूत्रे भाष्ये स्पष्टम् । एतेन-'न माङ्योगे' इतिसूत्रे भाष्ये 'अजादीनामटा सिद्धमि'त्युक्त्वा, 'अटश्चे'ति सूत्रं विधाय, 'अस्वपो हसती'त्यत्र वृद्धिमाशङ्क्य, 'धातावि'त्यपकृष्य समाहितत्वेन, धातुग्रहणस्य चारितार्थ्याद्योगविभागे मानाऽभाव'इति परास्तम् । पूर्वसूत्रे एव कर्त्तव्येऽत्र करणेनेदृशफलस्याऽपि वक्तुं शक्यत्वाच्च[3] । अत एव 'उभयोः शेष' इति भाष्ये उक्तम् ।

वा सुपि । सुब्धाताविति । 'सुबन्तप्रकृतिके धातावि'त्यर्थः । 'तुल्यास्ये'ति सूत्रे 'उपार्कारीयति' 'उपाल्कारीयती'ति 'वा सुप्यापिशलेरि'त्यस्य भाष्यकृतोदाहरणात् । 'सुबन्ते धातावि'त्यर्थे हि तदसङ्गतं स्यात्[4] ।

---

१ 'अत एव' इति ख. नास्ति ।

२ 'इति भावः' ख. ग. पाठः ।   ३ चकारः ख. नास्ति ।

४ इतोऽग्रे—'प्रर्षभती' त्यादावाचारक्विबन्ते, 'प्रर्षभयती'त्यादावाख्यानण्यन्ते च नेदं प्रवर्त्तते । सुब्धातुत्वाऽभावादित्याहुः । यत्तु 'सुबन्तस्य धातोरसम्भव'इति, तन्न । 'ऋज गतावि'त्यादेः क्विपि सम्भवात् । तपरकरणं त्वत्र पक्षे ऋकारशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि व्यावृत्त्यर्थम् । मत्पक्षे तु 'उपऋकारीयती'ति व्यावर्त्यं प्रसिद्धमेव । 'ऋती'ति च श्रूयमाण'सुपी'त्यस्यैव विशेषणं, न त्वाक्षिप्तधातोः । तेन ऋकारादिसुबन्तप्रकृतिके इत्यर्थः । तेन 'ऋषभस्य समीपम्,-उपर्षभं, तदिच्छति—उपर्षभीयती'त्यत्र न वृद्धिः । ऋषभ-

शास्त्रे सुबन्तस्य धातुप्रकृतित्वेनोक्तेः 'सुपी'त्यस्य तत्प्रकृतिके लक्षणै-वोचिता, न तु तदवयवके इति बोध्यम्। ऋषभस्य समीपम्-उपर्षभम्, तदिच्छति 'उपर्षभीयती'त्यत्र तु न वृद्धिः। 'उपे'त्यस्य उपसर्गत्वाऽभावात्[1]।

अत्राऽपि 'धाताविं'त्यनुवर्त्त्य वाक्यभेदेन[2] व्याख्येयम्। तेन सुब्धातावपि न प्रकृतिभाव इति बोध्यम्। प्रार्षभीयतीति। 'अचो रहाभ्यामि'ति षस्य द्वित्वन्तु न। 'शरोऽची'ति निषेधात्। अत्राऽनुपन्यासस्तु व्यञ्जना-[3]त्परस्यैकस्याऽनेकस्य वोच्चारणे विशेषाऽभावत्रादिमते'ऽचो रहाभ्या'मि-त्यस्य, 'शरोऽची'त्यस्य चाऽनावश्यकतां ध्वनयितुमित्याहुः।

प्रेजत इति। 'एजृ दीप्तौ'। कम्पने तु परस्मैपदी। वाक्यभेदेनेति। इदं च वृत्तौ स्पष्टम्। भाष्ये तु न दृश्यते। ([4]औतोऽमिति सूत्रे भाष्ये ध्वनितं चेति भाष्यप्रदीपोद्द्योते निरूपितम्)।

एवे चेति-वार्त्तिकम्। एतदारम्भसामर्थ्यादेव सूत्रे'धाता'वि'ति मण्डूकप्लुत्याऽनुवर्त्तितम्। ओम्यारम्भाच्च। अवधारणमिति। नियम इत्यर्थः। ( तदुक्तं वृत्तौ-'एवम्तु विषयो वृद्धेर्नियमेऽयं यदा भवेदि'ति। एतेन 'नियोगो व्यापार' इति परास्तम्। 'शाकटायनस्यैवे'त्यादिनिर्देश-विरोधाच्च। यत्तु 'श्लोकवार्त्तिकमिदमि'ति। तद्भ्रमसात्। 'वृत्तौ भवमि'ति व्याख्याने तु 'वार्त्तिक'शब्दस्य पूर्वनिपाताऽऽपत्तिः )[5]।

---

शब्दस्याऽन्तर्वर्त्तिविभक्त्या सुबन्तत्वेऽपि, क्यचस्तत्प्रकृतिकत्वाऽभावात्। धातुसंज्ञानिमित्ते प्रत्यये कृते उपसर्गस्य पृथक्करणाद्धातुत्वं परम्,-'ऋषभीय'-शब्दस्यैव। अत एव 'उपाऽऽर्षभीयते'त्यादौ उपात्पूर्वं नाऽऽट्। पूर्वत्र क्लृप्त-तया धातोरेव विशेषणेऽपि न क्षतिः। क्यजन्तं प्रति 'उपे'त्यस्योपसर्गत्वा-ऽभावात्। एतेन 'सुबन्तावयवके धाताविंति व्याख्यानमप्युज्जीवितम्' —इति ख. पाठः। क. ग. तु नास्ति।

१ 'उपसर्गत्वाऽभावात्' इत्यन्तोऽयं ख. नास्ति। क. ग. पाठः।

२ 'योगविभागेन' ख. पाठः। क. ग. नास्ति। ३ 'नहि व्यञ्जनात्परस्य' ख. पाठः।

४ क. ग. नास्ति। ख. पाठः। ५ क. कुण्डलितः ख. पाठः। ग. नास्ति।

एवशब्दस्याऽर्थद्वयम्—अवधारणम्, अनवक्लृप्तिश्च । तत्राऽवधारणे प्रतिषेधादनवक्लृप्तिरेवाऽत्र एवशब्दार्थ इत्यभिप्रेत्याह–अनवक्लृप्तावेवेति । अनवक्लृप्तिः = असम्भवः । 'क्वेव भोक्ष्यसे' इत्युक्ते नास्ति सम्भवस्तव भोजनस्येति गम्यते । असम्भवश्च—स्थलस्य सङ्कीर्णत्वादिना बोध्यः ।

[1]'त्वं भोक्ष्यसे इति न संभावये' इत्यर्थ इत्यन्ये ।

अचोऽन्त्या । 'अच' इति निर्धारणे षष्ठी । जातावेकवचनम् । अन्ते भवोऽन्त्यः । 'अन्त्यादी'तिनित्यसापेक्षत्वाद्बहुव्रीहिः ।

शकन्ध्वा । विषयत्वं सप्तम्यर्थः । 'शकन्ध्वादिविषये तत्सिद्ध्यनुगुणमि'त्यर्थः । तत्सामर्थ्यलभ्यमाह—तच्च टेरिति । यदि तु 'आदि'त्यधिकारादकारस्यैवेष्यते, तर्हि मनीषा-पतञ्जली न सिध्येताम् । यदि तु मनः-पतच्छब्दयोः पृषोदरादित्वादन्त्यलोपेऽकारस्यैव पररूपमुच्यते, तर्हि वचनद्वयव्यापारो व्यर्थः । पृषोदरादिलोपेनैव सिद्धेरित्याहुः ।

शकन्धुरिति । शकानां = देशविशेषाणामन्धुः = कूप इत्यर्थः । देश[3]-विशेष'शब्दस्य यौगिकत्वेन जातिवाचकत्वाऽऽभावाद् 'विशेषणानां चाऽजातेरि'ति न निषेध इत्याहुः ।

कुलटेति । पचाद्यजन्तेन 'अट'शब्देन कर्मणः शेषत्वविवक्षणात्षष्ठीसमासः । अन्यथा कर्मण्यणि 'कुलाटी'ति स्यात् । केशवेश इति । तथा च वार्त्तिकम्—'सीमन्तः केशेषु' इति । मनीषेति । मनसो, हलस्य चेषेति विग्रहः । 'ईष उञ्छे', 'ईष गत्यादिषु' । आभ्यां 'गुरोश्चे'त्यप्रत्यये–'ईषा' ।

---

१ 'इत्यन्ये' इत्यन्तोऽयं क. ग. पाठः । ख. नास्ति ।

२ 'न निषेध इत्याहुः' इत्यन्तः क. कुण्डलितः ख. पाठः । ग. नास्ति ।

३ एतत्पाठस्थाने 'अत्राऽवयवगतं बहुत्वं समुदाये आरोप्य 'देशविशेषाणा'-मिति बहुवचनम् । 'विशेषणानां चाऽजाते'रिति निषेधस्तु लुबर्थविशेषणत्व-प्रयुक्तप्राप्तलिङ्गवचनादिनिषेधद्वारा 'अङ्गा जनपद' इत्यादिप्रयोगसाधनाऽर्थो, न तु 'अङ्गा जनपदा' इदिनिवृत्त्यर्थः'—इति ख. पाठः । क. ग. नास्ति । ख. पाठः । ४ 'जातिवाचकत्वाऽभावाच्चेत्याहुः' ख. पाठः ।

टाङसि । 'अङ्गस्ये'ति षष्ठ्या 'अतो भिस' इत्यतोऽनुवृत्तेनाऽत इत्यनेन पञ्चम्यन्तेन सामानाधिकरण्याऽनुरोधात्पञ्चम्या विपरिणाम इत्याशयेनाऽऽह—अकारान्तादित्यादि ।

सुपि च । 'अतो दीर्घो यञी'त्यतो 'यञी'त्यनुवर्त्तते । अल्त्वाच्च तेन तदादिविधिरित्याह—यञादाविति ।

अतो भि । अकारान्तादङ्गादिति । यद्यप्य'ङ्गनिमित्तस्य भिस' इत्यादिरीत्या भाष्ये व्याख्यातं, तथाऽपि विशेष्याऽसन्निधानात्तदन्तविधिर्न स्यादिति विभक्तिविपरिणामेनैव व्याख्यातम् । अन्यथा हि प्रत्यासत्त्या यत्राऽकारोऽङ्गसंज्ञकस्तत्रैव स्यात् । न च तपरकरणवैयर्थ्यम् । 'अकारो वासुदेवः स्यादाकारस्तु पितामह' इत्यादिकोशसिद्धाऽशब्दव्यावृत्त्यर्थत्वात् । 'नेदमदसो'रिति ज्ञापकेन[1] तदन्तग्रहणे तु प्रतिपत्तिगौरवमिति भावः ।

([2] ननु 'एसि'त्येवास्तु । 'अतो गुणे' इति तु न । एकारोच्चारणात् । अन्यथा इसमेव विदध्यादिति चेन्न । द्विमात्रत्वाऽविशेषेण लाघवाऽभावात् । एवं च पररूपशङ्कैव नास्तीति महल्लाघवम् । 'नद्यै'रित्यादिसिद्धये उत्तरार्थं तदि'त्यन्ये । 'निर्जरसैरि'त्यर्थन्तु न । सन्निपातपरिभाषया जरसादेशाऽप्रवृत्त्या 'निर्जरैरि'त्यस्यैव भाष्यसंमतत्वात् ) ।

ङेर्यः[3] । 'ङेरि'ति चतुर्थ्येकवचनस्यैव ग्रहणम्, व्याख्यानादित्यभिप्रेत्याह—ङे इत्यस्येति । सन्निपातेति । उपजीव्यविरोधन्यायमूलिकैषा ।

---

१ 'ज्ञापकादिना तदन्त' ग. पाठः ।

२ क. कुण्डलितः ख. ग. पाठः ।

३ 'ङेर्यः । 'सर्वनाम्नः स्मै' इत्यत्र चतुर्थ्येकवचनस्यैव ग्रहणम् । सप्तम्येकवचनस्य स्मिन्नादेशविधानात् । न च विकल्पोऽस्तु । 'सर्वनाम्नः स्मैस्मिनावि'त्येव सिद्धे 'ङसिङ्योरि'तिसूत्रे ङिग्रहणस्य वैयर्थ्यापत्तेः । एवञ्चाऽर्थाऽधिकारानुरोधादिहापि तस्यैव ग्रहणं, व्याख्यानाच्चेत्यभिप्रेत्याह ङे इत्यस्येति' इति क. कुण्डलितो, ग. पाठः ।

ज्ञापकमपि–'वाऽचि ह्रस्वश्चे'त्येव सिद्धौ 'ङिति ह्रस्वश्च' 'वाऽऽमी'ति सूत्रद्वयम्। तद्धि 'भ्रूणामि'त्यादौ नुट् स्यादित्येवमर्थम्। नुटि अजादित्वस्य विनाशात्। 'सन्निपातः = संश्लेषः, तन्निमित्तो यो विधिः, स तं सन्निपातं यो विहन्ति स तद्विघातः, तस्याऽनिमित्तमि'त्यर्थः। ( उप[2]जीव्यविरोधस्याऽन्याय्यत्वमप्येतद्बीजम् )। [3]असिद्धस्याऽपि तद्विघातकविधेरनेन निवृत्तिः। आरोपिताऽसिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनोपजीव्यविरोधस्य दुर्वारत्वात्। ध्वनितं चेदं 'कृन्मेजन्त' इति सूत्रे भाष्ये इत्यष्टन्शब्दे निरूपयिष्यामः।

स[4]न्निपातलक्षणविधित्वमस्या लिङ्गम्। 'य[5]योः संनिपातो निमित्तं कार्यस्य तयोः सूत्रे उपादानमपेक्षितमि'ति तु नाऽऽग्रहः। अत एव 'दाक्षि'रित्यत्राऽकारान्तप्रकृतीञ्संनिपातनिमित्तकाऽङ्गसंज्ञा एतत्परिभाषयाऽल्लोपस्य निमित्तं न स्यादित्याशङ्क्याऽनित्यत्वेन समाहितं कृन्मेजन्तसूत्रे भाष्ये। न ह्यङ्गसंज्ञायामदन्तस्याऽङ्गसंज्ञेत्युक्तमस्तीति दिक्।

निर्देशेनेति। न चाऽस्य निर्देशस्या'ऽकृत्सार्वे'तिदीर्घेणोपपत्तेः कथमनित्यत्वे ज्ञापकत्वमिति वाच्यम्। तस्याऽपि सन्निपातपरिभाषयाऽप्रवृत्तेः। न च परत्वा'दकृत्सार्वे'त्यस्यैवोचितत्वेन, 'सुपि चे'ति दीर्घ' इत्यसङ्गतमिति वाच्यम्। कार्यैक्ये विप्रतिषेधाऽभा[6]वेन दोषाऽभावात्। फले विशेषाऽभावेनाऽत्राऽसाधारणप्रयोजनाऽभावाच्च न तदुपन्यास इति तत्त्वम्। 'तस्या'ऽकृदि'त्यादिपर्युदासेनाऽसुप्येव प्रवृत्ति'रिति केचित्।

---

१ 'अत्र ज्ञापकं वाचि' ख. ग. पाठः।

२ ख. ग. पाठोऽयम्। 'त्वमेतद्बीजम्' इत्येवं तु ग. पाठः।

३ 'अत एव असिद्धस्यापि' ख. पाठः।

४ 'संनिपातलक्षणविधित्वमस्या लिङ्गम्' इति ग. नास्ति।

५ 'ययोः' इत्यारभ्य 'दिक्' इत्यन्तोऽयं क. पाठः। ख. ग. च. नास्ति।

६ 'विप्रतिषेधाभाववादिनां मते दोषाऽभावात्' ख. ग. पाठः।

झलि किं, रामाणामिति । यत्तु 'झलीत्यस्याऽभावे 'यञी'त्यस्याऽनुवृत्तौ, 'उतो वृद्धि'रित्यतो 'हली'त्यनुवृत्तौ वा, सन्निपातपरिभाषया एत्वाऽप्राप्तेश्चिन्त्यमिदमि'ति । तन्न । 'यञी'त्यस्याऽनुवृत्तौ 'रामेष्वि'त्यादावनापत्तेः । 'हली'त्यनुवृत्तौ तु झल्ग्रहणं सन्निपातपरिभाषाया एत्वेऽप्रवृत्तिज्ञापनार्थम् । अत एव 'सर्वेषामि'त्यादावेत्त्वसिद्धिः । एतेन 'बहुवचने किम् ?, रामो रामस्ये'त्यपि व्याख्यातम् । अन्यथा सन्निपातपरिभाषया एत्त्वाऽप्रवृत्तौ, 'रामस्ये'ति[1] प्रत्युदाहरणमसङ्गतं स्यात् । 'रामाभ्यामि'त्यपि प्रत्युदाहरणम् । न च 'बहुवचने झलीगि'त्येव सूत्र्यतामिति वाच्यम् । 'ज्ञानयो'रित्यादौ नुमापत्तेः[2] ।

जश्त्वं, वावसाने इति । न चाऽवसाने चर्त्वस्य पदान्तजश्त्वाऽपवादतया, जश्त्वोत्तरं चर्त्वोपन्यासो न युक्त इति वाच्यम् । 'जश्त्वमि'त्यस्य 'बाधित्वे'ति शेषेणाऽक्षतेः[3] । द्वित्वे इति । 'पूर्वत्राऽसिद्धमद्वित्वे' इति[4] न्यायाच्चर्त्वोत्तरं द्वित्वं बोध्यम् । तादेश इति । अन्यथा 'खरि चे'ति चर्त्वेनैव सिद्धाविदं व्यर्थं स्यादिति भावः ।

ह्रस्वनद्या । 'ह्रस्वनद्याप' इति पञ्चमी । 'नामी'ति लिङ्गात् । 'आमि सर्वनाम्न' इत्यत 'आमी'ति वर्तते । तच्च सप्तमीनिर्देशस्य 'त्रेस्त्रय'इत्यादौ कृताऽर्थत्वादनवकाशत्वेन[5] पञ्चमीनिर्देशस्य बलवत्त्वात्[6] षष्ठ्या विपरिण-

१ 'रामस्येति प्रत्युदाहरणम्' इत्ययं पाठो ग. नास्ति ।

२ इतोऽग्रे—'संनिपातपरिभाषयाऽऽद्गुणाऽनापत्तेश्च' ग. पाठः ।

३ इत उत्तरं—'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेरित्याहुः' ग. पाठः ।

४ इत उत्तरं—'न च सवर्णत्वं द्वित्वे सिद्धं वक्तव्यम्', 'संख्यन्ते'त्यादिवार्त्तिकबलादस्य वर्णद्वित्वेऽप्रवृत्तिरिति वाच्यम् । 'वाक् वाक्' इतिभाष्योदाहरणेन तस्य तत्प्रपञ्चत्वबोधनादित्यन्यत्र विस्तरः' इति ग. पाठः ।

५ 'अनवकाशत्वेन परत्वाच्च पञ्चमीनिर्देशस्य' ग. पाठः ।

६ 'बलीयस्त्वात्, 'षट्चतुर्भ्य' इतिसाहचर्येण, 'नामी'तिज्ञापकेन च पञ्चमीनिर्णयाच्च षष्ठ्या' इति ख. ग. पाठः ।

म्यते । 'अङ्गस्ये'ति, 'ह्रस्वे'त्यादिसामानाधिकरण्याऽनुरोधात्पञ्चम्या । इत्याशयेनाऽऽह—ह्रस्वान्तादित्यादि । आम् चाऽत्र षष्ठीबहुवचनमेव, न तु ङेरामादीति स्पष्टं भाष्ये ।

यत्तु 'नुडि'ति योगं विभज्य, नुड् विधेयः । 'नद्याप' इत्यनेन 'दीर्घान्ताच्चेन्नद्याप एवे'ति नियमाऽर्थकेन दीर्घेषु न दोषः । 'हलन्ताच्चेत्षट्चतुर्भ्य एवे'त्यर्थकेन 'षट्चतुर्भ्यश्चे'त्यनेन हलन्तेषु न दोषः । एवं च 'ह्रस्व'ग्रहणं न कार्यमि'ति । तन्न । 'नद्याप' इत्यस्य 'स्त्रीलिङ्गानां चेन्नद्याप एवे'तिनियमपरतयाऽपि व्याख्यातुं शक्यत्वेन, नदीत्वाऽऽप्त्वयोर्ह्रस्वेऽपि दृष्टतया त्वदुक्तनियमे दृढतरमानाऽभावेन च 'मतीनामि'त्यादौ नुडनापत्तेः ।[1]

**नामि** । 'ढ्रूलोप' इत्यतो 'दीर्घ' इत्यनुवर्त्तते ।

( अङ्गस्येति किम् ? । चर्मणाम् ) ।[2]

नन्वामीत्येव सूत्र्यतां, किं सनुम्कनिर्देशेन ? । न च नित्यत्वात्पूर्वं दीर्घे, ह्रस्वाऽऽश्रयो नुट् न स्यादिति वाच्यम् । 'ह्रस्वाऽन्तान्नुडि'त्येतत्सामर्थ्याद्भूतपूर्वगत्या ह्रस्वाऽन्तत्वमादाय तत्प्रवृत्तिस्वीकारात् । यद्यपि 'नृणामि'त्यत्र ह्रस्वप्रयुक्तो नुट् चरितार्थः, 'नृ चे'ति दीर्घविकल्पात्, तथाऽपि 'नृनद्याप' इत्येव सिद्धेर्ह्रस्वग्रहणसामर्थ्यं सूपपादमेव । न च 'चतसृणामि'त्यवकाशः । 'षट्चतुर्भ्य' इत्येव तत्र सिद्धेः । न च 'तिसृणामि'त्यवकाशः । 'त्रे'रित्यस्य 'षडि'त्यत्राऽनुवृत्त्या तत्सिद्धेः । न च 'प्रियचतसृणा'मित्यवकाशः, गौणे 'षट्चतुर्भ्य' इत्यस्याऽप्राप्तेरिति वाच्यम् । गौणे तदप्रवृत्तौ

---

१ इत उत्तरं—'किञ्च नियमस्य सजातीयाऽऽपेक्षत्वेन 'षडि'त्यनेन प्रधानविषयकनियमस्यैवापत्तौ गौणहलन्तेषु नुडापत्तिर्दुर्वारा । निर्देशादीनां ज्ञापकत्वाश्रयणे तु विपरीतं गौरवम् । 'प्रीणामि'त्यादौ संनिपातपरिभाषया आत्वाऽभाव'इत्याकरोक्तस्याऽसङ्गततापत्तिश्चेति यत्किञ्चिदेतत्' इति ग. पाठः । क. कुण्डलितः ।　　२ क. कुण्डलितः ख. ग. पाठः ।

मानाऽभावात् । बहुवचनन्तु लाघवार्थं स्यात्। द्विवचने हि 'चतुर्भ्यो-मि'ति गुरुनिर्देशः स्यात्। न चा'ऽङ्गाऽधिकारे यदुच्यते गृह्यमाण-विभक्तेस्तद्भवती'त्युक्तं सर्वादिसूत्रे भाष्ये, 'गृह्यमाणविभक्ते'रित्यस्य 'गृह्यमाणाऽर्थगतसङ्ख्यावोधकविभक्ते'रित्यर्थ' इति कैयटः, अतोऽस्य नुटस्तत्राऽप्रवृत्तिरिति वाच्यम्। तस्य 'युष्मदस्मद्भ्यां ङसोऽशि'त्यादा'वस्थि-दधी'त्यादौ च व्यभिचारात्। अत एव तत्र 'षड्भ्यो लुगि'त्येव तदु-दाहरणत्वेनोपन्यस्तम्। तत्र हि 'षष' इत्येव सिद्धे गुरुभूतबहुवचननिर्देशा-त्तस्याऽर्थप्राधान्ये एव प्रवृत्तेः। न चोदाहृतसूत्रद्वये 'मपर्यन्तस्य' 'सर्वा-दीनी'त्यादिसूत्रभाष्यप्रामाण्यात्तन्न्यायानङ्गीकारेऽप्यत्राऽनङ्गीकारे माना-ऽभाव इति वाच्यम्। 'नामी'तिसूत्रस्थेन 'नृणामि'त्यत्राऽवकाशमाशङ्कय 'नैकमुदाहरणमि'त्यादिभाष्येणाऽत्राऽप्यनङ्गीकारस्यैवौचित्यात्।

न च 'ऋन्नद्याप'इति सूत्रं कार्यमिति तदाशयः। तथा सति त्रिशब्दा-ऽनुवृत्तिपरभाष्याऽसङ्गतेः। 'नैकमुदाहरणं योगाऽऽरम्भं प्रयोजयतो'त्यस्या-ऽसङ्गतेश्च। न चात्राऽपि समाहारद्वन्द्वेनैकवचननिर्देशे कर्त्तव्ये, बहुवचनं तदर्थम्। बहुषु सूत्रेषु व्यभिचारात्। गौणे नुटोऽप्रवृत्तिसाधकभाष्या-ऽन्तराऽभावाच्च। ये[2]ऽपि 'गृह्यमाणविभक्ते'रितिभाष्यस्य 'गृह्यमाणा-द्विहितविभक्ते'रित्यर्थः। 'त्यदादीनाम' इत्यादेरपि 'त्यदादीनामो भवति, प्रत्यासत्त्या 'त्यदादिविहितविभक्ता'वित्येवाऽर्थः। 'षड्भ्य' इत्यत्रापि विहितविशेषणमेव। न चैवं 'परमपञ्चे'त्यादौ समुदायस्य गणनायां लोके सङ्ख्यात्वेन प्रसिद्ध्यभावेन, तस्य षट्त्वाऽभावात्ततो विहितविभक्ते-र्लुक् न स्यादिति वाच्यम्। तस्य समासस्य षट्प्रधानत्वेन सङ्ख्याप्रकारक-सङ्ख्येयविशेष्यकबोधजनकतया षट्त्वाऽव्याघातादिति तद्भाष्यं व्याच-क्षते, तेषामप्यत्र विहितविशेषणत्वे मानाऽभावः। किन्तु परविशेषणत्वमेव।

---

१ 'गृह्यमाण' इत्यारभ्य 'कैयट' इत्यन्तः क. पाठः। ख. ग. च. नास्ति।

२ 'येऽपि' इत्यारभ्य 'तत्रैव भाष्यप्रदीपोद्द्योते' ( ३९५ पृष्ठे ) इत्यन्तः क. पाठः। ख. ग. च. नास्ति।

'तस्मादित्युत्तरस्ये'तिपरिभाषाबाधे मानाऽभावात् । लुग्विधायके तदाश्रयणे तु सर्वादिसूत्रस्थं भाष्यमेव मानमिति निरूपितं तत्रैव भाष्यप्रदीपोद्द्योते ।

न[1] च 'पदाम्' 'दतामि'त्यादावतिप्रसङ्गः। ह्रस्वत्वं नाम मात्राकालिकाऽच्त्वम् । तत्र सामर्थ्याद्विशेषणभूतमात्राकालिकत्वांऽशे एव भूतपूर्वगत्याश्रयणं, न तु विशेष्यभूताऽच्त्वांशेऽपीत्यदोषादिति चेन्न । 'नोपधाया' इत्युत्तरार्थत्वात् । तेन 'चर्मणामि'ति दीर्घाऽभावः सिद्ध इति दिक् ।

[2]**यद्यपि पर इति** । 'नामी'ति कृते 'सुपि चे'त्यस्याऽप्राप्त्या, उभयाऽसम्भवरूपो विरोधोऽस्तीति भावः ।

**परिभाषाविरोधादिति** । यद्यप्यस्याः 'सुपि चे'त्येतद्विषयेऽनित्यत्वं क्लृप्तं, 'कष्टाये'त्यादिनिर्देशात्, तथाऽपि सर्वविषयेऽनित्यत्वाश्रयणे मानाऽभावः, 'नामी'त्यनेन दीर्घसिद्धेः फलाऽभावश्चे[3]ति तात्पर्यम् । कृताऽकृतप्रसङ्गित्वमात्रेणाऽपि नित्यताऽभ्युप[4]गमे 'नामी'ति नित्यमित्यपि बोध्यम् । इदं च 'रुधादिभ्यः श्नम्' 'श्नान्नलोप' इति सूत्रयोर्भाष्ये ध्वनितम् । मूलकृता तु परिहाराऽन्तरसम्भवान्न निपुणमीक्षितम् ।

**आरम्भेति** । यत्तु 'कतीनामि'त्यत्र परत्वा'त्षट्चतुर्भ्यश्चे'ति नुटि, सन्निपातपरिभाषाया अप्राप्तेः, सावकाशत्वमस्ये'ति । तन्न । 'न ह्येकं प्रयोजनं योगारम्भं प्रयोजयती'ति न्यायेन 'कतेर्नामी'त्येव सिद्धे सामान्यसूत्रप्रणयनवैयर्थ्यात् । एवं च 'न तिसृचतसृ' इति न कर्त्तव्यमिति महल्लाघवम् । तस्मात्सामान्यसूत्रस्य निषेधसहितस्य प्रणयनं सर्वत्र प्रवृत्त्यर्थम् । तस्य च परिभाषाबाधं विनाऽनुपपन्नत्वेन दोषाऽभावात्। 'सुपि चे'त्यस्य तु न सामर्थ्यम् । 'रामाभ्यामि'त्यादौ सावकाशत्वादिति भावः ।

---

१ 'न चैवम्' ग. ख. पाठः ।

२ 'यद्यपि' इत्यारभ्य 'इति भावः' इत्यन्तोऽयं क. पाठः । ख. ग. घ. नास्ति ।

३ 'फलाऽभावाच्चेति' ख. पाठः ।

४ 'नित्यताभ्युपगमेन' ख. पाठः ।

ननु 'नुटी'त्येव सूत्रमस्तु। न च 'भृञो नुट् चे'तिनिष्पन्न'भृङ्ग'शब्दे दीर्घाऽऽपत्तिः। उणादीनामव्युत्पन्नत्वात्। न चा'ऽनश्व' इत्यादौ दीर्घः स्यादिति वाच्यम्। अनङ्गत्वात्। प्रत्यासत्तिन्यायेन नुडवयवकनिरूपिताऽङ्गस्यैव ग्रहणाच्च। न चा'ऽक्षण्वन्त' इत्यत्रा'ऽन्नन्तात्परस्य मतुपो नुडि'त्यर्थकेन 'अनो नुडि'ति सूत्रेण नुटि दीर्घः स्यात्। नुटस्त्रिपादीस्थत्वेनाऽसिद्धत्वात्। न च तस्याऽपि सन्निपातपरिभाषाबाधवद्बाधः। उभयबाधकल्पनस्याऽन्याय्यत्वादिति चेन्न। 'पूर्वत्राऽसिद्धमि'त्यस्याऽनित्यत्वज्ञापनार्थत्वादिति स्पष्टं 'न पदान्त'सूत्रे कौस्तुभे।

अपदान्तस्य। 'ष' इत्येव सिद्धे 'मूर्द्धन्य'ग्रहण'मिणः षीध्वमि'त्यादौ ढविधानार्थम्। न च तत्र ढकारः कर्त्तव्यः। उत्तरत्र पुनः षग्रहणस्य कर्त्तव्यताऽऽपत्तेः। 'रषाभ्यामि'त्यत्राऽनुवृत्त्यर्थं च। एवं च तत्र 'ण'ग्रहणं, 'पदान्तस्य ने'ति च न कर्त्तव्यं भवतीति लाघवमिति भाष्ये स्पष्टम्।

इण्कोः। 'वर्ग'ग्रहणं 'गवाङ्क्षु' इत्यादौ, चर्त्वस्याऽसिद्धत्वेन 'स्रक्षु' इत्यादौ च षत्वार्थम्।

आदेश। 'प्रत्यय'शब्दस्तदवयवे लाक्षणिकः[1]। 'सात्पदाद्यो'रिति-सातिग्रहणाल्लिङ्गात्[2]। अत एव 'रामेष्वि'त्यादौ षत्वम्। आदेशपदे तु न लक्षणा, मानाऽभावात्। 'तिसृणामि'त्यादौ षत्वाऽऽपत्तेश्च।

( अन्ये[3] तु जघन्यवृत्तिकल्पनाऽपेक्षया द्वन्द्वसाधुत्वाय 'आदेशप्रत्ययसम्बन्धिसस्थाने ष' इति प्राथमिकबोधे सम्बन्धत्वेनैव[4] षष्ठ्या जनिते, पश्चात्तत्तल्लक्ष्यविषयकलक्षणकल्पनायां, तत्तदुत्तरं भिन्ना भिन्ना षष्ठी तेन तेन[5] रूपेण सम्बन्धं—'सकाररूपाऽऽदेशस्य स्थाने, प्रत्ययाऽवयवसस्य

---

१ इतोऽग्रे 'अत एव प्रत्ययशब्दस्य परनिपातः। अन्यथा प्रत्ययस्य स्वातन्त्र्येण बोधकत्वादादेशाऽपेक्षयाऽभ्यर्हितत्वेन पूर्वनिपातः स्यात्' इति ग. पाठः।

२ 'लिङ्गाच्च' ग. पाठः।

३ 'तात्पर्यग्राहकमित्याहुः' इत्यन्तोऽयं क. कुण्डलितः ख. ग. पाठः।

४ 'सम्बन्धित्वेनैव' ख. पाठः।

५ 'भिन्नभिन्नरूपेण' ग. पाठः।

स्थाने च षो भवती'त्येवं बोधयति । अत एवोक्तम् 'एकाऽपि षष्ठी विषय-भेदाद्भिद्यते' इति । अत्रैवाऽर्थ 'सात्पदाद्यो'रिति तात्पर्यग्राहकमित्याहुः । 'सहविवक्षाविरहेऽपि सौत्रत्वाद् द्वन्द्व' इत्यन्ये । वस्तुतस्तु 'सात्पदाद्यो'-रिति लिङ्गादवयवेऽपि प्रत्ययत्वप्रयुक्तं कार्यं 'समुदाये दृष्टाः शब्दा' इति-न्यायेनेति ज्ञाप्यते )[1] ।

केचित्तु 'तिस्रादेशे सकारोच्चारणसामर्थ्यादादेशपदे न लक्षणा, नाऽपि तदंशेऽवयवत्वं सम्बन्ध' इत्याहुः । तन्न । 'तिस्र' इत्यादौ 'न रपरसृपी'ति षत्वनिषेधेन तत्र सकारोच्चारणसार्थक्यात् । न च रादेशो बहिरङ्गतयाऽसिद्धः । यथोद्देशे तदप्राप्तेः । विधिविषयस्य[2] इणः परत्वा-ऽऽक्षेपेण 'नाऽजानन्तर्ये' इति निषेधाच्च । तदाह—आदेशप्रत्ययावय-वसस्येति । विवृताघोषस्येति । विवृतत्वमात्राऽभ्यन्तरप्रयत्नवतः, अघोष-रूपबाह्यप्रयत्नवतश्चेत्यर्थः । ठकारवारणायाऽऽद्यम्[3] । ऋकारवारणाय द्वितीयम् ।

( यत्तु[4] 'सोष्मणोऽघोषस्य सस्य तादृश एव ष' इति । तन्न्यूनम् । ठकारेऽतिप्रसङ्गात् । 'सोष्मणः[5] सोष्माण इति द्वितीया' इति स्थानेऽन्तरतम-सूत्रस्थभाष्येण तस्याऽपि सोष्मत्वबोधनात् । 'सोष्मण' इत्यस्योष्मत्व-सहितस्येत्यर्थः । तथा च शिक्षाऽपि[6],–'शादय ऊष्माणः, सस्थानेन द्वितीया, हकारेण चतुर्था' इति । 'सस्थानेने'ति भावप्रधानो निर्देशः । हेतौ तृतीया । 'यतः शादिसस्थानत्वं द्वितीयानामतो द्वितीया अपि ऊष्माणः,

१ 'ज्ञाप्यते' इत्यन्तोऽयं ख. ग. पाठः, क. नास्ति ।

२ 'विधिविषये इणः' ग. ख. पाठः ।

३ इत उत्तरं 'तस्य प्राङ्निरूपितमतान्तररीत्या विवृतत्वेऽपि, स्पृष्टत्वस्यापि सत्त्वान्न दोषः' इति ग. पाठः ।

४ क. कुण्डलितः ख. ग. पाठः ।

५ 'सोष्मणः' इत्यारभ्य 'ऊष्मत्वसहितस्येत्यर्थः' इत्यन्तः पाठः क. पुस्तके केनापि पश्चाद्वर्द्धितः ।

६ अपिः—ग. नास्ति ।

हकारेण सह तत्सस्थानो द्वितीय-खश्चोष्मा, वर्गचतुर्थश्चेति तदर्थ' इति तद्व्याख्यातारः। फकारस्य यद्यपि सस्थान ऊष्मा नास्ति, तथाऽपि विशिष्यैवोष्मत्वं बोध्यम्। तथा च प्रातिशाख्यम्-'वर्गे वर्गे च प्रथमावघोषौ युग्मौ सोष्माणावनुनासिकोऽन्त्य' इति।

**रामेष्विति**। 'पदादादि'रिति पक्षेऽपि 'सात्पदाद्यो'रिति सूत्रेण यथाऽत्र न षत्वनिषेधस्तथा हलन्तनपुंसके उपपादयिष्यते। 'पदस्याऽऽदि'रिति पक्षे च यथा 'ठ्यतिसे' इत्यादौ षत्वनिषेधप्रवृत्तिस्तथा 'सुप्तिङन्तमि'त्यत्रोपपादितम्[1] )।

**रामस्येति**। यत्तु 'टाङसी'ति सूत्रे षकारे एवोच्चारणीये, सकारोच्चारणसामर्थ्यान्न षत्वमि'ति। तन्न। तस्य 'इण्को'रित्यनुवृत्तावेव तात्पर्यग्राहकत्वकल्पनात्। किञ्च सकारोच्चारणसामर्थ्यात्षत्वाऽभावकल्पने'ऽमुष्ये'त्यादावप्यनापत्तिः। 'आमुष्यायणे'त्यादिवार्त्तिकनिर्देशाऽऽदिभिस्तत्कल्पने तु विपरीतं गौरवमिति दिक्।

**सर्वादीनि**। तद्गुणसंविज्ञानो बहुव्रीहिः ( क्वचित्तथा, क्वचिन्नेत्यत्र शब्दशक्तिस्वभावो बीजमित्याहुः[2] )। प्रायः संयोग-समवायाऽन्यतरसम्बन्धेन सम्बन्धी यत्राऽन्यपदार्थस्तत्र तद्गुणत्वम्। तदतिरिक्तस्वस्वामिभावादिसम्बन्धेन सम्बन्धिनस्तत्त्वेऽतद्गुणत्वम्। 'तस्य = अन्यपदार्थस्य, गुणाः = विशेषणानि, संविज्ञायन्ते-कार्यित्वेन, कार्यसन्निहितत्वेन वा यस्मिन्नि'त्यर्थः। अत्राऽपि सर्वाद्यवयवकसमुदायेनाऽवयवानां संयोगः, समवायो वाऽस्त्येव[3]। 'नागयज्ञोपवीती भोज्यतामि'त्यादौ यज्ञोपवीतस्य कार्यित्वाऽभावेऽपि, तत्सन्निहितत्वमस्त्येवेति बोध्यम्[4]।

---

१ 'यत्तु' इत्यारभ्य 'प्रतिपादितम्' इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

२ ख. ग. पाठः।

३ 'अस्त्येवेति प्राञ्चः' इति ख. ग. च. पाठः। क. नास्ति।

४ इतोऽग्रे—'तस्य = अन्यपदार्थस्य, गुणत्वेन = तद्विशेषणत्वेन संविज्ञानमत्रे-त्यर्थः' इति ख. च. पाठः।

आदिशब्दोऽवयववाची। तेन सर्वशब्दघटित उद्भूतावयवभेदः समुदायः समासाऽर्थ इति बहुवचनम्। तत्र वैयर्थ्यादप्रवृत्तावप्यवयवानां प्रवर्त्तमाना अविशेषात्सर्वशब्दस्याऽपि संज्ञा भवति। अत एवा'ऽदः सर्वेषामि'त्यादिनिर्देशाः सङ्गच्छन्ते।

'सर्वनामानी'त्यत्र 'पूर्वपदात्संज्ञायामि'ति णत्वमत एव निपातनान्न। नाऽप्राप्ते णत्वे निपातनस्य तद्बाधकत्वाल्लोकेऽपि णत्वसहितप्रयोगोऽसाधुः। 'बाधकान्येव च निपातनानी'त्यत्रैव भाष्ये स्पष्टम्।

तदन्तस्यापीति। न च विशेष्याऽसन्निधानात्कथं तदन्तग्रहणमिति वाच्यम्। विशेष्याऽन्तराऽभावेऽपि शब्दशास्त्रोपस्थिताऽव्यभिचारिशब्दरूपविशेष्यमादायाऽपि क्वचित्तदन्तविधिस्वीकारात्। तत्र मानमाह—द्वन्द्वे चेतीति। एवं च ज्ञापकं विना न शब्दरूपविशेष्यमादाय तदन्तविधिरिति बोध्यम्।

अयं भावः—'तदन्तसंज्ञाऽभावे हि 'द्वन्द्वे' इत्यस्य प्रधाननिषेध्य'भवति'क्रियाऽन्वयो न स्यात्। 'विद्यमानानी'त्याद्यध्याहारश्चाऽऽपद्येत। न हि तदन्तविधिं विना समुदाये संज्ञाप्रवृत्तिरस्ति या निषिध्येते'ति।

किञ्च 'द्वन्द्वे चे'त्यवयवमात्रनिषेधे 'येन विधिस्तदन्तस्ये'तिसूत्रस्थे[1]'तदन्तविधेः प्रयोजनं सर्वनामाऽव्ययसंज्ञायामि'तिभाष्यस्य प्रामाण्यात्तदन्तस्य संज्ञायां, 'वर्णाश्रमेतराणामि'तिभाष्यप्रयोगाऽनुपपत्तिः। न ह्यत्र 'सर्वाऽर्थवाचकत्वं नास्ती'ति वक्तुं शक्यम्। मानाऽभावात्। न ह्यनेन लोकव्युत्पत्तिसिद्धं सर्वार्थवाचकत्वं निषेद्धुं शक्यम्। न च निषेधवैयर्थ्यम्। अवयवनिष्ठकुत्साबोधकाऽकज्व्यावृत्त्या चारितार्थ्यात्।

([2]न चैकशेषेण बाधितत्वात्त्यदादीनां द्वन्द्वाऽभावेन, ततः प्राचीनानामदन्तत्वेन, तेषु काऽकचोर्न विशेषः। न च 'दक्षिणोत्तरपूर्वाणामि'त्यत्रे-

१ 'सूत्रस्थभाष्यप्रामाण्यात्तदन्तस्य संज्ञायाम्' ग. च. पाठः।

२ 'स्पष्टत्वाच्च' इत्यन्तः क. कुण्डलितः ख. ग. च. पाठः।

ष्टमपि पुंवत्त्वं निषेद्धुमिदं स्यात्। 'सर्वनाम्नो वृत्तिमात्रे' इत्यत्र मात्रग्रह-णस्य क्वचित्सर्वनामत्वेन दृष्टानां संप्रति संज्ञाभावेऽपि प्रवृत्त्यर्थतया, तस्य वारयितुमशक्यत्वात्। अत एव 'दक्षिणपूर्वायै' इत्यत्र पुंवद्भाव इति वाच्यम्। 'दक्षिणोत्तरपूर्वकाणामि'त्यादौ 'क'प्रत्यये समुदायसंज्ञाऽसिद्धेर्विशेषस्य स्पष्टत्वात्। 'त्वच्छब्दस्तान्त' इति पक्षे तेन द्वन्द्वे काऽकचोर्विशेषस्य स्पष्ट-त्वाच्च)। मम तु 'द्वन्द्वे सर्वनामता न स्यादि'त्यर्थः। संज्ञिनोऽपि द्वन्द्व-स्याऽधिकरणत्वविवक्षया सप्तमी।

नेनु बहुलक्ष्यसंस्काराऽनुरोधादत्र विद्यतिक्रियाऽध्याहारः। तत्फलं चाऽवयवसर्वनामत्वप्रयुक्तोऽपि नाऽकच्। (न चेतरकशब्देन समासे तच्छ्रवणं दुर्वारम्। अकृतव्यूहपरिभाषया द्वन्द्वाऽलौकिके तदप्रवेशात्)। न चैकार्थीभूतस्याऽवयवस्य निष्कृष्य कुत्सादिभिः सम्बन्धाऽभावादवयव-प्रयुक्ताऽकचः प्राप्तिरेव नास्तीति वाच्यम्। निष्कृष्यैकार्थीभावस्य तन्निमित्तत्वे मानाऽभाव इत्यग्रे निरूपयिष्यमाणत्वात्। एवं च तेन समुदाय-स्याऽवयवस्य च निषेध इति कथमस्य ज्ञापकत्वम्?। अत एव 'विभाषा-जसी'ति सूत्रं चरितार्थम्। अवयवमात्रनिषेधकत्वे हि समुदायनिष्ठसर्व-नामत्वमादाय नित्यमेव शीभावस्य प्राप्तेस्तद्वैयर्थ्यं स्पष्टमेव। न च सर्वादिसूत्रे तदन्तविध्यभाव एव ज्ञाप्यताम्। 'येन विधि'रिति सूत्रस्थ-भाष्यविरोधात्। तदन्तविधौ फलस्य वक्ष्यमाणत्वाच्च। अत एव 'जसः

---

१ 'ननु गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवति, तत्रात्मनोऽपि संस्कारमनुभूय प्रधानेन सम्बध्यते' इति न्यायात्' ग. च. पाठः।

२ क. कुण्डलितः। ग. च. पाठः।

३ 'एतेनैकार्थीभूतस्यावयवस्य' इति ख. ग. च. पाठः।

४ 'प्राप्तिरेव नास्तीति परास्तम्। समासोत्तरमप्राप्तावपीतरकशब्देन प्राप्तसमा-सस्याऽकृतव्यूहपरिभाषया वारणार्थमावश्यकत्वात्। एवञ्च तेन समुदायस्य' इति ग. पाठः।

कार्यं प्रति विभाषाऽकज्झि न भवती'ति भाष्यं यथाश्रुतमेव सङ्गच्छते ।

सर्वनामसंज्ञायां तदन्तविधिस्तु—'प्रयोजनं सर्वनामाऽव्ययविधा'-विति तदन्तविधिसूत्रस्थवार्त्तिकेन वाचनिक एव । एवं 'तृतीयासमासे'-इत्यादीनामप्युभयत्र निषेधकत्वम् । अत एव 'द्वन्द्वे चे'ति गुरुभूतसप्तमी-निर्देशः सङ्गच्छते । अन्यथा हि प्रधानक्रियाऽन्वयविवक्षायां 'द्वन्द्वश्चे'-त्येव वदेत् । 'द्वन्द्व'शब्दस्य द्विशब्दप्रकृतिकत्वेऽपि स्मिन्नादिरूपसर्वनाम-कार्यं न । संज्ञात्वात् । समुदायस्य द्वन्द्वाऽऽदौ विद्यमानत्वन्तु व्यपदेशि-वद्भावेन । आधाराऽऽधेयभावस्थलेऽपि व्यपदेशिवद्भावस्या'ऽनद्यतने लङ्' 'तुल्यास्यप्रयत्नम्' 'प्रत्ययस्थादि'त्यादिसूत्रस्थभाष्याऽऽदौ स्पष्टमेवोक्तत्वा-दिति चेन्न ।

इतरैकशब्देन[1] समासे तच्छ्रवणस्य दुर्वारत्वेनाऽवयवनिषेधे फला-ऽभावात् । अकृतव्यूहपरिभाषा तु समासे न, 'न बहुव्रीहा'विति ज्ञापका-दिति वक्ष्यते । तस्या अभावाच्च । किञ्च 'विभाषा जसी'त्यनेन फला-ऽभावादवयवनिषेधाऽभावे, तत्साहचर्येणाऽर्थाधिकाराऽनुरोधेन च 'द्वन्द्वे-चे'त्यादेरप्यवयवनिषेधकत्वाऽभावात् । 'अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशया'विति प्रकरणविषयस्मृत्यन्तरेण, तद्विषय-'न बहुव्रीहा'विति-सूत्रसाहचर्येण वा एतत्प्रकरणस्थसप्तमीनिर्देशानां प्रथमार्थकत्वस्यैवौचि-त्याच्च । 'विभाषा दिक्समासे' इतिसूत्रस्थबहुव्रीहिपदवत् 'न बहुव्रीहा'विति-सूत्रवच्चाऽत्रत्यसप्तमीनिर्देशानामपि सम्भावितत्वेन, विद्यत्यध्याहारे दृढ-तरमानाऽभावाच्च । 'विभाषा जसी'तिसूत्रस्थं 'जसः कार्यं प्रति विभाषा-ऽकज्झि न भवती'ति भाष्यन्तु समुदायनिष्ठकुत्साबोधकोऽकज्न भवती-त्यर्थपरम् । एवं च समुदायनिष्ठकुत्साविवक्षायां 'वर्णाश्रमेतरका' इत्येव । अवयवमात्रनिष्ठतद्विवक्षायां 'वर्णाश्रमेतरके' 'वर्णाश्रमेतरका' इत्युभयम् ।

ननु तदन्तसंज्ञायां फलाऽभावः । न च 'परमसर्वस्मै' इत्यादौ स्माया-

1 'इतरकशब्देन' इत्यारभ्य 'अभावाच्च । किञ्च' इत्यन्तः क. पाठः । ख. ग. घ. नास्ति ।

दिः फलम् । अङ्गाधिकारे तदन्तविधेः सत्त्वेन तदन्तात्परत्वेनाऽपि सिद्धेः। न च सर्वनाम्नो विहितत्वाऽभावः । तदन्तसंज्ञाऽभावे हि 'द्वन्द्वे चे'त्यादि-निषेधानां सामर्थ्येनाऽवयवसंज्ञानिषेधकत्वाद्विहितविशेषणे फलाऽभावा-दत आह–तेनेति । न चाऽवयवसर्वनामत्वेन निर्वाहः । सर्वनामप्रकृतिक[1]-सप्तम्याद्यन्तत्वाऽभावात् 'सप्तम्याः'[2] 'पञ्चम्याः' इत्यनेन प्रकृत्याक्षेपात् । अकज्विधावपि 'कुत्सिते' इति सूत्रोक्तेन 'परिपूर्णाऽर्थस्येतराऽर्थयोग' इति-न्यायेन सुबन्तादेव तद्धितोत्पत्तेः । प्रत्यासत्त्या 'सर्वनामप्रकृतिकसुबन्ता-त्तदर्थगतकुत्साविवक्षायां सर्वनामाऽवयवटेः 'प्रागकजि'त्यर्थात् । न च त्रलादिविधौ तदन्तविधिः । समासप्रत्ययविधौ प्रतिषेधात् ।

ननु तदन्तस्याऽपि सर्वनामत्वे 'सर्वनाम्नः स्मै' इत्यादिषु 'सर्वनाम्न' इत्यस्य षष्ठ्यन्तत्वमाश्रित्य 'सर्वनामाऽर्थगतसङ्ख्याऽभिधायिनोऽङ्गात्परस्य ङे स्मै' इत्यर्थाऽऽश्रयणेनाऽतिसर्वादौ दोषाऽभावादुपसर्जनप्रतिषेधो न कार्य इति भाष्योक्तं विरुध्येत । सर्वनामाऽर्थगतत्वं[3] च पर्याप्तिसम्बन्धेन । तेन 'वर्णाश्रमेतराणामि'त्यादौ न दोषः । तदन्तस्य सर्वनामत्वेनाऽर्थद्वारक-विशेषणाऽऽश्रयणेऽपि दोषस्योद्भटत्वादिति चेन्न । 'प्रयोजनं सर्वनामा-ऽव्ययसंज्ञायामि'ति तदन्तविधिसूत्रस्थभाष्य[4]विरोधेन तद्भाष्यस्यैक[5]-देश्युक्तित्वेनाऽक्षतेः । ( अत[6] एवाऽरुचेर्भाष्ये पक्षाऽन्तरोपन्यासः[7] ) ।

---

१ 'प्रकृतिकसुबन्ताऽभावात्' ख. ग. च. पाठः ।

२ 'सप्तम्याः' इति ग. च. नास्ति ।

३ 'सर्वनामार्थगतत्वम्' इत्यारभ्य 'न दोषः' इत्यन्तः पाठो ग. च. नास्ति ।

४ 'भाष्यविरोधात्, 'आ सर्वनाम्नः' 'त्यदादीनि च' 'त्यदादीनि सर्वैर्नित्य-मि'त्यादावुपायान्तरस्याऽभावाच्चोपसर्जनप्रतिषेधस्यावश्यकत्वेन तद्भाष्यस्य तवाप्यसङ्गतेः' ग. च. पाठः ।

५ 'तद्भाष्यस्य प्रौढ्या प्रवृत्तेः' ख. पाठः ।

६ ख. पाठः ।

७ इतोऽग्रे–'ननु त्रलादिविधौ 'सर्वनाम्न' इत्यस्यार्थद्वारकविभक्तिविशेषणत्व-

न चाऽवयवनिष्ठसर्वनामत्वेनैवाऽकच्सिध्यतीति वाच्यम् । उक्तरीत्याऽसम्भवात् ।

अत्र[2] केचित्–भवकच्छब्देन समासे ( समुदायनिष्ठकुत्साबोधनाय[3] ) अल्पत्वादिबोधनाय ( वा[4] ) द्वितीयाऽकच् तु नाऽऽपाद्यः । 'अव्ययसर्वनाम्नामि'त्यस्य वाक्याऽर्थबोधसमये तादृशसुबन्तानामकच्सहितानामेवोपस्थितेः, न त्वेतन्निष्पाद्याऽकच्सहितानाम् । तेषामेतद्वाक्यार्थबोधात्पूर्वं मानाऽन्तरेणाऽसिद्धेः[5] । पुनः प्रवृत्तौ तु मानाऽभावः । न चैवं 'शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिक'इत्यादेर्वैयर्थ्यम्,'शाला''शालीय'शब्दयोः, 'पठति''पिपठिषत्यो'रेककालिकोपस्थित्यभावादिति वाच्यम् । 'छान्तस्य प्रातिपदिकत्वं भवति' 'सन्नन्तस्य धातुत्वं भवती'त्यादेः सुप्तिङ्विधाविव कार्यकालपक्षे छ सन्विधावप्युपस्थितत्वेन ('अक्षान्दीव्यती'त्यादौ[6] 'दिवः कर्म

माश्रित्य 'सर्वनामार्थगतसङ्ख्याभिधायिनी या ( पञ्चमी ) सप्तमी, तदन्तं यच्छब्दरूपमि'त्याद्यर्थाङ्गीकारेण समुदायस्याऽसर्वनामत्वेपि त्रतसिलादिसिद्धिः । यद्वा 'सर्वनाम्नः परा या पञ्चमी ( सप्तमी' )त्येवाश्रीयताम् । तावतापि तसिलादिसिद्धिरित्यत आह–अकच्चेति । अकचि 'सर्वनाम्नामि'-त्यस्य षष्ठ्यन्तत्वेन, समर्थविभक्तेरनिर्देशाच्च, त्वदुक्तार्थो वक्तुमशक्य इति भावः'–इति ग. च. पाठः ।

१ इतोऽग्रे–'भवच्छब्देन समासे समुदायनिष्ठकुत्साबोधकाऽकचोऽनापत्तेः । अप्रकृत्यर्थकुत्साबोधने त्वतिप्रसङ्गः । एकार्थीभूतस्य निष्कृष्य कुत्सादिनाऽन्वयाऽयोगाच्च । अत एव 'कौम्भकारेय' इत्यत्र 'केवलकारीशब्दाद् ढक्ने'त्याकरोक्तं सङ्गच्छते' इति ग. च. पाठः ।

२ 'अत्र केचित्' इति क. पाठः । ख. पुस्तके तु 'अत्र केचित्–न चाऽवयवनिष्ठ' इतिरीत्या पूर्वत्रैव 'केचिदि'ति पठ्यते ।   ३ क्वाचित्कः पाठः ।

४ क्वाचित्कः पाठः ।   ५ 'मानान्तरेण सिद्धेः' ख. ग. च पाठः ।

६ ख. पाठः ।

चे'त्यादेः 'कर्मणि द्वितीये'त्यादावुपस्थितिसामर्थ्याद् द्वितीयेव) छ-सनाद्या-पत्त्या, तन्निषेधेन चारितार्थ्यात्। तस्मिन्हि सति कार्यकालपक्षेऽप्युक्त-वाक्यानामनुपस्थितिरेव कल्प्यते, तत्सामर्थ्यात्।

(ईदृशे विषये यथोद्देशपक्षाश्रयणमेव वा)। अत एव 'घटत्वत्वमि'त्यादौ त्वप्रत्ययान्तात्त्वप्रत्ययसिद्धिः। न ह्येवमत्रा'ऽकज्विशिष्टस्य प्रातिपदिक-संज्ञा भवती'ति वाक्यमस्ति। (मानाऽभावात्)।[1]

न चैवं 'यूनि लुगि'तिसूत्रस्थ-'ग्लौचुकायन'इति प्रयोगोऽसङ्गतः स्यात्। ग्लुचुकशब्दात्फिनि यून्यणि रूपमेतत्। त्वद्रीत्या फिन्नन्ता-त्पुनः फिन एवाऽऽपत्तेरिति वाच्यम्। फिनो वैकल्पिकत्वेनाऽक्षतेः। 'लक्ष्याऽनुरोधेन तद्विषये यथोद्देशपक्षस्यैव वाऽऽश्रयणमि'त्याहुः[3]।

परे तु[4] प्रातिपदिकत्वधातुत्वादिनैवोपस्थितात्प्रत्ययविधानं, न तु तत्तद्रूपेण[5] तेषामुपस्थितिः कस्याऽपि। असम्भवात्। कार्यकालपक्षेऽपि 'छान्त-स्य प्रातिपदिकसंज्ञा' 'सनन्तादेर्धातुसंज्ञे'त्यादिवाक्यार्थज्ञानं छादिविध्य-नन्तरमेवेति, पूर्वं तदुपस्थितिर्दुर्लभैव। तस्मात् यद्यकच्सहितादकज्नेष्यते, तर्ह्यनभिधानेनैव वारणीयः। 'शैषिकादि'त्याद्यप्यनभिधानसिद्धार्थानुवाद एव। फिनन्तात्फिनपि तत एव नेत्याहुः[6]।

जसः शी। दीर्घोच्चारणमुत्तरार्थं—'वारिणी' इति। अदन्तादिति—'परस्ये'त्यनेनाऽन्वेति। 'अत' इत्यस्याऽङ्गविशेषणतया तदन्तविधिः।

---

१ ग. च. पाठः। क. ख. नास्ति। २ ग. च. पाठः। क. कुण्डलितः।

३ 'स्यैवाश्रयणमित्यन्ये' ख. ग. च. पाठः।

४ 'परे तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. पाठः।

५ 'तत्तद्रूपेणैव' क्वचित् पाठः।

६ इतोऽग्रे-'यदि तु 'सर्वादयस्तन्मध्यपतितविशिष्टाश्च सर्वनामसंज्ञका' इत्यस्योप-स्थितिसामर्थ्यात्प्राप्नोत्येव (अकच्) इत्युच्यते, तदाऽस्तु लक्ष्यानुरोधा-द्यथोद्देशपक्षाश्रयणमेवेति दिक्' इति ग. च. पाठः।

'अदन्तादङ्गात्परस्ये'त्यर्थः । 'सर्वनाम्न' इति तु विहितविशेषणमेव । तस्य तु नाऽङ्गं विशेष्यम् । आवृत्तौ मानाऽभावात् । तेन 'वर्णाश्रमेतरा' इत्यत्र न । (अत[1] एव 'विभाषा जसी'ति सूत्रं चरितार्थम्[2]) । न चाऽङ्गसंज्ञकाद्दन्तात्सर्वनाम्नो विहितस्येत्यर्थोऽस्तु । 'ये' 'ते' इत्याद्यसिद्धयापत्तेः । न चाऽत्वादिविधौ विषयसप्तम्याश्रयणात्तेषां पूर्वं प्रवृत्त्यौ[3] न दोषः । 'तस्मिन्नि'तिपरिभाषाबाधे मानाऽभावात् ।

अनेकाल्त्वादिति । न तु शित्त्वादिति भावः । नाऽनुबन्धकृतमिति । ( उपदेश[4] एव ऋकारस्येत्सञ्ज्ञकत्वादिति भावः ) । अत्र चाऽनेकाल्सूत्रस्थं शिद्ग्रहणं ज्ञापकमित्युक्तं प्राक् ।

सर्वादेशत्वादिति । प्रत्ययाऽऽदित्वाऽभावादिति भावः ।

अतः सर्वनाम्न इति । 'अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्ये'[5]-

---

१ क. नास्ति ।

२ इतोऽग्रे—'न च 'सर्वनाम्न' इत्यस्याऽङ्गविशेषणत्वेन 'सर्वनामान्ताद्विहितस्ये'-त्यर्थस्यापत्तिरिति वाच्यम्[1] । 'विहितविशेषणमि'त्यस्याऽधिकृतमङ्गस्येति-विशेषणमित्यत्राऽन्वयात्' इति ग. पाठः ।

३ 'पूर्वं प्रवृत्त्या न दोषः । 'असका'वित्यादौ 'प्रत्ययस्थादि'तीत्त्वाऽऽपत्तेः । तेषु विषयसप्तम्या वक्तुमशक्यत्वादिति हलन्तशेषे निरूपयिष्यामः' इति क. कुण्डलितः, ख. ग. च. पाठः ।

४ क. कुण्डलितः ख. ग. च. पाठः ।

५ 'अतः सर्वनाम्नो विहितस्येत्यर्थः । तेन [2]मासपूर्वायेत्यत्र स्मै न' इति च. पाठः ।

---

1 'इत्यर्थस्यापत्तिरिति वाच्यम् । विधानात्पूर्वमङ्गसंज्ञाया अभावेन विहितविशेषणपक्षे तदसंभवात् । 'सर्वनाम्न' इत्यस्य जस्विशेषणतया कृतार्थत्वेन, पुनरङ्गविशेषणत्वे मानाऽभावाच्च । न चाऽदन्तादित्यपि तथैवाऽस्तु । ये ते इत्याद्यसिद्ध्यापत्तेः' इति च. पाठः ।

2 'अतिपर्वायेत्यत्र' इति ग. पाठः ।

त्यर्थः । स्पष्टं चेदं कौस्तुभे ।

**आमि सर्वनाम्नः** । 'आज्जसेरसुगि'त्यत 'आदि'त्यनुवर्त्तते । **अवर्णान्तादिति** । तदन्तादङ्गात्परस्येत्यर्थः । तेन 'तेषामि'त्यादौ नाऽव्याप्तिः । **विहितस्येति** । 'परस्ये'ति तु नोक्तम् । 'दक्षिणोत्तरपूर्वाणामि'त्यत्र सुडापत्तेः । 'द्वन्द्वे चे'ति समुदायस्य निषेधो, न त्ववयवानाम् । न च तस्मादाम्विहितः, किन्तु समुदायादिति न सुट् । विहितविशेषणे प्रमाणन्तु 'दक्षिणोत्तरपूर्वाणामि'ति भाष्यप्रयोग एव ।

( [1]सर्वेषामिति । न च परत्वान्नुडापत्तिः । सुटोऽपवादत्वात्[2] । अत एव 'हलि सर्वेषामि'तिनिर्देशः सङ्गच्छते ) ।

ननु के सर्वादयः ? । न च 'सर्वेषां नामानी'त्यन्वर्थत्वाद्विश्वादय एव संज्ञिनः, 'आदि'शब्दश्च प्रकारे इति वाच्यम् । कृत्स्नादिष्वतिव्याप्तेरित्यत आह—पञ्चत्रिंशदिति । तेन सर्वार्थप्रतिपादकत्वेऽपि कृत्स्नसकलादिशब्दानां नेति भावः । पञ्च च, त्रिंशच्चेति द्वन्द्वः । 'पञ्चाऽधिका त्रिंशदि'ति तत्पुरुषो वा । समासभेदेन स्वरभेदश्चेष्ट एव । अत एव 'बहुव्रीहौ सङ्ख्येये' इति सूत्रे 'एकाऽधिका विंशतिरेकविंशतिरि'त्याद्युक्तं भाष्ये ।

नन्वेवं सर्वादीनां बुद्धिस्थाऽनेकाऽर्थवाचकत्वेन बहुवचनमेव स्यान्न त्वेकवचनादीति चेन्न । 'बुद्धिस्थाऽनेकसङ्ख्याकाऽवयवाऽऽरब्धसमुदाये सर्वादयः शक्ता' इत्यावश्यकम्, प्रत्यवयवं[3] सर्वशब्दाऽप्रयोगात् । तत्र यदाऽनुद्भूताऽवयवः समुदायस्तदैकवचनम् । यथा 'सर्वो लोक' इति । तादृक्समुदायद्वयाऽऽदिविवक्षायां द्विवचनाऽऽदि–'सर्वौ व्यूहा'विति । यदा चोद्भू-

---

१ अयं पाठः क. नास्ति ।

२ इतोऽग्रे–'न च तत्र कृतेऽस्य चारितार्थ्यम् । निर्दिश्यमानपरिभाषयाऽप्राप्तेः । निर्दिश्यमानस्य व्यवहितत्वाच्च । स्पष्टा चेयं रीतिः 'पादः पत्' 'हुझल्भ्यो हेर्धिरित्यत्र भाष्यकैयटयोः' इति च. पाठः ।

३ 'प्रत्यवयवे' इति पाठान्तरम् ।

ताऽवयवभेदसमुदायविवक्षा, तदा च बहुवचनं 'सर्वे घटा'इतीति दिक् ।

पूर्वपराऽवर । व्यवस्थाऽसंज्ञावर्त्तिन एवेमे सर्वादय इत्यर्थः । एवमुत्तरसूत्रद्वयेऽपि । नित्यं द्विवचनान्त इति । द्विवचनान्त एवेत्यर्थः । सजातीयवचनान्तरस्यैव व्यवच्छेदाट्टाबादिकं भवत्येव । अर्थस्य द्विरूपत्वान्न्यायसिद्धोऽयमर्थः । अत एव शब्दपरत्वे 'उभादि'त्यादि भवत्येव ।

ननूभशब्दस्य द्विवचनाऽन्तत्वे सर्वादिषु पाठो व्यर्थः, स्मायादेर्द्विवचनेऽभावात् । न च 'स्वाङ्गशिटामदन्तानामि'त्याद्युदात्तार्थः पाठ इति वाच्यम् । गणे एवाऽन्तोदात्तत्वनिपातनात् । 'उभे भद्रे' इत्यादौ तथैव पाठात् । 'वृषादीनां चे'त्यत्राऽऽदिशब्दस्य प्रकारार्थत्वेनाऽऽद्युदात्तत्वसिद्धेश्चेत्यत आह—अकजर्थ इति ।

ननु काऽकचोः को विशेषः ? । प्रात्ययस्वरेण, चित्स्वरेण वाऽन्तोदात्तत्वेन विशेषाऽभावात् । न च सुबन्तात्तद्धितोत्पत्तेः सत्त्वेनाऽकचि चित्त्वाज्जायमानमन्तोदात्तत्व'मुभकाभ्यामि'त्यादौ सुबन्तस्य स्यात्, कप्रत्यये तु प्रकृतेरिति विशेषोऽस्त्येवेति वाच्यम् । तद्धितविधौ 'प्रातिपदिकादि'त्यधिकारेण प्रातिपदिकस्यैव प्रकृतित्वात् । स च जायमानो ज्ञापकान्न्यायाद्वा सुबन्तात्पर इत्यन्यत् । युष्मदस्मद्विषये तु 'विभाषा सुप' इत्यनुवृत्तेः सुबन्तस्यैव प्रकृतित्वं, तस्यैव टेः प्रागकजिति बोध्यम् ।

न चो'भाभ्यां हेतुभ्यामि'त्यादौ 'सर्वनाम्नस्तृतीया चे'ति तृतीयाषष्ठ्यौ तत्फलम् । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि'ति 'हेता'विति सूत्रपठितेन गताऽर्थत्वात् । न च 'प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्त' इति कैयटाद्युक्तेरसर्वनामत्वे दोषः स्फुट एवेति वाच्यम् । 'प्राय'ग्रहणेन

१ इतोऽग्रे–'अकज्विधौ युष्मदस्मदतिरिक्तसर्वनामविषये प्रातिपदिकादेवाऽकज्विधानात् । तत्प्रकृतिके लक्षणायां मानाऽभावाच्च । एवञ्च 'चितः सप्रकृते'रितिवार्त्तिके प्रकृतिग्रहणेन तस्यैव ग्रहणम् । अत्र च प्रकृतभाष्यमपि मानम् । न चोभाभ्यां हेतुभ्याम्'–इति ग. च. पाठः ।

लक्ष्याऽनुरोधात्तस्येवोभ[1]शब्दाऽतिरिक्तो[2]ऽसर्वनाम्न इत्यर्थस्याऽपि कल्पयितुं शक्यत्वात्। न चाऽकचि तन्मध्यपतितन्यायेन तस्योभग्रहणेन ग्रहणे, 'उभकाववयवौ यस्ये'त्यर्थे 'उभक'शब्दादयचि 'उभकय' इति प्रयोगः सिध्यति, के तु नेति विशेषे[3] इति वाच्यम्। उभग्रहणेन तद्ग्रहणेऽपि, तस्य सङ्ख्यामात्राऽर्थकत्वाऽभावेन, लोके तथाऽप्रसिद्धत्वेन चाऽकज्विशिष्टे 'उभादुदात्त' इत्यस्याऽप्राप्तेः। 'कश्चेदानीं काऽकचोर्विशेष' इति-भाष्यप्रामाण्येनाऽनभिधानाद्वा।

अत एव हरिणा 'उभयोऽन्यत्रे'तिवार्त्तिकमूलभूतम् 'उभयस्य द्विवचनं, टाप् च, लोपश्च यस्ये'ति व्याकरणान्तरसूत्रमुदाहृतम्। तन्मते चैषां प्रयोगाणामभावः स्पष्ट एवेति शङ्कते-न चेति।

**समाधत्ते—द्विवचनपरत्वाऽभावेनेति**। अकच्प्रत्ययस्य टेः प्राग् जायमानत्वेन, तन्मध्यपतितपरिभाषया न उभ[4]शब्दस्य द्विवचनपरत्व-व्याघातः। कप्रत्यये तु तस्य प्रातिपदिकात्परत्र जायमानत्वाद् द्विवचन-परत्वविघातोऽस्त्येवेत्यर्थः।

अयं भावः-'उभादुदात्त' इति सूत्रे 'नित्यमि'ति योगो विभज्यते। 'उभशब्दान्नित्यमयच्स्यात्स्वार्थे' इति हि तदर्थः। न चैवं पूर्वसूत्रे 'नित्यमि'-त्यस्याऽसम्बन्धे 'द्वित्रिभ्यां तयस्याऽयज्वे'त्यतो विभाषाऽनुवृत्तिः स्यादिति वाच्यम्। अस्वरितत्वात्। महाविभाषायास्तु फलाऽभावादसम्बन्धः। तस्याऽयचस्तयप्स्थानिकत्वेन तद्विकल्पेनैव वाक्यसिद्धेः। अत एव च ङीब्विधायकसूत्रे मात्रशब्दादारभ्याऽयचश्चकारेण 'मात्रजि'तिप्रत्याहारमाश्रित्याऽयचः प्रत्ययाऽन्तरत्वं स्वीकृत्य 'उभये' इत्यत्र सर्वनामसंज्ञाविकल्पवारणं 'नवे'तिसूत्रस्थभाष्योक्तं सङ्गच्छते। तद्रीत्या हि वाक्यसिद्धये विभाषा-

---

१ 'उभय' ख. ग. पाठः। २ 'तिरिक्तसर्वनाम्नः' च. पाठः।

३ 'विशेषस्य सत्त्वात्कथं केनेष्टसिद्धिः' ग. च. पाठः।

४ 'उभय' ख. ग. पाठः।

सम्बन्धस्याऽऽवश्यकत्वेन 'नित्य'ग्रहणवैयर्थ्यं स्पष्टमेव[1]। उभावतिक्रान्ता-ऽत्युभयेत्यादौ तु न ङीप्। उभशब्दात्स्वार्थे विहितत्वेन तस्योपसर्जन-नत्वात्[2]। 'नित्यमि'ति सूत्रे तु प्रत्ययान्तरमेव। स्वाऽर्थे तयपोऽविधानात्।

अयमयच् तद्विषये सुबुत्पत्तेः पूर्वमेव। अत्यन्तस्वार्थिकत्वेनाऽन्तरङ्ग-त्वात्[3]। अत्र नित्यशब्दस्य वाच्याऽर्थविरोधाद्विकल्पाऽननुवृत्तिः। अयम-प्याद्युदात्त एव। प्रत्ययसम्बद्धोदात्तग्रहणस्याऽनुवृत्तेः। इदं च सूत्र'मुभौ साभ्यासस्ये'ति निर्देशेन, योगविभागस्येष्टसिद्ध्यर्थत्वेन च, यत्रोभशब्दस्य, उभयशब्दस्य वा (सुप्[4])द्विवचनविषयत्वाऽभावसम्भावना तत्रैव प्रवर्त्तते[5]।

(उभावित्यत्रैकादेशेऽपि भान्तस्यैकदेशविकृतन्यायेनोभशब्दत्वात्ततो-ऽव्यवहितद्विवचनमस्त्येव । 'सुप्द्विवचने'त्युक्तेराचारक्विबन्तात्तिङ्-द्विवचनेऽयज्भवत्येव। एवं च 'उभशब्दादुत्पन्नं द्विवचनं लुका नाऽपहृतं यत्र, ततोऽन्यत्राऽयजि'ति **मनोरमायां** प्रयासः किमर्थ इति चिन्त्यम् )[6]।

तदुक्तं वार्त्तिककृता-'अन्याऽभावो, द्विवचनटाब्विषयत्वात्' । 'उभयोऽन्यत्रे'ति। ([7]अन्येषां-सर्वनामकार्याणाम्,अभाव इत्यर्थः)। अन्यत्रे-

---

१ इतोऽग्रे—'तत्र हि तयप्साहचर्यादवयवाऽर्थाऽयच एव ग्रहणम्। अत एव उभावतिक्रान्ता अत्युभयेत्यादौ न ङीप्। उभशब्दात्स्वार्थे विहितत्वेन तस्योपसर्जनत्वाच्च' इति क. कुण्डलितो, ग. च. पाठः।

२ 'उपसर्जनत्वाच्च' ग. च. पाठः।

३ 'अत्यन्तस्वार्थिकत्वेनाऽन्तरङ्गत्वात्' इति क. पाठः।

४ 'सुप्'इति क. नास्ति। 'अव्यवहितद्विवचनपरत्वविषयाऽभाव' ग. च. पाठः।

५ 'यत्र उभशब्दादव्यवहितद्विवचनपरत्वविषयाऽभावसंभावना तत्रैव प्रवर्त्तते। 'उभशब्दादुत्पन्नं द्विवचनं लुका नापहृतं यत्र, ततोऽन्यत्राऽयजि'ति मनोरमाया अप्यत्रैव तात्पर्यम्। उभावित्यत्रैकादेशेऽपि ततः पूर्वं तादृशविषय-सत्त्वात्। लुका तु विषयस्यैवापहाराञ्च दोषः। तदुक्तं वार्त्तिककृता' ग. पाठः। ६ प्रायः क. कुण्डलितः ख. पाठः।

७ क. नास्ति।

त्वस्य द्विवचनविषयत्वाऽभावे इत्यर्थः[1]। टाब्विषयत्वमपि द्विवचने एव बोद्धव्यमिति कैयटः। न चोभस्य पाठाऽभावेऽसर्वनामत्वेन, ततस्त्रला-दिविवक्षायाः कर्त्तुमशक्यत्वाद्[2] द्विवचनपरत्वस्यैव सत्त्वेन, ततोऽयजुत्प-त्त्यनापत्तौ 'उभयत्रे'त्याद्यसिद्धिरिति वाच्यम्। 'यद्ययच्स्यात्तदा त्रलादि स्यात्, तस्मिंश्च लुगपि स्यादि'ति सम्भावनया तद्विषया[3]ऽभावसम्भा-वनासत्त्वादक्षतेः। उक्तज्ञापकेन वृत्तिविषयेऽयजिति तु न युक्तम्। (अकच्[4]प्यपयजापत्तेः)। 'उभयोर्वास' इत्यादौ 'शयवासे'त्यादिना विभक्त्य-लुक्यप्ययजापत्तेश्च। न चेष्टाऽऽपत्तिः। 'द्विवचने उभशब्द एव साधुः, अन्यत्रोभयशब्द' इत्यर्थपरभाष्यवार्त्तिकविरोधाऽऽपत्तेः।

स चाऽयमयजन्तरङ्गत्वात्समासतद्धिताद्युत्पत्तेः पूर्वं, सुबुत्पत्ते[5]श्च पूर्वं प्रवर्त्तते। अत एवाऽयज्विशिष्टस्योभ[6]स्य सर्वनामत्वात्सर्वनामप्रकृतिक-सप्तम्याद्यन्तत्वेन त्रलाद्युत्पत्तिः। न चैवमुभयो मणिरित्यादावपि स्वार्थि-काऽयजापत्तिः, 'लिट्यभ्यासस्योभयेषामि'त्यादिनिर्देशात्। तदेतदाह—**अयच्प्रसङ्गादिति**।

न चाऽयचि सर्वनामत्वेनाऽपवादत्वादकच्प्राप्तौ, द्विवचनस्य श्रूयमाण-त्वसत्त्वेन कथमयचः प्रसङ्ग इति वाच्यम्। उपजीव्यत्वेनाऽन्तरङ्गत्वेन च

---

१ इतोऽग्रे—'टाब्ग्रहणन्तु टाबादीनां स्त्रीत्वं वाच्यमिति पक्षाऽभिप्रायेण। अत एव टाब्विषयत्वमपि' इति च. पाठः।

२ 'कर्त्तुमशक्यत्वेन, ततोऽव्यवहितद्विवचनपरत्वविषयस्यैव सत्त्वेन, ततोऽयजुत्प-त्त्यनापत्तौ' ग. च. पाठः।

३ 'विषयाऽभावसम्भावनासत्त्वादक्षतेः' क. ग. च. पाठः। 'तत्परत्वाऽभावसम्भावनासत्त्वादक्षतेः' इति तु ख. पाठः।

४ क. कुण्डलितो ग. पाठः।

५ 'भाष्यप्रामाण्यात्सुबुत्पत्तेश्च' इति ग. च. पाठः।

६ 'उभयस्य' ग. च. पाठः।

कप्रत्ययस्यैव प्राप्तेः । अपवादस्त्वन्यत्र चरितार्थः । न च कप्रत्ययेऽवान्तर-पदत्वसत्त्वादवग्रहोऽप्यापादयितुं युक्त इति वाच्यम् । 'ईयिवांस-मतिस्निध' इत्यादौ पदत्वाऽभावेऽपीयिवांसमित्यादौ तत्करणेन, 'राजका इदन्यके' इत्यादौ पदत्वसत्त्वेऽपि तस्याऽकरणेन च तत्र सम्प्रदायस्यैव शरणत्वादिति स्पष्टं संयोगसंज्ञासूत्रे कौस्तुभे ।

अत्रेदं चिन्त्यम्—'अकज्विधावेवोभग्रहणेन सिद्धे, तन्मात्राऽर्थं[1] संज्ञाप्रणयनं किमर्थमि'ति ? । अनभिव्यक्तपदार्थकत्वाच्च[2] संज्ञाव्यावृत्तिः, सर्वनामसाहचर्याच्च । एतेनोपसर्जनस्याऽपि व्यावृत्तिः ।

भाष्यानुसारिणस्तु—कप्रत्ययस्य स्वार्थिकत्वेन द्व्यर्थाऽभिधानसमर्थ-त्वात्, 'अन्याऽभावो द्विवचने'तिवार्त्तिके द्विवचनशब्देन च यौगिकस्यैव ग्रहणात्सा[3]ङ्केतिकद्विवचनस्याऽग्रहणात्केऽप्ययजभावः सिद्धः । न च 'उभयतः' 'उभयत्रे'त्यादावप्ययजनापत्तिः, तेषामपि स्वार्थिकत्वेन द्विवचनत्वादिति वाच्यम् । त्र-तसिलोः सप्तम्यन्तात्पञ्चम्यन्ताच्च स्वार्थे विधानेनाऽव्ययत्वात् । सप्तम्यन्तार्थघटकधर्म एव तद्विधानेन च[4] द्विवचनत्वमक्षतमेव ।

न चैवं तरबादावप्ययजनापत्तिः । तरबादीनां प्रवृत्तिनिमित्तगतप्रकर्षा-ऽऽदौ, तत्समानाधिकरणगुणगतप्रकर्षाऽऽदौ वोत्पत्त्या, तयोरत्राऽसम्भवे-

---

१ इतोऽग्रे—'वस्तुतस्तु कप्रत्यये चिकीर्षितेऽयच्प्रसङ्गेनापवादविषयसम्भावनया काऽप्राप्तौ, अकचि तु अयचोऽप्राप्त्या, सर्वनामत्वाऽभावेन तदप्राप्तौ च, उभकावित्यस्याऽसिद्धिरिति मूलतात्पर्यमिति प्राहुः' इति च. पाठः ।

२ 'अनभिव्यक्तपदार्थत्वाच्च' ख. पाठः ।

३ 'साङ्केतिकद्विवचनस्याऽग्रहणात्' इति क. कुण्डलितः ख. पाठः ।

४ 'विधानेन च द्विवचनत्वाऽभावात् । उभशब्दार्थे तयोरविधानात् । यौगिक-द्विवचनत्वं द्वित्वसङ्ख्याप्रकारसङ्ख्येयविशेष्यकबोधविषयाऽर्थाऽनुवादकत्व-

नोभशब्दात्तदनुत्पत्तेः । यद्यप्येकस्यैवोभयसमबलत्वादिप्रतिपादनाय[1] कल्पप्[2] प्राप्नोति, तथापि तत्राऽयच्[3] नैव, सत्यभिधाने इत्याहुः ।

द्विवचनपरत्वाऽभावे इति[4] । अत्र वार्त्तिके तयप्समानार्थकोऽप्ययच्

मिति । [1]कस्य त्वज्ञाताद्यर्थविशिष्टोभार्थे विधानेन द्विवचनत्वमक्षतमेव । अत एव ईषदसमाप्त्यादिविवक्षायामुभकल्पौ उभतराविल्यादौ नाऽयच् । तदुक्तं भाष्ये—'केऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति । कथम् ?। स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवती'ति । इति = हेतोः, प्रकृतेः = कादिप्रकृतेरुभशब्दस्य ग्राहकेण द्विवचनशब्देन स्वार्थिकस्यापि ग्रहणमिति तदर्थः । टाप्साहचर्याच्च द्विवचनपदेन प्रत्ययस्यैव ग्रहणम् । एतदर्थमेव टाब्ग्रहणम् । अत एवोभयोरुभावुभाभावित्यादौ नाऽयच् ।

यत्तु—'इत्यन्तेन ग्रन्थेन उभशब्दपाठो व्यर्थ इति पूर्वपक्षे, प्रकृतिग्रहणे नेत्यादिना समाधानम् । अपिर्भिन्नक्रमः । प्रकृतिग्रहणेन तन्मध्यपतितत्वात्प्रत्ययानां ग्रहणमपि भवति अकजादीनां, तत्तव न सिध्येदतः पाठः कर्त्तव्यः । तेन प्रागुक्तोभकयादिसिद्धे'रिति । तन्न । अन्नत्यवार्त्तिकमूलभूतहरिप्रदर्शितव्याकरणान्तरस्मृतिविरोधादित्याहुः' ख. ग. च. पाठः ।

१ 'बलवत्त्वादि' ख. पाठः ।

२ 'कल्पप् प्राप्नोति, तथापि तेन तत्समपुरुषाऽन्तरस्यैव विशेष्यतया प्रतिपादनेनोक्तद्विवचनत्वाऽभावदयज्भवत्येवेत्याहुः । केचित्तु योगविभागस्येष्टसिध्यर्थत्वादयमयच् अव्यवहितद्विवचनपरत्व इवोभयो मणिरित्याद्ययजन्त इव च कप्रत्ययव्यवहितद्विवचनपरत्वेऽप्यसाधुरिति पाठं प्रत्याचख्युः' इति ख. पाठः । क. ग. च. नास्ति ।

३ 'तत्रायच् नैव, सत्यभिधाने इत्याहुः' इति क. पाठः ।

४ इतोऽग्रे 'वस्तुतस्तु द्विवचनविषयाऽभावे इत्यर्थः । पूर्ववार्त्तिके 'द्विवचनटाब्विषयत्वादि'त्यत्र वि[illegible]व प्रयोगात् । एतेनोभावित्यादौ द्विवचन-

1 'कादेस्त्वज्ञाताद्यर्थे' ग. च. पाठः ।

गृह्यते । अत एवोभयो मणिरुभये देवमनुष्या इति तदुदाहरणपरभाष्यं सङ्गच्छते । स्वार्थिकस्य तु तदुपक्रमेण[1] वार्त्तिकस्य प्रवृत्तेर्ग्रहणम्[2] । एवं चाऽवयवद्वयाऽऽरब्धमणिद्वयविवक्षयोद्भूतावयवभेदैकमणिविवक्षया वा द्विवचनमसाध्वेवे । अत्र चाऽनभिधानमेव शरणम्[3] । अत एवोभयशब्दस्य द्विवचनाऽभावादसर्वविभक्तिकत्वेनाऽव्ययत्वे प्राप्ते, 'तद्धितश्चे'ति-सूत्रस्थं परिगणनपरं 'कृत्तद्धितानां[4] ग्रहणं च पाठे' इति भाष्यं कैयटेनाऽवतारितम् । यद्यपि तद्भाष्यं 'पचतिकल्पमि'त्यादिवारणायेत्यपि व्याख्यातुं शक्यम्, तथाप्युक्तमेव भाष्यं तत्र प्रमाणम् । तदाह[5]–द्विवचनं नास्तीति ।

हरदत्त इति । अत्राऽरुचिबीजं[6] प्रागुक्तभाष्यविरोधः । तस्मादिति । उभशब्दादित्यर्थः[7] । जसीति । अवयवद्वयाऽऽरब्धसमुदायबहुत्वविवक्षायामित्यर्थः[8] ।

अन्तरङ्गत्वादिति[8] । 'निषेधाश्च बलीयांस' इत्यस्य तु नाऽत्र विषयः । प्रथमाऽऽदिसाहचर्येणैतत्सूत्रविषये निषेधाऽसम्बन्धात् । एवं च तयांऽशे-

---

परत्वं दुरुपपादम् , उभयत आश्रयणेऽन्तादिवत्त्वविरहादित्यपास्तम् । अत्र वार्त्तिकम्' इति ग. च. पाठः ।

१ 'तदुपक्रमेणैवाऽस्य वार्त्तिकस्य प्रवृत्तत्वाद् ग्रहणम्' ग. च. पाठः ।

२ इतोऽग्रे–'अत एव भाष्ये एकवचनबहुवचने एवोदाहृते' ग. च. पाठः ।

३ 'शरणम् । परिगणनमिति' ( ? ) ख. पाठः ।

४ 'सूत्रे कृत्तद्धितानां ग्रहणं च पाठे' ख. ग. घ. पाठः ।

५ 'तदेतदाह' ख. पाठः । ६ 'बीजन्तु' ख. पाठः ।

७ 'तस्मात् = उभयशब्दादित्यर्थः' इति क. ग. पाठः ।

८ इतोऽग्रे–'न च प्रथमचरमेत्यस्य निषेधविकल्पतया 'निषेधाश्च बलीयांसो भवन्ती'तिन्यायेन 'न लुमते'तिसूत्रादिभाष्यपठितेन तसिलादिषु जातीयदेशीयपाठज्ञापयिष्यमाणेन विकल्प एव स्यादिति वाच्यम्' ग. पाठः ।

९ 'अप्राप्तविभाषैवेति भावः' इत्यन्तोऽयं पाठो ग. नास्ति ।

ऽप्येषाऽप्राप्तविभाषैवेति भावः। न च सर्वाऽर्थवाचकत्वरूपाऽर्थस्य पूर्वे-सूत्रे निमित्तकोटौ प्रवेशेन समत्वमिति वाच्यम्। महासंज्ञया तादृशार्थ-बोधकानामेव गणेऽनुकरणमित्यर्थबोधनेऽपि, तस्य संज्ञानिमित्तत्वे मानाऽभावात्। आधुनिकसंज्ञोपसर्जनप्रथमादिवारणायेहाऽपि तदावश्य-कत्वाच्च। न चोभादुदात्त इतिविहितोऽयच् प्रत्ययान्तरमेवेति वाच्यम्। 'उभयी'त्यत्र ङीबनापत्तेः। 'टिड्ढाणञ्'ति सूत्रे मात्रशब्दादारभ्याऽयच-अकारात् प्रत्याहाराश्रयणे तु तयबादिग्रहणवैयर्थ्याऽऽपत्तेरिति भावः।

केचित्तु न 'अन्तरङ्गं बलीय' इत्यस्या अत्र विषयः। युगपत्प्राप्तेरभावात्। 'असिद्धं बहिरङ्गमि'त्यपि न। अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेः। अन्तरङ्गं प्रति बहिरङ्गाऽसिद्धत्वेऽपि, स्वं प्रत्यसिद्धत्वाऽभावेन, तत्प्रवृत्त्युत्तरं बहिरङ्ग-प्रवृत्तेरनया वारयितुमशक्यत्वात्। बहुशस्तथा दृष्टत्वात्। तदुत्तरमप्येत-त्प्रवृत्त्या पक्षे तदभावविशिष्टस्य साधुत्वबोधनं पूर्वादिष्विव।

न च कार्यकालपक्षे एतयोर्विषयः। तत्पक्षे द्वयोरपि 'जसः शी'त्यत्रोपस्थि-त्या बहिरङ्गत्वस्य दुरुपपादत्वात्। तत्पक्षे हि 'विभाषा जसी'त्यादौ 'जसी'-

---

१ 'संज्ञाप्रथमादिशब्दवारणाय' ग. च. पाठः।

२ 'वारणायोत्तरत्रापि तस्यावश्यकत्वात्' ग. ख. पाठः।

३ इतोऽग्रे–'विभक्त्यर्थापेक्षया स्वार्थद्रव्यलिङ्गादेरन्तर्भूततया विभक्तिनिमि-त्तकस्येदृशार्थापेक्षत्वेन बहिरङ्गत्वस्य वक्तुमशक्यत्वाच्च। न च प्रथमादि-साहचर्यात्सर्वाद्यपठित एव तयप्प्रत्ययान्तो ग्राह्य इति वाच्यम्। सर्वार्थवाच-कनेमशब्दस्यापि ग्रहणाऽनापत्तेः। भाष्यविरोधाच्च'–इति ग. च. पाठः।

४ 'तयबादिग्रहणवैयर्थ्यापत्तिः। स्वरूपस्य शास्त्रे प्रसिद्धत्वेन निराकाङ्क्षत्वेन प्रत्याहारग्रहणे मानाऽभावश्चेति सूत्रमतेनेदम्। 'अतिदिष्टादुपदिष्टं बलीय' इति न्यायेनाऽप्यत्र नित्या संज्ञा सुलभा। विकल्पो ह्यतिदेश प्राप्त इत्यपि केचित्' ग. च. पाठः।

५ 'वैयर्थ्यापत्तेरिति भावः' ख. पाठः।

६ 'अन्तरङ्गं प्रति' इत्यारभ्य 'पूर्वादिष्विव' इत्यन्तः क. पाठः। ख. ग. च. नास्ति।

त्येतत् 'जसः शीत्यत्रैवोपस्थितिरि'त्येतदर्थमात्रबोधकम् । किञ्चैवमर्द्धोऽर्थकसर्वाऽऽदिपठित'नेम'शब्देऽपि नित्यसंज्ञाया आपत्तिः । 'नेम'ग्रहणन्तु 'नेमः कीलेऽवधौ, गर्त्ते, प्राकारे, कैतवेऽपि चे'त्यर्थान्तरे सावकाशम् । एवं च नेमांऽशे उभयत्र विभाषैवेयम् । अत एव 'नवे'ति सूत्रभाष्येऽयचः प्रत्ययान्तरत्वेनैवोभये इत्यत्र नित्यसंज्ञोक्ता । प्रत्याहाराऽऽश्रयणेन च ङीप्साध्यः, तयबादिग्रहणं च न कार्यमिति लाघवमेवेति तदाशयः । सूत्रमते तु पूर्वविप्रतिषेधोऽङ्गीकार्य इत्याहुः ।

केचित्तु[1] गणव्याख्याने 'नेम इत्यर्द्धे' इति तदर्थमात्रोपलक्षणमिति तदंशे प्राप्तविभाषैवेत्याहुः ।

नित्यैवेति । 'परेऽवरे, उभया अमित्रा' इति तु च्छान्दसं बोध्यम् । तदन्तग्रहणमिति । 'प्रत्ययग्रहणे तदन्तग्रहणमि'ति,'प्रयोजनं सर्वनामाऽव्ययसंज्ञायामि'ति च तदन्तविधिद्वयेन'डतरान्तान्ते'त्याद्यर्थे परमकतरस्य, व्यपदेशिवद्भावेन कतरस्य च संज्ञा सिद्धेति भावः ।[2]

तत्र मानमाह—केवलयोरिति । प्रयुज्यतेऽनेनेति [3]प्रयोजनं = संज्ञा-

---

१ 'केचित्' इत्यारभ्य 'आहुरि'त्यन्तः पाठो ग. नास्ति ।

२ एतदग्रे—'डतरडतमाविति । ननूक्तरीत्या शब्दविशेष्यमादाय डतरादेर्विशेषणात्तदन्तविधिना प्रत्ययान्तस्य सञ्ज्ञा, उत प्रत्ययाक्षिप्तस्वप्रकृतिघटितसमुदायविशेषणात्तदन्तविधिना ? । नाद्यः । परमकतरशब्दादीनां सर्वनामसञ्ज्ञाऽनापत्तेः । 'प्रत्ययग्रहणे यस्मादि'तितदादिविधिप्राप्तडतरान्तत्वाऽभावान्न द्वितीय इत्याह—यद्यपीति । तदन्तग्रहणमिति । प्रत्ययाक्षिप्तस्वप्रकृतिघटितसमुदायविशेषणतया लब्धतदन्तविधिप्राप्तडतरान्तस्य, शब्दरूपविशेष्येणाऽन्वयात्पुनस्तदन्तविधौ—परमकतरस्य, व्यपदेशिवद्भावेन च कतरस्य संज्ञा सिद्धेति भावः' इति ग. पाठः ।

३ 'प्रयुज्यतेऽनेनेति प्रयोजनम्, तदभावादित्यर्थः । तद्धि सर्वार्थवाचकत्वम् । महासञ्ज्ञाकरणेनार्थस्य प्रवृत्तिनिमित्तत्वाङ्गीकारात् । प्रत्ययमात्रस्य सर्वादि-

प्रवृत्तिप्रयोजकसर्वाऽर्थवाचकत्वम् , तदभावादित्यर्थः । (संज्ञाकरणेनाऽर्थस्य प्रवृत्तिनिमित्तत्वम् )। प्रत्ययमात्रस्य सर्वाऽऽदिगणपठितत्वेऽपि, तावन्मात्रस्य लोकेऽप्रयोगेण, तस्य सर्वाऽर्थवाचकत्वाऽभावात् । सर्वनामशब्दो हि योगरूढ्या सर्वाऽर्थबोधकत्वसमानाधिकरणसर्वनामपदवत्सर्वाऽऽदिप्रतिपादकः । एतद्विषये सर्वनामपदस्य केवलरूढत्वमेव प्रत्ययस्य संज्ञाविधानसामर्थ्यात्कल्प्यमिति चेत्तर्हि 'अतिकतराये'त्याद्यसिद्धिरिति दिक् । फलाऽभावादिति वाऽर्थः ।

नन्वन्यतरशब्दपाठो गणे व्यर्थः, डतरग्रहणेनैव सिद्धेरत आह— अन्यतरेति । किंयत्तद्भ्य एव तयोर्विधानेनाऽन्यशब्दात्तयोरभावादिति भावः । एतच्च पस्पशायां कैयटे स्पष्टम् ।

एके इति । वृत्तिकाराः । 'एतं त्वं मन्ये' इत्याद्युदात्तस्य, 'उत त्वः पश्यन्' 'उतो त्वस्मै तन्वमि'त्यनुदात्तस्य च दर्शनादिति भावः ।

एकस्तान्त इति । एकश्रुत्या पाठेनैव निर्वाहे, वारद्वयोच्चारणादेकस्तान्तश्छेत्तव्यः । एकः । प्रथमः । 'स्तरीरुत्वदि'ति प्रयोगोऽत्र मानम् । अस्य सर्वनामत्वफलन्तु 'अन्यत' इत्यर्थक-'त्वत्त'इत्यादिसिद्धिः ।

अत एव 'त्वदधरमधुरमधूनि पिबन्तमि'ति जयदेवः प्रायुङ्क्त । तत्र हि अन्यस्या इत्यर्थः, न तु 'तवाऽधर'इति । 'पश्यति दिशि दिशि रहसि भवन्तमि'तिवाक्यशेषेण कृष्णस्याऽसम्बोध्यत्वाऽवगत्या, सम्बोध्यस्य ( च ) युष्मदर्थत्वेनाऽनन्वयाऽऽपत्तेः । अत्र पक्षे 'त्व' इत्येकश्रुत्योदात्ताऽनुदात्तो-

गणपठितत्वेपि सर्वार्थवाचकत्वाऽभावात् । प्रत्ययान्तस्यैव लोके प्रयोगेण तत्रैव सर्वार्थवाचकत्वकल्पनात् । सर्वनामशब्दो हि' ग. पाठः ।

१ क. नास्ति । ख. ग. पाठः ।

२ 'न च सञ्ज्ञाविधानसामर्थ्यादेतद्विषये सर्वनामपदस्य केवलरूढत्वमेवाऽङ्गीकार्यम् । तथा सत्यतिकतरा इत्याद्यसिद्ध्या इष्टानुरोधेन तदन्तविधिनिषेधबाधस्यैव कल्पनादिति भावः' ग. पाठः ।

निर्देश इति भावः । सिमः कृत्स्ने च, शक्ते च, स्यान्मर्यादाऽवबद्धयोः' ।

गणसूत्रे इति । इदं च सप्तम्यन्तोदाहरणपरभाष्याल्लभ्यते । अपुरीति । 'पूःशब्दार्थस्य विशेष्यत्वे नेत्यर्थः । स च स्त्रियामेव । तेन स्त्रीत्वविशिष्टस्यैव बोधनेन तत्त्यागे मानाऽभावात् । अत एव भाष्ये'ऽन्तरायामि'ति स्त्रियामेवोदाहृतम् । अत एव जसि विभाषाविधायके नाऽस्योपयोगः, अदन्तादेव जसः शीविधानेन, टाबन्तात्प्राप्त्यभावात् ।

अन्तरायामिति । प्राकाराद्बाह्यायां, तदन्तर्वर्त्तिन्यां वेत्यर्थः । एकाऽऽदेशस्य पूर्वान्तत्वेन ग्रहणात्प्राप्तिः । 'त्यद्' 'तद्' एतावुक्तपरामर्शकौ । ( यत्तु 'आद्यश्छान्दस' इति । तन्न । 'स्यश्छन्दसी'ति सूत्रे छन्दोग्रहणवैयर्थ्याऽऽपत्तेः ) ।

'एकोऽन्यार्थे, प्रधाने च, प्रथमे, केवले तथा ।

साधारणे, समानेऽल्पे, सङ्ख्यायां च प्रयुज्यते' ।

केवले । असहाये इत्यर्थः । 'एकाकिभिः क्षुद्रकैर्जितमि'त्यादौ तथा प्रयोगात् । स्पष्टं चेदं 'बहुष्वि'ति सूत्रे भाष्ये ।

स्वाभिधेयाऽपेक्ष इति । स्वस्य = पूर्वाऽऽदिशब्दस्य, अभिधेयेनाऽपेक्ष्यत इति स्वाभिधेयापेक्षः । कर्मणि घञ् । स्वाऽभिधेयेनाऽपेक्ष्यमाण इत्यर्थः । नियमे चैतद्विशेषणमवधिद्वारा बोध्यम् । अवधिशब्दस्य नित्यसापेक्षत्वाद्वा न समासाऽनुपपत्तिः । 'स्वाभिधेयाऽपेक्षाऽवधी'ति समस्तमेव क्वचित्पठ्यते । एवं[2] च 'व्यवस्थायामि'त्यस्य 'नियमेनाऽवधिसापेक्षाऽर्थे वर्त्तमानपूर्वादीनामि'त्यर्थः ।

उत्तराः कुरव इति । स्यादेतत् । व्यङ्गविकलमेतत् । प्रयोगस्य निरूढत्वात्प्रयोक्तृभिरवधेर्नियमेनाऽन[3]पेक्षणाद्व्यवस्थाया अप्यभावात्[4] ।

---

१ क. कुण्डलितः ख. पाठः ।

२ 'एवञ्च' इत्यारभ्य 'इत्यर्थः' इत्यन्तः पाठो ग. नास्ति ।

३ 'अनपेक्षणाच्च' ख. ग. पाठः ।

४ इतोऽग्रे—'किञ्च महासञ्ज्ञालब्धस्यैकरूपेण सर्वार्थप्रकाशनयोग्यस्वरूप-

किञ्च दिग्वाचकपूर्वाऽऽदिशब्दानामपि संज्ञाऽनापत्तिः। तेषामपि तासु सङ्केतितत्वात् । अपि च 'दिङ्नामान्यन्तराले' इतिसूत्रे 'दक्षिणपूर्वे'त्यत्र पुंवद्भावो न प्राप्नोति । समानायामाकृतौ भाषितपुंस्कत्वाऽभावात् । आकृत्यन्तरे चैतौ भाषितपुंस्कौ, 'दक्षिणा, पूर्वे'ति दिक्शब्दौ, 'दक्षिणः, 'पूर्व' इति व्यवस्थाशब्दौ । एवं तर्हि 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भाव' इति भाष्यसन्दर्भेण, 'व्यवस्थानिमित्तो यो न भवति, स्वभावत एव यो दिशि वर्त्तते, स्वरूपव्यतिरिक्तप्रवृत्तिनिमित्तनिरपेक्षो यो दिशो वाचकः पूर्वादिशब्दः, स दिक्शब्द आश्रीयते। दिशि वर्त्तमानाः पूर्वादयो निमित्ताऽन्तरनिरपेक्षाः । देशकालयोस्तु व्यवस्थाऽपेक्षप्रवृत्तिनिमित्ताः । दिशि वर्त्तमानानां व्यवस्थाप्रवृत्तिनिमित्तकत्वे हि 'दिक्शब्देभ्यः सप्तमीपञ्चमी'-त्यादौ दिक्शब्दत्वेन व्यवहाराऽनुपपत्तिः ।

'दिग्वाचकशब्दप्रवृत्तिनिमित्तकत्वं हि दिक्शब्दत्वम्' इत्याद्यस्तातिप्रकरणस्थकैयटहरदत्तादिग्रन्थबलेन च, दिग्वाचिपूर्वादिशब्देषु व्यवस्थाऽभावस्य स्पष्टमभिधानात्कथं तत्र संज्ञा ? । अपि च 'दक्षिणा गाथका' इत्यत्राऽप्युत्कर्षस्याऽवधिसापेक्षत्वेन व्यवस्थायाः सत्त्वात्कथं न तत्र सर्वनामसंज्ञा ? ।

न च 'यावद्द्रव्यमनपायो व्यवस्थे'त्येव लक्षणमत्राऽऽश्रीयते । 'द्रव्योत्पत्तिक्षणमारभ्य नाशक्षणपर्यन्तं यत्र पूर्वादिव्यवहाराऽनपाय' इति हि तदर्थः । एवं च दिक्ष्वस्त्येव व्यवस्था । 'उत्तराः कुरव' इत्यादौ च । 'दक्षिणा गाथका' इत्यादौ तु न । दक्षिणत्वस्य तेषु यावद्द्रव्यमसत्त्वात् ।

---

सर्वार्थवाचकत्वस्य कुरुवाचकोत्तरशब्देऽभावात्तेनैव व्यावृत्तिसिद्धौ, पुनरसंज्ञायामिति व्यर्थम्' इति क. कुण्डलितो ग. पाठः ।

१ इतोऽग्रे-'न च विशेष्यतया दिग्बोधकत्वमेव तत्त्वम् । तथा सति 'रमणीया दिगि'त्यादावप्यस्तात्यापत्तिः । 'दिग्भ्य' इत्येव सिद्धे शब्दग्रहणवैयर्थ्यापत्तेश्च' इति क. कुण्डलितो ग. पाठः ।

पूर्वोत्तरवयसोस्तदभावात्। 'पूर्वस्मिन्गुरावि'त्यादौ 'परेषां युधी'त्यादाविव लक्षणयैवोपपत्तिरिति वाच्यम्। 'अधरे ताम्बूलराग' इत्यादावपि संज्ञाऽऽपत्तेः। देशकालयोः पुरुषभेदेनाऽवधिभेदेन चाऽनियतपूर्वादिव्यवहारदर्शनेनाऽव्याप्तिग्रस्तं चैतदिति चेन्न। यद्यपि संज्ञाशब्दत्वं रूढ्या बोधकशब्दत्वम्, अत एव 'संज्ञायां समजनिषदे'त्यादिना समूहार्थक'समज्या'शब्दस्य साधुत्वमुक्तं सूत्रकृता, अत एवाऽऽकडारसूत्रे इन्द्रादीनां, कुशूलादीनां च सञ्ज्ञात्वमुक्तं भाष्ये, अत एव पञ्चमे पशुनामत्वेन गवादयो व्यवहृता 'गोगोष्ठमि'त्यादिसिद्धये, न ह्येतेषु पदप्रवृत्तिनिमित्तकत्वरूपं[1] तत्, इन्द्रशक्रादीनां पर्यायत्वाऽनापत्तेः, भिन्नप्रवृत्तिनिमित्तकत्वात्, तथाऽपि 'संज्ञोपसर्जनीभूतास्तु न सर्वादय'इत्यत्राऽऽधुनिकसङ्केतविषये संज्ञाशब्दो वर्त्तते, सामर्थ्यात्। अन्यथा सर्वाऽऽदीनां[2] केवलरूढत्वेन तस्याऽसङ्गत्यापत्तेः[3]। 'दिक्षु त्वैश्वर एव सङ्केतो, नाऽऽधुनिकः, कुरुषु त्वाधुनिक एवे'त्यत्र व्याख्यातृवचनमेव प्रमाणं, लक्ष्यदर्शनं च। एवं देवगणविशेषे विश्वशब्दस्याऽप्यैश्वर एव सङ्केत इति 'विश्वेषां देवानामि'ति सिद्धम्[4]।

१ 'पदप्रवृत्तिनिमित्तकत्वरूपम्, आधुनिकसङ्केतरूपं वा तत्' ग. पाठः।

२ 'पूर्वादीनां' ग. पाठः।　　३ 'तस्य' इति क. नास्ति। ख. ग. पाठः।

४ इतोऽग्रे—'स्वस्वविषयापेक्षसर्वार्थवाचकत्वस्यापि सत्त्वाच्च। अन्यथा द्व्यादीनामपि सर्वार्थवाचकत्वाऽनापत्तिः। अत्र सूत्रेऽसंज्ञायामिति स्पष्टार्थम्, महासञ्ज्ञयैव सिद्धेः। न च दिशि व्यवस्थाया अप्यभावः। दिक्षु शब्दस्य प्रवृत्तिनिमित्तत्वेन व्यवस्थाप्रवृत्तिनिमित्तत्वाऽभावेऽपि, विशेष्याया दिशः सुमेरुरूपाऽवध्यपेक्षा नियमतोऽस्त्येव। शब्दशक्तिस्वभावात्। प्रसिद्ध्या तु नाऽवधिवाची शब्दः प्रयुज्यते। अत एव तदवधेरुदयाचलसंनिहिता पूर्वा, अस्ताचलसंनिहिता परशब्दवाच्येत्यादिव्यवहारः। अत एव 'स्वाभिधेयापेक्षे'त्येवोक्तम्, न तु 'स्वप्रवृत्तिनिमित्ते'ति। अत एव न बहुव्रीहाविति निषेधे प्राप्ते

अत्र सूत्रे 'ऽसंज्ञायामि'ति तु स्पष्टार्थम् । महासंज्ञयैव सिद्धेः । न च दिशि व्यवस्थाया अप्यभावः, दिक्षु शब्दस्य प्रवृत्तिनिमित्तत्वादिति वाच्यम् । [1]पूर्वाऽऽदयः शब्दा आकाशवदेकस्या दिश उपाधिकृतं भेदं प्रतिपादयन्ति । उपाधिश्च तत्र पृथ्वीमध्यं, तत्प्रान्तवर्त्तिनश्चत्वारः पर्वताश्च । [2]रामायणे किष्किन्धाकाण्डे सुग्रीवेण मध्यदेशावधिकस्यैव दिग्विभागस्योक्तत्वात् । एवं च 'तन्मध्यभागाऽवधिकोदयाऽचलाऽऽदिपर्यन्तदेशरूपोपाधिविशिष्टदिशि पूर्वाऽऽदीनां तत्तच्छब्दं प्रवृत्तिनिमित्तीकृत्य प्रवृत्ति'रित्युपाध्यन्तर्गततया मर्यादाया अपि भानेन, व्यवस्थाविषयत्वाऽक्षतेः । उदयाऽचलपर्यन्तरूपोपाधेस्तदभिधेयस्य तदाकाङ्क्षत्वेन मूलोक्तलक्षणाऽनुपपत्तिरपि न । 'व्यवस्थायामि'ति च विषयसप्तमी । स्पष्टं चेदं 'दक्षिणोत्तराभ्यामि'तिसूत्रे भाष्यकैयटयोरिति तत्रैव भाष्यप्रदीपोद्द्योते निरूपितम् ।

देशवृत्तीनान्तु तत्तदवधिकोदयाचलसन्निहित[3]त्वाऽऽदि प्रवृत्तिनिमित्तमित्यादि बोध्यम् । 'उत्तराः कुरव' इत्यत्राऽपि सुमेर्वेवधिकपरदेशत्वरूपोपाधिविशिष्टकुरुषूत्तरशब्दः शब्दं प्रवृत्तिनिमित्तीकृत्य वर्त्तते इति व्यवस्थाविषयत्वमस्त्येव । 'उत्तराः कुर[4]व' इत्यस्य उत्तरनामानः कुरव इत्यर्थ' इति केचित् । 'ये के चन हिमवन्तं परेण जनपदा 'उत्तरकुरव' 'उत्तरमद्रा' इति तु [5]ब्राह्मणे श्रूयते । कपिञ्जलाधिकरणे शाबरभाष्ये तु

---

'विभाषा दिक्समासे' इतिसूत्रमि'ति भाष्योक्तं सङ्गच्छते इत्याहुः । 'उत्तराः कुरव' इत्यत्रापि विशेष्यस्य शब्दशक्तिस्वभावेनैव सुमेरुरूपाऽवध्यपेक्षत्वेन व्यवस्थाविषयत्वमस्त्येव । ये के चन हिमवन्तम्' इति ग. च. पाठः ।

१ 'पूर्वादिशब्दैराकाशवदेकस्या एव दिश उपाधिकृतभेदप्रतिपादनात्' इति क. पाठः । २ 'रामायणे' इत्यारभ्य 'दिग्विभागस्योक्तत्वात्' इत्यन्तोऽयं क. पाठः । ३ 'संनिहितत्वं प्रवृत्तिनिमित्तम्' ख. पाठः । ४ 'कुरव' इति क. नास्ति । ५ 'तैत्तिरीये श्रूयते' ख. ग. पाठः ।

'उत्तराः कुरवो दक्षिणान्कुरूनपेक्ष्योत्तरा इत्युच्यन्ते' इत्युक्तम् । ( 'दक्षिणा गाथका' इत्यत्रोत्कर्षविवक्षायामाकाङ्क्षासत्त्वेऽपि, तदविवक्षायामसत्त्वेन नियमाऽभावान्न दोषः )[1] । एवम्[2] 'उत्तरे प्रत्युत्तरे च शक्त' इत्यपि 'व्यवस्थायामि'त्यस्य प्रत्युदाहरणं बोध्यम् ।

'अधरे ताम्बूलराग' इत्यादौ तु संज्ञात्वात्तत्प्रयुक्तव्यवस्थाऽभावाद्वा न प्रवृत्तिः । 'परेषां युधी'त्यादौ तु परदेशनिष्ठत्वाऽऽदिभिरेव बोधाद्व्यवस्थाऽस्त्येव । शत्रुत्वादिकं त्वार्थिकोऽर्थः ।

(केचित्तु[3] देशबोधकतया, तत्स्थबोधकतया वा व्यवस्थाविषययोरेव पराऽपरशब्दयोरुपचाराच्छत्रौ, प्रतिवादिनि च प्रयोगः । न चैवमुपसर्जनत्वम् । लाक्षणिकत्वेऽपि, तत्त्वाऽभावात् । स्वार्थविशिष्टपदान्तराऽर्थोपस्थापकत्वे एवोपसर्जनत्वाऽङ्गीकारात्[4] । ध्वनितं चेदं 'ञितश्च तत्प्रत्यया'-दि'ति सूत्रे भाष्ये । अत एव भूवादिसूत्रे 'एतान्यपी'त्यस्यैतत्प्रतिपाद्यानि वस्तूनीत्यर्थ इति कैयट इति वदन्ति । तत्र दृष्टान्तोऽसिद्धः । एतच्छब्देन शक्त्यैव तस्य बोधयितुं शक्यत्वात् । बुद्धिस्थत्वन्तु शक्यतावच्छेदकतावच्छेदकम् । बोधश्च प्रातिस्विकरूपेणैव । बुद्धिस्थत्वस्यापि शक्यतावच्छेदकतावच्छेदकाक्रान्तत्वादप्रकरणज्ञस्य क्वचिद् बुद्धिस्थत्वेन बोधेऽपि न क्षतिः । 'तदादिभिस्तत्तद्रूपेणैव बोधजननादि'त्यन्ये[5] । यत्तु 'पूर्वादीनां परस्परसाहचर्येण दिग्देशकालवृत्तीनामेव ग्रहणा'द्दक्षिणा गाथका' इत्यादौ दोषो ने'ति । तन्न । दक्षिणसाहचर्यात्कालवाचकानामपि ग्रहणाऽनापत्तेस्तस्याऽत्राऽनाश्रयादित्याहुः ) ।

---

१ 'न दोषः' इत्यन्तः क. कुण्डलितः ख. ग. पाठः ।

२ 'एवम्' इति ख. पाठः ।

३ 'केचित्तु' इत्यारभ्य 'अनाश्रयादित्याहुः' इत्यन्तः क. कुण्डलितः ख. ग. पाठः ।

४ 'स्वार्थविशिष्टाऽर्थान्तरोपसंक्रमे एवोपसर्जनत्वा' ग. पाठः ।

५ 'तदादिभिः' इत्यारभ्य 'इत्यन्ये' इत्यन्तोऽयं पाठः क. नास्ति ।

स्वमज्ञा । 'आख्या'ग्रहणमात्मीयत्वेन ज्ञात्यादिविवक्षायामपि संज्ञा यथा स्यादित्यर्थं, धनत्वेनाऽऽत्मीयस्य बोधे मा भूदित्यर्थं चेत्याहुः। न चा'ऽऽत्माऽऽत्मीयाऽऽख्याया'मित्येव वाच्यम् । लाघवाऽभावात् ।

आत्माऽऽत्मीयज्ञातिधनवाची स्वशब्दः । तत्र ज्ञातिधनयोः पर्युदासादात्माऽऽत्मीयौ परिशिष्टौ । तत्राऽऽत्मनि '[1]स्वो ज्ञातावात्मनि स्वमि'त्यमरान्नपुंसकत्वेऽपि, 'स्वः स्यात्पुंस्यात्मनी'ति मेदिनीकोशात्पुँल्लिङ्गोऽपि[2] स्वशब्दे[3] इत्यभिप्रेत्याऽऽह—आत्मान इति वेति । ( '[4]स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये, स्वो धनेऽस्त्रियामि'त्यमरान्नपुंसकोऽपीत्येके ।

अन्ये तु 'कोशयोरविरोधे संभवति भिन्नाऽर्थकल्पनस्याऽन्याय्यत्वादमरे 'आत्मनी'ति पूर्वान्वयि, 'स्वमि'ति चोत्तरान्वयीत्याहुः[5] । एवं हि 'स्वोज्ञातावात्मनि धने त्वस्त्री आत्मीयके त्रिषु' इति पाठेनैव सिद्धे, त्रिःस्वग्रहणस्य वैयर्थ्याऽऽपत्तेः । अत एव—

'बन्धूकबन्धूभवदेतदस्या मुखेन्दुनाऽनेन सहोज्जिहाना ।
रागश्रिया शैशवयौवनीयां स्वमाह सन्ध्यामधरोष्ठरेखा' ॥

इत्यत्राऽऽत्मानमित्यर्थक'स्व'मित्यस्य 'बन्धूभव'दिति नपुंसकं विशेषणमुपात्तं श्रीहर्षेणेत्यन्ये[6] ) ।

---

१ स्वो ज्ञातावात्मनिस्वमित्यमरान्नपुंसकत्वेऽपि' इति ख. ग. च. नास्ति, क. पाठः । २ अपिर्नास्ति ख. पुस्तके ।

३ इतोऽग्रे–'अत एव 'विभाषा जसी'तिप्रकरणे 'स्वमात्मात्मीयाख्यायामि'त्येव नोक्तम् । केशनखादौ तु न । पूर्वोत्तरसाहचर्येण प्राप्तविभाषात्वस्यैव न्याय्यत्वात्' इति ग. पाठः ।

४ 'स्वो ज्ञातावात्मनि' इत्यारभ्य 'श्रीहर्षेणेत्यन्ये' इत्यन्तः क. कुण्डलितः ख. पाठः ।

५ 'इत्याहुः, एवं हि' इति क. नास्ति । ख. ग. च. पाठः ।

६ 'त्यपरे' ग. पाठः ।

'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये। छिद्राऽऽत्मीयविनाबहिरवसरमध्येऽन्तरात्मनि चे'ति कोशोक्तार्थाऽन्तरव्युदासार्थमाह—अन्तरं बहिर्योगेति। बहिःशब्देनाऽनावृतो देशः, तद्देशस्थं वस्तु चोच्यते। तत्राऽऽद्यमर्थं गृहीत्वाऽऽह—बाह्या इति। द्वितीये त्वाभ्यन्तरा इत्यर्थः। बाह्येन ह्याभ्यन्तरस्य योगोऽस्ति। अर्थद्वयमप्याकरे स्थितम्। 'उपसंव्यान'शब्दोऽपि कर्म-करणव्युत्पत्तिभ्यामन्तरीयोत्तरीयपरः।

नन्वेवमुपसंव्यानग्रहणं व्यर्थम्, बहिर्योगेनैव गताऽर्थत्वादिति चेत्। उपसंव्यानत्वप्रकारकशाब्दबोधार्थं तद्ग्रहादिति सूत्रहृदयम्।

अयं च त्रिसूत्र्या क्रियमाणो विकल्पो जसाधारे कार्ये एव, न त्वकजादाविति बोध्यम्। वक्ष्यमाणयुक्तेः। तेनैषामकजाद्युदात्तत्वादिकं च नित्यमेव। अत एव 'प्रथमचरमे'ति सूत्रे 'प्रथमके' इति रूपं न भवती'ति कौस्तुभकृतः। नेमशब्दस्य तु 'नेमके' नेमका' इति भवत्येवेति दिक्।

ननु 'पूर्वादिभ्यो नवभ्यो वे'तिसूत्रवदत्रापि 'पूर्वादीनि नव वे'त्येवोऽस्त्विति[1] चेन्न। भावतात्पर्यकतालोभेन[2] अर्थान्तरेऽप्राप्तविभाषाऽऽपत्तेः। (प्राप्तविभाषायामुक्ताऽनुवाददोषादप्राप्तविभाषायामपूर्वविधानात्सैव स्यात्।[3] भावतात्पर्यकतालोभेन चाऽप्राप्तविभाषैव स्यात्। यदि[4] तु तत्र 'व्यवस्थायामि'त्यादि पाठविशेषणं, तदा चिन्त्यो न्यास इति वदन्ति। अन्ये तु 'पूर्वादिभ्यो नवभ्यो वे'ति 'जसः शी'त्यत्राऽनुवर्त्त्य, वाक्यभेदेन व्याख्येयम्। एवं चाऽष्टाध्यायां त्रिसूत्री न कार्या। 'व्यवस्थायामि'त्यादि तु पाठविशेषणमेवेत्याहुः)।

न बहु(व्रीहौ)। अयं हि न समासे कृते निषेधः, अन्वर्थसंज्ञयैव

---

१ 'तथैवास्त्विति' ख. ग. पाठः।

२ 'भावतात्पर्य' इत्यारभ्य 'आपत्तेः' इत्यन्तोऽयं क. पाठः।

३ क. कुण्डलितः ख. ग. पाठः।

४ 'यदि तु' इत्यारभ्य 'वदन्ति' इत्यन्तोऽयं क. ग. पाठः।

सिद्धेः। न च 'एकद्वा' इति बहुव्रीहावुभयपदार्थप्रधाने 'सङ्ख्ययाऽव्यये'ति-सूत्रकृते उपसर्जनत्वाऽभावेन, तत्र सर्वनामत्वनिषेधार्थं सूत्रम्। समासाऽवयवसमासान्ते कृते विशिष्टस्य सर्वाद्यन्तत्वाऽभावात्। समासान्तानामुत्तरपदावयवत्वन्तु नेति[1] वक्ष्यते। 'अतो बहुव्रीहिशब्दस्य तदर्थे विग्रहवाक्ये लक्षणा, चिकीर्षितपदाध्याहारो वे'ति वृत्तिकृतः। अत एव 'बहुव्रीहा'विति गुरुभूतसप्तमीनिर्देशः। अन्यथा 'न बहुव्रीहि'रित्येव वदेदित्याशयेन व्याचष्टे—चिकीर्षित इति।

प्रक्रियावाक्ये इति। अलौकिके इत्यर्थः। न चाऽलौकिकवाक्ये समासाऽऽदिप्रवृत्त्यैकार्थीभावस्यापि तत्रैव कल्पनादुपसर्जनत्वादेव निषेधसिद्धिरिति वाच्यम्। तत्रैकार्थीभावस्याऽऽहार्याऽऽरोपेऽपि, स्वार्थविशिष्टाऽर्थाऽन्तरबोधकत्वरूपोपसर्जनत्वाऽभावादतिभवकानित्यत्रेव[2] प्राप्तस्याऽकचोऽभावार्थं संज्ञानिषेध इत्यत्र तात्पर्यात्। एतेन 'त्वं पिता यस्ये'ति विग्रहवाक्ये प्राप्ता संज्ञा निषिध्यते' इत्यपास्तम्। तस्य लौकिकत्वात्। 'प्रक्रियावाक्येऽयं निषेधो, न तु लौकिके' इति[3] कैयटोक्तेः।

नन्वस्तु तत्राऽकच्, अत आह—स चेति। अतिक्रान्त[4] इति। पूर्वोक्तस्य लौकिकवाक्यस्य, समासस्य च दृष्टान्तद्वयमनेनोच्यते ( इति न दोषः )।

अकृतव्यूहपरिभाषा त्वनित्यत्वान्न प्रवर्त्तते। तत्र चेदमेव सूत्रं ज्ञापकम्। फलन्त्वतिभवकानिति।

---

१ 'न सार्वत्रिकमिति वक्ष्यते' ख. पाठः।

२ 'अलौकिकविग्रहवाक्ये एकार्थीभावकल्पनात्पूर्वमतिभावकानित्यत्रेव' ग. पाठः।

३ 'इति कैयटविरोधात्। 'एतदर्थके प्रक्रियावाक्ये' इति व्याख्यानन्तु क्लिष्टम्' इति ख. ग. पाठः।

४ इतोऽग्रे—'इदं च समासार्थकथनम्। अकच्प्राप्तिविषयीभूतन्त्वेतन्मूलकमलौकिकं बोध्यम्। तस्य प्रयोगानर्हत्वात्परमस्य प्रयोगः। यद्वा पूर्वोक्तस्य लौकिकवाक्यस्य' इति ग. पाठः। ५ ग. पाठः।

तस्या अभावाच्च । ('अन्तरङ्गानपि विधी'निति न्यायोऽप्यकृतव्यूहपरिभाषाऽन्तर्गत एवेति सोऽपि न प्रवर्त्तते । लुक्स्थानिभूतप्रत्ययनिमित्तकार्यस्यैव तेन बाधाच्च) इत्याहुः ।

भाष्यकारस्त्विवति । 'अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशया'विति-भाष्योक्तेरिति भावः । न चैवं स्मृतिद्वयप्रामाण्याद्विकल्पोऽस्तु, कथं 'न बहुव्रीहा'वित्यस्य प्रत्याख्यानमत आह—यथोत्तरमिति । न चेदं नोदासीनायाः श्रुतेः, स्मृतेर्वा वाक्यं, येन प्रमाणमिति वाच्यम् । सूत्रकारेण खण्डितप्राचीनऋषिवाक्यानामप्रामाण्यवत्सूत्रकारवचःखण्डनप्रवृत्तभाष्यवार्त्तिकवचनप्रामाण्यात्तदंशे सूत्रकारवचसोऽप्यप्रामाण्यकल्पनौचित्यात् ।

एतदेवाऽभिप्रेत्य 'धिन्विकृण्व्यो'रिति सूत्रे 'किमर्थमत्वं विधीयते, वलोप एवास्त्वि'त्याशङ्क्याऽत्वेऽल्लोपे तस्य स्थानिवत्त्वेन गुणाऽभावाय तत् । न च वलोपेऽपि 'न धात्वि'ति गुणनिषेधः सिद्ध इति वाच्यम् । तत्प्रत्याख्याने गुणप्राप्ते'रित्युक्तम् । एतेन सूत्रमतात्प्रत्याख्यानवादिमतं

---

१ 'तस्या अभावाच्चेत्याहुः' क. पाठः ।

२ क. कुण्डलितः ख. ग. पाठः ।

३ 'न बहुव्रीहा'वित्यस्य प्रत्याख्यानमिति वाच्यम् । भाष्यस्याऽसन्दिग्धत्वेन, सन्दिग्धार्थस्य सूत्रस्याऽन्यथा व्याख्याया उचितत्वात् । इतिहासपुराणाद्यैर्वेदाऽर्थवद्वार्त्तिकभाष्याऽऽदिग्रन्थैः सूत्राऽर्थस्य वर्णयितुं युक्तत्वाच्च । तदेतद् ध्वनयन्नाह—यथोत्तरमिति' इति क. कुण्डलितः पाठः ।

४ 'एतेन नेदमुदासीनायाः' ख. ग. पाठः ।

५ 'प्रमाणं स्यादित्यपास्तम्' ख. ग. पाठः ।

६ 'किञ्च यथा सूत्रकारेण' ख. ग. पाठः ।

७ 'अप्रामाण्यं कल्प्यते, तथा सूत्रकारवचःखण्डन' ख. ग. पाठः ।

८ 'कल्पनमेवोचितम्' ख. ग. पाठः ।

९ 'एतदेव' इत्यारभ्य 'विपरीतमिति च ध्वनितम्' इत्यन्तोऽयं क. पाठः ।

प्रबलमिति ध्वनितम् । एवञ्च तद्भाष्यमूलकमेवेदं 'यथोत्तरमि'ति । किञ्च प्रत्याख्यानवादिसंमतलक्ष्यमेव यथाकथञ्चित्सूत्रमतेऽपि साध्यं, न तु विपरीतमिति च ध्वनितम् ।

[ वस्तुतस्तु महासंज्ञयैव सिद्धे सूत्रे बहुव्रीहिपदमुपसर्जनोपलक्षणम्, तेनोपसर्जनत्वे जात एव निषेधो, न तु ततः प्रागप्यकृतव्यूहपरिभाषया तदभाव इत्येतद्बोधनद्वारा'ऽतिभवकानि'तिरूपसिद्ध्यर्थम् । प्रत्याचख्यावित्यस्य च वृत्तिकाराद्युक्तार्थकतया प्रत्याचख्यावित्यर्थ इति न कश्चिद्दोषः ।

अन्ये तु 'च्छ्वोः शूडि'तिसूत्रे सतुक्ग्रहणादकृतव्यूहपरिभाषाऽनित्या, तदभावो वा । तद्धि 'प्रष्टे'त्यादावन्तरङ्गत्वाज्जातस्य तुकः श्रवणं मा भूदिति क्रियते । न च सतुक्निर्देशेऽप्यन्त्यस्य स्यात् । अनर्थकेऽलोन्त्यस्य निषेधात् । सतुक्निर्देशसामर्थ्याच्च । न च वाञ्छादेः क्विपि तुग्रहिते शादेशनिवृत्त्यर्थं सतुक् निर्देश इति वाच्यम् । तत्र शादेशयोग्यप्रत्ययपरत्वस्यैवाऽभावात् । अत एव तत्सूत्रे सतुक्निर्देशमुक्त्वाऽलोन्त्यस्येत्याशङ्क्य 'सन्निपातग्रहणसामर्थ्यात्सर्वस्य भविष्यती'त्युक्त्वा, 'यद्येवं वाञ्छतेरप्रत्ययः 'वान्' 'वांशौ' 'वांश' इति न सिद्ध्यति । यथालक्षणमप्रयुक्ते'इति भाष्यं सङ्गच्छते । 'अप्रयुक्तत्वेन लक्षणस्याऽयमविषय' इति तदर्थः । 'राल्लोप'इतिसूत्रे तु 'न ध्याख्ये'तिनत्वनिषेधाल्लिङ्गात्, 'मूर्तौ घन'इत्यादिनिर्देशाच्च केवलस्यैव छस्यानुवृत्तिः । एतेन 'छकारान्तरं प्रश्लिष्य, समाहारद्वन्द्वगर्भं द्वन्द्वञ्चाऽऽश्रित्याऽऽदेशेऽपि शद्वयं प्रश्लिष्य, यथासङ्ख्यमाश्रित्य, वाञ्छतेः क्विपि शादेशो भवत्येवे'ति हरदत्तोक्तमपास्तम्, भाष्यविरोधादि'ति वदन्ति । तन्मते एकस्याऽर्थस्याऽनेकधा बोधनायेदं सूत्रमिति बोध्यम् ।

परे तु 'कंसं घातयती'त्यादौ क्ल्लुकि, तन्निमित्तकादेशनिवृत्तये क्रिय-

---

१ क. कुण्डलितोऽयं 'दिक्' (४२९ पृष्ठे) इत्यन्तो ख. ग. पाठः । 'एवञ्च महासंज्ञयैव' ग. पाठः । २ 'तदभावो वा' इति क. ग. पाठः ।

३ इत आरभ्य 'मञ्जूषायां विस्तरेण प्रतिपादितम्' ( ४२८ पृष्ठे ) इत्यन्तोऽयं ख. ग. पाठः ।

माणं 'प्रकृतिप्रत्यापत्ति'वचनं तदनित्यत्वे ज्ञापकमिति वदन्ति । तच्चिन्त्यम् । तत्र सन्नियोगशिष्टपरिभाषाप्राप्त्या, तदनित्यत्वज्ञापनस्य तेनौचित्येऽप्ये- तदनित्यत्वज्ञापने मानाऽभावात् । न च संनियोगशिष्टपरिभाषा एतदन्त- भूतैव । मानाऽभावात् । किञ्च 'पञ्चेन्द्र'इत्यादौ, प्रकृते च प्रत्ययलक्षणेन प्रत्ययसत्त्वादकृतव्यूहा इत्यस्याऽप्रवृत्तेः । 'न लुमते'ति निषेधस्तु न । प्रत्यये परतो जायमानपूर्वकार्य एव तत्प्रवृत्तेः ।

वस्तुतस्तु 'पुष्ययोगं जानाति, पुष्येण योजयती'त्येतत्साधक'पुष्य- योगे ज्ञी'ति वचने भाष्यकृत्कृतप्रकृतिप्रत्यापत्त्यनुवृत्तिस्तदनित्यत्वज्ञापिका बोध्या । [1]यत्तु 'बहुव्रीहौ सर्वनामता न । प्रियविश्वाय । सूत्रमते बहुव्रीहौ न सर्वनामता । भाष्यमते गौणत्वमात्रे । 'त्वत्कपितृको' 'मत्कपितृक' इत्यत्र समासावयवयोर्युष्मदस्मदोः सर्वनामत्वादनङ्कार्यत्वेनाऽकच्स्यात्, स मा भूत् । क एव यथा स्यादि'त्यर्थं सूत्रमि'ति न्यासकृन्मतमि'ति । तन्न[2] । बहुव्रीह्यवयवानामुपसर्जनतया ( सर्वादिबहिर्भावे[3] ) तदन्तस्य, तदवयवस्य चाऽप्राप्त्या, 'सूत्रमते' इत्यादेरसङ्गतत्वात् । तस्य हि बहुव्रीहे- स्तदवयवानां वेति द्वेधा व्याख्यानसम्भवः । अन्वर्थसंज्ञया गौणप्रति- षेधस्य सूत्रसंमततया, वचनाऽऽरम्भेण वार्त्तिकसंमततया च, विशिष्य 'भाष्यमते' इत्यस्याऽसङ्गतत्वाच्च ।

एतेन 'समासाऽवयवयोः सर्वनामत्वादि'त्याद्यपास्तम् । स्वाऽर्थ- विशिष्टाऽन्यपदार्थवृत्तित्वेन गौणत्वात् । एतेन 'समुदायो हि विशेषेऽवति- ष्ठते, पूर्वपदन्तु सर्वार्थत्वादनपेतमेव, समुदाये एकार्थीभावाऽङ्गीकारेण समुदायस्य क्रान्ताद्यर्थोपसर्जनत्वेऽप्यवयवस्य तत्त्वे मानाऽभावादि'त्यपा- स्तम् । ( समुदायस्य प्रत्येकाऽनतिरिक्तत्वात् । अत एवाऽनेकसुबन्तस्या- ऽन्यपदार्थवृत्तित्वाद्बहुव्रीहिः सङ्गच्छते[4] ) । अवयवाऽर्थस्याऽप्यन्यपदार्थ-

---

१ 'एतेन' ग. पाठः । ३ ग. पाठः ।

२ 'इत्यपास्तम्' ग. पाठः । ४ 'सङ्गच्छते' इत्यन्तोऽयं ग. पाठः ।

विशेषणतयैवोपस्थित्योपसर्जनत्वाऽक्षतेः[1]। इतराऽर्थ[2]विशेषणत्वेनोपस्थिति-विषयत्वस्यैवोपसर्जनपदार्थत्वात्। अन्यपदार्थोपसर्जनीभूते निष्कृष्या-ऽज्ञाताद्यर्थविवक्षायाः कर्त्तुमशक्यत्वेन, समासे कृतेऽकचः प्राप्त्यभा-वाच्च)। किञ्चैवं तुल्यरीत्योत्तरपदस्याऽपि सर्वाऽर्थत्वाऽनपायेन सर्वनाम-त्वा'दतिसर्वाये'त्यत्र स्मायादेशो दुर्वारः। सर्वनामसंज्ञायां तदन्तग्रहणात्।

न चो'त्तरपदे एव लक्षणा, पूर्वपदं तात्पर्यग्राहकमि'तिमते पूर्वपदे सर्वाऽर्थवाचकत्वमस्ति, नोत्तरपदे इति, नाऽत्र दोष इति वाच्यम्। तत्र मते पूर्वपदं निरर्थकं, स्वाऽर्थप्रतिपादकं वा ?। नाऽऽद्यः। नैरर्थक्येन सर्वाऽर्थवाचकत्वाऽभावादेवाऽप्राप्तेः। नाऽन्त्यः। पूर्वपदे विशेषणाऽन्वया-ऽऽपत्तेः। ('[3]पूर्वपदं तात्पर्यग्राहकमि'त्युक्तेरसङ्गताऽऽपत्तेश्च। जहत्स्वा-र्थायां वृत्तौ तदसम्भवेनेष्टापत्तिः कर्त्तुमशक्या)। विनिगमनाविरहेण पदद्वयेऽपि लक्षणाया युक्तत्वाच्चेति **समासवादे मञ्जूषायां** विस्तरेण प्रतिपादितम्। एकार्थीभाववादिभिस्तथा वक्तुमयोग्यत्वाच्च। एवं च तद्घटकाऽवयवानामपि सर्वनामत्वाऽभाव एवोचितः। अनयैव दिशा-ऽन्येऽपि तदीयानां व्याख्यानाऽऽभासा निराकार्याः।

[4]एतेनाऽवयवानां समुदायार्थं प्रत्युपसर्जनत्वेन समुदायनिष्ठसंज्ञाया-मनिमित्तत्वेऽप्यवयवानां स्वार्थमात्रप्रधानत्वेन स्वार्थं प्रत्यनुपसर्जनतया, तन्मात्रनिष्ठा संज्ञा भवत्येव। 'अतिसर्वाये'त्यत्र तु सर्वनाम्नोऽङ्गात् परस्य स्मायादिविधानेनाऽवयवस्य सत्यपि सर्वनामत्वे दोषाऽभावः। ङेनिरूपिताङ्गस्याऽसर्वनामत्वात्। इदमेव ध्वनयितुमनङ्गकार्यत्वादित्युक्त-

---

१ 'अक्षतेश्च' ग. पाठः।

२ 'इतरार्थ' इत्यारभ्य 'प्राप्त्यभावाच्च' इत्यन्तोऽयं ग. नास्ति।

३ 'कर्त्तुमशक्या' इत्यन्तोऽयं ग. पाठः।

४ 'एतेन' इत्यारभ्य 'इत्यपास्तम्' इत्यन्तः क. ग. पाठः।

मित्यपास्तम् । ईदृशाऽर्थस्य सञ्ज्ञाप्रवृत्तावनिमित्तत्वात्[1] । न चाऽर्थान्तरसङ्क्रमात्प्राक् प्रवृत्ता संज्ञाऽर्थान्तरोपक्रमे सति गताऽतो न 'अतिसर्वाये'-त्यादौ दोषः । अतिसर्वशब्दे स्मायाद्यर्थं पुनः संज्ञा तु दुर्लभा । संज्ञोपसर्जनानां तन्निषेधात् । पाठात्पर्युदासेन तदन्तग्रहणेनाऽपि न संज्ञा । अर्थाऽन्तरसंक्रमात्पूर्वं तु स्मैभावस्य नैव प्रवृत्तिः । अकच्प्रवृत्तिस्तु ततः प्रागस्त्येवेति तन्निवृत्तयेऽकृतव्यूहपरिभाषाऽनित्यत्वबोधनद्वारा इदं सूत्रं सार्थकमित्याशय इति वाच्यम् । 'अनङ्गकार्यत्वेने'ति हेतूपन्यासवैयर्थ्याऽऽपत्तेः । तस्य हि पूर्वाऽपरन्यासग्रन्थपर्यालोचनयाऽङ्गसंज्ञाऽनपेक्षत्वेनेत्येवाऽर्थो लभ्यते । 'स्मैप्रभृतीनामङ्गकार्यत्वाद्विश्वादिशब्दानामनङ्गत्वादि'त्यादिर्हि न्यासग्रन्थो मनोरमायां द्रष्टव्यः । एतेना'ऽङ्गमप्रधानं बाध्यं, तद्विरुद्धमनङ्गं बाधकम् । एवं च कप्रत्ययाऽपवादत्वादकजिति 'अनङ्गकार्यत्वेने'त्यस्याऽर्थ' इत्यपास्तमिति दिक्[2] ] ।

तदनुगुणानामिति । प्राधान्येन[3] स्वविषय-प्रसिद्ध-सर्वाऽर्थवाचकत्व-समानाऽधिकरण-सर्वनामपदवत्त्वेन बोधकमहासंज्ञया सर्वाऽर्थोपस्थापक-सर्वादीनामनुकरणाऽऽवश्यकत्वेनेतरेषामनुकरणे मानाऽभावः । (तत्र[4] संज्ञायास्तत्त्वाऽभावः स्पष्ट एव । उपसर्जनस्याऽपि न तद्वाचकत्वम्) । नामपदस्वारस्येन प्राधान्येन तदुपस्थापकत्वस्य[5] लाभात् । उपसर्जनं हीतर-

---

१ 'ईदृशार्थस्य संज्ञाप्रवृत्तावनिमित्तत्वाच्च' इति ग. पाठः ।

२ 'वस्तुतस्तु' ( ४२६ पृष्ठे ) इत्यारभ्य 'दिक्' इत्यन्तोऽयं क. कुण्डलितः ख. ग. पाठः ।

३ एतत्स्थाने–'विशेषणतयोपस्थितस्याऽप्यर्थस्य महासंज्ञाकरणद्वारा पृथगुपादानादितराऽनुपसर्जनीभूतप्रसिद्धप्रवृत्तिनिमित्त(क)कार्थबोधकानामनुकरणावश्यकत्वेनेतरेषामनुकरणे मानाऽभावेन, तेषामेव गणेऽनुकरणादित्यर्थः । अत्र च प्रमाणम्' ( ४३० पृष्ठे ) इति ग. पाठः ।

४ अयं पाठः क. नास्ति । ५ 'तदुपस्थापकस्यैव' ख. पाठः ।

विशेषणतयैव स्वाऽर्थोपस्थापकमिति भावः। पूर्वादिसङ्ग्रहाय 'स्वविषये'ति। 'अभिव्यक्ते'ति न्यायेन 'प्रसिद्धे'त्यस्य लाभः। तेन संज्ञाव्यावृत्तिः।[1] अत्र च प्रमाणं 'पाठात्पर्युदासः, संज्ञोपसर्जने च विशेषेऽवतिष्ठेते' इत्यादि भाष्यमेव। 'विशेषे' इत्यस्योपसर्जनांऽशे विशेषणे, अप्रधाने इत्यर्थः[2]। अत एव 'भूतपूर्व आढ्य आढ्यपूर्व'इत्यत्राऽपि न। पूर्वत्वस्याऽऽढ्यविशेषणत्वेनोपसर्जनत्वात्। स्पष्टं चेदं 'न बहुव्रीहा'विति सूत्रे **भाष्यकैयटयोः**।

सर्वादिसूत्रस्याऽयमर्थः–'सर्वाऽऽदीनि, तदन्तानि च प्राधान्येन प्रसिद्धसर्वाऽर्थवाचकत्वसमानाऽधिकरणसर्वनामपदवन्ती'ति[3]। तत्र 'प्राप्ताऽप्राप्तविवेक'न्यायेन सर्वनामपदवत्त्वांऽशे एव विधिः। सर्वाऽर्थवाचकत्वस्य लोकतः सिद्धत्वात्[4]। ( सर्वार्थवाचकत्वं च प्राधान्येन बुद्धिस्थत्वाद्यनुगतीकृताऽनेकधर्मवद्बोधकत्वम्। दिग्देशकालाद्यनेकबोधकत्वात्पूर्वादिष्वपीदमक्षतमेव। सर्वाद्यन्ते त्ववयवनिष्ठसर्वाऽर्थवाचकत्वस्य समुदाये आरोपेण तत्सिद्धिः। तत्फलन्तु 'परमभवकानि'त्यादिसिद्धिः। 'अतिसर्वाये'त्यादौ त्ववयवस्योक्तसर्वार्थवाचकत्वाऽभावान्न समुदाये तदारोप इति न दोषः। येषान्तूक्तसर्वाऽर्थवाचकत्वाऽसम्भवस्तेषामपि तादृशसर्वाऽऽदिसाहचर्यात्संज्ञोपसर्जनभिन्नानामेवाऽनुकरणमिति न दोषः)[5]। एतेना-

---

१ 'संज्ञाव्यावृत्तिः' इत्यन्तः क. पाठः। २ 'इत्यर्थ' इत्यन्तो ग. नास्ति।

३ 'सर्वार्थवाचकत्वविशिष्टसर्वनामपदवन्तीति। वैशिष्ट्यञ्च-सर्वाद्यंशे सामानाधिकरण्येन। तदन्तांशे स्वाश्रयघटितवृत्तितासम्बन्धेन। न तूभयत्रापि सामानाधिकरण्येन'—इति ग. पाठः।

४ इतोऽग्रे—'यद्यपि सर्वनामपदेन योगरूढ्या सर्वादेस्तदन्तस्य च बोधनं, तथापि तदन्तांशे उपस्थितस्य सर्वार्थवाचकत्वरूपयोगार्थो विशेषणीभूतसर्वाद्यंशे एवाऽन्वेति। अत एव 'द्वन्द्वे चे'ति सार्थकम्। एतेन सर्वाद्यन्तस्य 'वर्णाश्रमेतराणामि'त्यादौ सर्वार्थवाचकत्वाऽभावादेवाऽप्राप्तौ 'द्वन्द्वे चे'त्यादीनां वैयर्थ्यमित्यपास्तम्'—इति ग. च. पाठः।

५ क. नास्ति।

ऽन्वर्थसंज्ञाक्षिप्तसर्वाऽर्थवाचकस्य विशेष्यतया, 'सर्वादीनी'त्यस्य तद्विशेषणत्वात्तदन्तविधिर'त्यपास्तम् । एकपदोपस्थाप्ययोरर्थयोः परस्परमुद्देश्यविधेयभावेनाऽन्वयस्याऽव्युत्पन्नत्वात् ।

सन्निवेशादिति । तदनुमानादित्यर्थः । अत्र हेतुः–महासंज्ञाकरणेनेति । महासंज्ञया तेषां तदर्थवत्त्वाऽनुमानेऽतिरिक्ताऽर्थाऽनुकरणे मानाऽभावादिति भावः । अत्रोपसर्जनपदेन कृत्रिमम्, अकृत्रिमं च गृह्यते । महासंज्ञामाश्रित्य भाष्ये वार्त्तिकप्रत्याख्यानात् ।[1]अत एव 'नञ्'-सूत्रे नञ्समासस्य पूर्वपदाऽर्थप्राधान्ये'ऽस'इत्यादावत्वसत्वयोरनापत्तिराकरोक्ता सङ्गच्छते । एतेन 'तदोः सः सावि'ति सूत्रे'ऽनन्त्ययोरि'ति न वक्तव्यम् । एवं वक्ष्यामि 'तदोः सः सौ' । (ततः) 'अदसः' । 'अदसश्च दकारस्य सो भवती'ति । इदमिदानीं किमर्थम् ? । नियमाऽर्थम्–'अदस एव दकारस्य, नान्यस्य दकारस्ये'ति । यदि नियमः क्रियते द्वीयतेरप्रत्ययः, 'द्व' इति प्राप्नोति । 'स्व' इति चेष्यते । 'यथालक्षणमप्रयुक्ते' इति भाष्यात्-कृत्रिमोपसर्जने एव निषेधः । अन्यथा सिद्धान्तेऽप्युपसर्जनत्वादत्वसत्वयोरप्राप्तौ 'इष्यते' इत्युक्तिरसङ्गतैव स्यादि'ति परास्तम्[2] । न्याययुक्ताऽनेकभाष्यविरोधेन च[3]ाऽस्यैकदेश्युक्तित्वात् ।

संज्ञाकार्यमिति । सर्वनामत्वप्रयुक्तं स्मायादिकमित्यर्थः । अन्तर्गणेति । 'अदड् डतरादिभ्यः' 'त्यदादीनामः' 'तदोः सः सावि'त्यादिकमित्यर्थः[4] ।

---

1 'अत एव' इत्यारभ्य 'सङ्गच्छते' इत्यन्तः क. ख. पाठः ।

2 एतत्स्थाने—'सूत्रार्थप्रतिपिपादयिषाप्रवृत्तेन पूर्वभाष्येणाऽस्यैकदेश्युक्तित्वबोधनात् । सर्वनामसंज्ञासूत्रादा'वतिसर्वाय''अतित'दित्याद्युदाहरणपरभाष्याच्च' इति ग. पाठः ।

3 चकारः क्वचिन्नास्ति ।

4 इतोऽग्रे—'अतिसर्वायेति । न च सर्वनामसंज्ञाविषयेऽकृतव्यूहपरिभाषाया

तृतीयासमासे । अयमपि सर्वाद्यन्ततृतीयासमासस्यैव निषेधो, नाऽवयवानाम् । सर्वाऽऽदिसूत्रोक्तयुक्तेः । ननु 'तृतीयये'त्येव सूत्रमस्तु । ( पूर्वोत्तरसाहचर्यात्समास एव ग्रहीष्यते )। एकदेशाऽनुवृत्त्या 'दिक्समासे' इत्यत्रत्यं 'समास'ग्रहणमनुवर्त्त्यं वा । एवं च 'समासे' इति व्यर्थमिति चेत् । सत्यम् । 'समासे' इति योगविभागार्थं तत् । तत्र च सामर्थ्यात्समासाऽर्थकं वाक्यं गृह्यते । तच्च नाऽलौकिकम् । अदन्ते काऽकचोरविशेषात् । समासस्वरेण शिट्स्वरस्य बाधाच्च । हलन्ते तु नैतत्सूत्रप्रवृत्तिरित्यनुपपदमेव वक्ष्यते । इत्यभिप्रेत्याह—तृतीयासमासार्थेति । 'यत्र क्वापि स्थितस्य सर्वादेः संज्ञा ने'त्यर्थः । तृतीयासमासश्चाऽत्र 'पूर्वसदृशे'ति पूर्वघटितवाक्यविहित एव गृह्यते । यदन्तत्वमादाय स[3]र्वनामसंज्ञाप्राप्तिस्तमुच्चार्य विहितत्वेन, तृतीयापदमुच्चार्य च विहितत्वेन प्रतिपदोक्तत्वात् । वाक्यमपि तत्सम्बन्ध्येव । प्रत्यासत्तिन्यायात् । ध्वनितं चेदमत्रैव भाष्ये ।

तेन 'करोति'द्वारा सामर्थ्ये 'मासेन कृतः पूर्वो मासपूर्वस्तस्मै 'मासपूर्वस्मै' इति समासे, तत्सम्बन्धिनि 'मासकृताय पूर्वस्मै' इति वाक्ये च निषेधो न । 'पूर्वसदृशे'ति सूत्रन्तु हेत्वादितृतीयायां परस्पराऽन्वये चारितार्थ्येन 'करोति'द्वारके सामर्थ्ये न प्रवर्त्तते । 'तृतीया तत्कृते'ति तु 'कृत'-ग्रहणसामर्थ्या'त्करोति'द्वारा सामर्थ्ये प्रवर्त्तते'इति समासे निरूपयिष्यामः ।

---

अप्रवृत्तेः पूर्वमुक्तत्वादत्रापि पूर्वं सर्वशब्दे सर्वनामसंज्ञायाः प्रवृत्तेस्तदन्तविधिना स्मायादिकं दुर्वारमिति वाच्यम् । 'सर्वनाम्नो विहितस्ये'ति विहितविशेषणाश्रयणात् । समुदायस्य तु न सर्वनामत्वम् । अनुपसर्जनसर्वार्थवाचकान्तत्वाऽभावात् । एवञ्च कार्याऽभावादपि न पूर्वं संज्ञायाः प्रवृत्तिरित्याहुः' इति ग. पाठः । क. कुण्डलितः ।

१ क. कुण्डलितो ग. पाठः । २ 'नेत्यर्थः' इत्यन्तोऽयं क. पाठः ।

३ 'यस्य सर्वनामसंज्ञाप्राप्तिः' ग. पाठः ।

('सर्वकेण सदृश'इत्यत्राऽपि न। [1] येस्य सर्वनामसंज्ञा तमुच्चार्योऽविहितत्वात् [2]। समासस्यैवाऽनेन निषेधेनाऽस्य च समासस्य सर्वाद्यन्तत्वाऽभावेन तत्प्राप्त्यभावाच्च [3]। तदर्थवाक्येऽपि न। प्रत्यासत्त्या यत्र समासे निषेध-स्तदर्थवाक्ये एव प्रवृत्त्यङ्गीकारात्।

एतेन 'कर्तृकरणे' इति समासे 'त्वयका कृतमि'त्यत्र नेति प्रतिपदोक्त-समासग्रहणफलं वदन्तः परास्ताः [4])। एवं 'मासाऽवराये'त्यप्युदाहरणं बोध्यम्। तत्राऽपि 'अवरस्योपसङ्ख्यानमि'ति प्रतिपदोक्तः समास इति दिक्।

([5]द्वन्द्वे च। अयं निषेध इतरेतरयोगे एव, न समाहारे। तत्र समा-हारस्य विशेष्यत्वेन उपसर्जनत्वादेवाऽप्राप्तेः। अत एव वृक्षश्च इतरश्चेति-विग्रहे 'वृक्षेतरमि'त्यादावद्ड् नेत्याहुः)।

समुदायस्येति। अत्र यद्वक्तव्यं तत्सर्वादिसूत्रे एवोक्तम्।

सुट्प्रसङ्ग इति। 'वर्णाश्रमेतराणामि'त्यादाविति भावः। न च निषेधसामर्थ्यम्। अनाङ्-त्र-तसिलादिष्व्यावृत्त्या चारितार्थ्यात्।

जसाधारमिति। जस इः–जसिरतस्मिन्नित्यर्थे सौत्रः सप्तम्या लुगि-त्यर्थ इति भावः। यद्वा 'जसी'त्याधारसप्तमी। यद्यपि शीभावेन जस्-अपहृतस्तथाऽपि औपचारिकमाधारत्वमिति भावः। नाऽकजिति। समुदायनिष्ठकुत्साबोधकाऽकज्नेत्यर्थः। ([6]अवयवस्य तु सर्वनामत्वेऽप्येका-र्थीभूतस्य कुत्साऽऽदिभिर्निष्कृष्य सम्बन्धो वक्तुमशक्य इति भावः।

१ क. कुण्डलितः प्रायः ख. ग. च. पाठः।

२ 'अविहितत्वात्' इत्यन्तः क. नास्ति। ख. ग. च. पाठः।

३ चकारः क. नास्ति।

४ इतोऽग्रे—'न च 'पूर्वः समासे' इत्येव सूत्रमस्त्विति वाच्यम्। 'मासावराये'त्यादौ निषेधाऽनापत्तेः। तत्र हि–'अवरस्योपसंख्यानमि'ति प्रतिपदोक्तः समास इति दिक्'—इति ग. च. पाठः।

५. ग. पाठः।     ६ ख. ग. च. पाठः, क. नास्ति।

यदा तु वर्णश्चाऽऽश्रमश्चेतरकश्चेति द्वन्द्वः क्रियते, तदा 'वर्णाश्रमेतरके' 'वर्णाश्रमेतरका' इति भवत्येव )।

**प्रथम**। अत्र सूत्रे 'ने'ति न सम्बध्यते । प्रथमादिषु प्राप्त्यभावात्[1]।

'जसी'त्यर्थोऽधिकाराज्जसाधारे शीभावे एवाऽयं विकल्प इत्याशयेनाह—**जसः कार्ये प्रतीति**। [2]**तयः प्रत्यय इति**। 'सङ्ख्याया अवयवे तयबि'ति। **तदन्ता इति**। अत्र हेतुः प्रागुक्त एव। **द्वितीय-तृतीयशब्दौ** 'द्वेस्तीयः' 'त्रेः संप्रसारणं चे'ति साधू। इदं च वार्त्तिकम् अन्प्रत्ययान्ते न प्रवर्त्तते। तीयशब्दस्य लाक्षणिकत्वात्। तेन 'द्वितीयाय भागाये'त्येवाद्युदात्तस्य। अनभावे तु 'स्मै' भवत्येव। अयं च विकल्पो 'विभाषा जसो'तिसाहचर्यात्तत्रैवोपसङ्ख्यातत्वाच्च ङित्प्रत्ययकार्य एव, न त्वकचीत्याहुः।

**जराया( ज )**। 'अष्टन आ' इत्यतो 'विभक्ता'वित्यनुवृत्तस्य 'अचि रऋत' इत्यतोऽनुवृत्तेनाऽचीत्यनेन विशेषणात्तदादिविधिरित्याशयेनाऽऽह—**अजादाविति**। तेन 'जराभ्याम्' 'जराया इदं जारमि'त्यादौ न। न च 'जरसा'वित्यादौ जरसादेशाऽप्रसङ्गः। विभक्तेरच्रूपत्वेनाऽजादित्वाऽभावादिति वाच्यम्[3]। व्यपदेशिवद्भावेन सिद्धेः। एवं चाऽऽद्यन्तवत्सूत्रं न कार्यम्। इदमेव ध्वनयितुमिह तदनुपन्यासः। न च जराया असुङेवाऽस्तु, किमनेन जरसादेशविधानेनेति वाच्यम्। प्रतिपत्तिलाघवाऽनुरोधेनाऽर्द्धमात्रालाघवेऽनभिनिवेशात्[4]। (जराशब्दात्तत्करोतीतिण्यन्ताट्टिलोपे, क्विपि,

१ इतोऽग्रे—'नेमशब्दे नित्यं प्राप्ते, इतरेष्वप्राप्ते उभयत्रविभाषेयम्'—इति ग. पाठः। २ 'तयप्' ख. पाठः।

३ इतोऽग्रे—'येन विधिरि'त्यत्र हि स्वमिति वर्त्तते। तच्च षष्ठ्या विपरिणम्यते। एवञ्च तदपवादभूतायां 'यस्मिन्विधिरि'त्यस्यां तत्सूत्रपठितायां तदनुवृत्त्यैव सिद्धेः। व्यपदेशिवद्भावेन सिद्धेश्च' इति ग. पाठः।

४ 'लाघवेऽनभिनिविष्टं सूत्रकृतेत्यन्ये' ग. पाठः।

५ ग. च. पाठः। क. कुण्डलितः।

णिलोपे, एकदेशविकृतन्यायेन जराशब्दत्वाद्दोषापत्तेः । णिलोपस्य स्थानिवत्त्वन्तु न । 'क्वौ लुप्तमि'ति निषेधात् । अत्र चाऽस्याश्रयणे, 'अभिव्यक्तपदार्था ये' इत्यस्याऽनाश्रयणे च जरसादेशकरणमेव प्रमाणमित्याहुः)।

**पदाङ्गाधिकारे** इति । पदमङ्गं च विशेष्यम् । विशेषणेन च तदन्तविधिरिति भावः । ( अत्र[1] च 'युजेरसमासे' इत्यसमासग्रहणं ज्ञापकम् ) । 'येन विधिरि'त्यस्याऽयं प्रपञ्च' इति 'येन विधिरि'त्यत्रैव भाष्ये स्पष्टम्।

अत एव 'तदुत्तरपदस्ये'ति पाठेऽपि उत्तरपदशब्दो न रूढः, किन्तु यौगिकः । तेन 'परमाऽतिमहान्' 'बहुजरसा'वित्यादिसिद्धिरित्याहुः ।

'अत्र 'पद'शब्देनोत्तरपदाऽधिकारो गृह्यते । तत्रैव भाष्ये उदाहरणादि'ति कैयटः । 'केवलपदाऽधिकारोऽपी'त्यन्ये । इदमपि तत्सूत्रशेषे भाष्ये ध्वनितं, कैयटेन च स्पष्टमुक्तम् ।

नन्वनेकाल्त्वादुपसर्गविशिष्टस्य जरसादेशः स्यादत आह–**निर्दिश्यमानस्येति** । 'षष्ठी स्थानेयोगे'ति सूत्रमावर्त्तते । द्वितीयस्याऽयमर्थः—'षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते, न प्रतीयमानमि'ति । तेनेदं सिद्धमिति भावः ।

नन्वयं 'जर'शब्दो, न 'जरा'शब्दोऽत आह—**एकदेशेति** । **अनन्यत्वादिति** । छिन्नपुच्छे शुनि श्वत्ववच्छिन्नैकदेशे पुच्छे पुच्छत्ववच्चाऽत्राऽपि

१ ग. च. पाठः ।

२ इतोऽग्रे–'न च 'येन विधिरि'तिशास्त्रबलात्तदन्तस्य वृत्त्योपस्थितत्वेपि 'जरारूपाऽङ्गस्य स्थाने' इत्यर्थमुपजीव्यैव तस्य प्रवृत्त्या, तदविरोधेनावयवद्वारा निर्जरादीनां स्थानित्वकल्पनेनापि तदुपपत्त्याऽधिकस्य स्थानित्वे मानाऽभाव इति न्यायसिद्धमिदमिति वाच्यम् । 'णचः स्त्रियामञि'त्यादौ 'णजन्तात्प्रातिपादिकादि'त्यर्थमुपजीव्यैव 'णजन्तान्तादि'त्यर्थस्य प्रवृत्त्या, तत्राप्यवयवद्वारैव णजन्तान्तस्य प्रकृतित्वापत्तौ, णजन्तस्यापि प्रकृतित्वात् 'व्यवक्रोशी'त्यस्याऽप्यापत्तेः' इति ग. च. पाठः ।

जराशब्दत्वमिति भावः । 'स्थानिवत्सूत्रन्तु यत्राऽर्द्धं विकृतं, ततोऽप्यधिकं, सम्पूर्णं वा, तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाऽभावेन तत्त्वाऽप्रतीतावारोपेण कार्यसिद्धयर्थम्, विकृताऽवयवत्वप्रतीत्यर्थं च । प्रकृते[1] त्विदं स्थानिवत्त्वोपलक्षणम् । ( इदमेव ध्वनयितुमनन्यवत्त्वादिति वतिघटितं नोक्तम् । वतिघटितपाठेऽपि अन्यवन्नेत्यर्थः । तत्सादृश्यनिषेधे तत्त्वनिषेधस्त्वर्थात्सिद्ध इति बोध्यम् ) । नन्वेकदेशविकृतन्यायेन जराशब्दत्वेऽपि, जरशब्दस्य निर्दिश्यमानत्वाऽभावात्कथमादेश इति चेन्न । स्थानिबुद्धयैव कार्यप्रवृत्त्या[2] निर्दिश्यमानस्येतिपरिभाषाबाधाऽभावात् । 'येन विधिस्तदन्तस्ये'त्यस्य तु संज्ञासूत्रत्वात्सूत्रस्थजराशब्दो जराशब्दाऽन्तपर'[3] इत्यर्थपरत्वम् । एवं च तदन्ते आदेशप्रवृत्तौ परिभाषाविरोधः स्पष्ट एव[4] ।

एवं 'यदागमा' इति बोधितस्याऽप्यादेशेन निवृत्त्यभावः । एतन्न्यायबलात् । अत एव 'हुझल्भ्य'इति धेः 'रुदिही'त्यादौ 'निर्दिश्यमानस्ये'ति परिभाषया भाष्यकारैर्निवारणं कृतम्[5] । न चा'ऽस्य च्वा'वित्यादौ दीर्घादीनामादेशाऽनापत्तिः, तेषां निर्दिश्यमानत्वाऽभावादिति वाच्यम् । जातिपक्षे

---

१ 'प्रकृते त्विदं स्थानिवत्त्वोपलक्षणम्' इति क. पाठः, ख. ग. च. नास्ति ।

२ ग. पाठः ।

३ 'परोऽपीत्यर्थपरत्वम्' ख. ग. च. पाठः ।

४ इतोऽग्रे–'श्रूयमाणवर्णातिरिक्तवर्णस्थानित्वबोधकशास्त्रसहकृतलक्ष्यसंस्कारकवाक्ये स्थानित्वेन बोधितस्य श्रूयमाणातिरिक्तवर्णस्यादेशेन निवृत्त्यभाव' इत्यर्थस्य तेन बोधनात् । अत एव 'यदागमा' इतिबोधितवर्णस्याप्यादेशेन निवृत्त्यभावः । अत एव 'पचेयुरि'त्यादौ न पररूपम्' इति ग. पाठः ।

५ इतोऽग्रे–'न च 'स्वाङ्गमव्यवधायकमि'तिन्यायेन इकाररहितहेरादेशो दुर्वारः । तन्न्याये मानाऽभावात् । आगमविशिष्टस्य तद्ग्रहणेन ग्रहणस्यैव तद्बीजत्वाच्च' इति ग. च. पाठः ।

दोषाऽभावात्। किञ्च[2] 'न भूसुधियोरि'तिनिषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनान्न दोषः।

अनया च सह स्वस्वनिमित्तसन्निधापितानाम् 'अलोन्त्यस्ये'त्यादीनां समावेश एव, न बाध्यबाधकभावः, विरोधाऽभावात्। नाऽप्यङ्गाऽङ्गिभावः, उभयोरपि परार्थत्वेन, तदयोगात्। यत्तु 'आदेः परस्याऽलोन्त्यस्येत्येतावेतद्बाधकावि'ति। तन्न। 'उदस्था'त्सूत्रे भाष्यकारैरस्याः सञ्चारितत्वात्। बाधकत्वे मानाऽभावाच्च[3]। नाऽप्येतयोरियं बाधिका। एतयोर्निर्विषयत्वप्रसङ्गादिति 'विंशती'तिसूत्रे कैयटः।

इयं चाऽवयवषष्ठीविषयेऽपि प्रवर्त्तते। अत एव 'तदोः सः सा'वितिसत्वम् 'अतिस्य' इत्यत्रोपसर्गतकारस्य नेति स्पष्टं 'पादः पदि'ति सूत्रे भाष्ये। अनेकाल्सूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते इति दिक्।

'निर्जरसे'त्यादौ 'स्वादिष्वि'ति पदत्वे रुत्वं न, भत्वेन पदत्वस्य

१ इतोऽग्रे—'किञ्च रीङृत'इत्यादौ रीङादीनां ङित्करणेनाऽस्या अनित्यतया क्वचिद्वर्णग्रहणेऽप्रवृत्तेः। अत एव 'गम्लृ'शब्दात्क्यचि 'गम्रीयते' इत्यादौ रीङादेशसिद्धिः। एतेनेगागमेन यणा रूपसिद्धौ रीङादेशविधानं व्यर्थमि'त्यपास्तम्। अत एव 'एरनेकाच' इति यण् दीर्घान्ते प्रध्यावुन्न्यावित्यादावपि सिध्यति। यण् तु जिज्यतुर्विव्यतुरित्यादौ चरितार्थः। अत एव हयवरट्सूत्रे'ऽयोगवाहानामुपदेशेऽकोऽन्त्यविधिः प्रयोजनं, वृक्षस्तत्र, नैतदस्ति प्रयोजनम्। निर्दिश्यमानस्येत्येव सिद्धमि'त्युक्तं सङ्गच्छते' इति ग. च. पाठः। 'रिङ्शयगित्यादौ'। 'रिङादीनां'। 'गम्रियात्'। 'रिङादेश' इति तु च. पाठभेदः।

२ 'किञ्च' इत्यारभ्य 'न दोषः' इत्यन्तोऽयं पाठो ग. च. नास्ति।

३ इतोऽग्रे—'निर्दिष्टस्य, तदवयवस्य वा, निर्दिष्टावयवोऽनिर्दिष्टाऽवयवो वेत्याकाङ्क्षासत्त्वेन समावेशस्यैवोचितत्वाच्च' इति ग. च. पाठः।

४ 'नापि'इत्यारभ्य 'कैयटः' इत्यन्तोऽयं पाठो ग. च. नास्ति।

५ 'गृह्यते' इत्यतोऽग्रे—'अविरोधे सम्भवति विरोधस्याऽन्याय्यत्वात्'—इति ग. च. पाठः।

६ 'निर्जरसा' इत्यारभ्य 'इति बोध्यम्' इत्यन्तः क. पाठः। ख. ग. च. नास्ति।

बाधात्। किञ्च यस्मात्स्वादिविधिस्तस्य स्वादौ पदत्वम्। न चाऽस्मात् स्वादिविधिः। स्थानिवत्त्वन्तु न। निर्जरस्यादेशाऽभावात्। जर-शब्दस्यैवाऽयमादेशः। तस्याऽप्यर्थवत्त्वेनाऽर्थवत आदेश इत्येतत्परेण 'सर्वे सर्वपदादेशा' इत्यनेन न तस्यादेशं प्रत्याशा[1]। 'एकदेशविकृत-मि'त्यादि तु 'स्थानिवदि'त्येतत्समानार्थमित्यभिमानेन तयोरत्राऽलेख इति बोध्यम्।

पक्षे इति। जरसादेशाऽभावपक्षे इत्यर्थः। पूर्वविप्रतिषेधेनेति। 'विप्रतिषेधे परमि'त्यत्र परशब्दस्येष्टवाचित्वादिति भावः।

तथा भिसीति। एसि वक्तव्ये ऐसकरणं सन्निपातपरिभाषाऽनि-त्यत्वे मूलमिति तद्भावः। एवमिनाऽतोरिकारदीर्घोच्चारणमपि बोध्यम्। तदनुसारिभिरिति। एतत्सूत्रोपात्तत्वात्पूर्वविप्रतिषेधवाक्ये स्यादेशोऽपि ग्रहीतुमुचित इति तद्भावः।

निर्जरस्येत्येवेति। पूर्वविप्रतिषेधेन स्यादेशेऽनजादित्वाज्जरसादेशा-ऽभाव इति भावः।

भाष्येति। तथा च प्रकृतसूत्रे एव भगवान् भाष्यकारोऽतिजरैरिति भवितव्यं, सन्निपातपरिभाषये'ति। पूर्वविप्रतिषेधस्य निर्मूलत्वाच्च। एसैसोरुच्चारणे लाघवाऽभावात्। 'नद्यैरि'त्याद्यर्थं 'बहुलं छन्दसी'त्यत्रैस आवश्यकत्वाच्च।

नन्विनादेशे इकारोच्चारणमेव मूलम्। अन्यथा नादेशं विधाय 'आङि चाप' इत्यत्र 'आङि चे'ति योगविभागेनाऽत इत्यनुवृत्त्यैत्वविधाने-नैव सिद्धौ किं तेन?। 'अनेने'त्यादि तु 'अ नाप्यक' इति नकारप्रश्लेषेण नकारे परतोऽप्यन्विधाना'द्धलि लोप' इत्यस्य बाधेन सिद्धम्। सूत्रे च 'अ' इति नान्तस्य नपुंसकनिर्देश इति चेन्न। परत्वान्नाऽऽदेशात्पूर्वमेत्वाऽऽपत्तौ, नाऽऽदेशविधायकस्य वैयर्थ्यापत्तेः। तत्सामर्थ्यात्पूर्वविप्रतिषेधाऽऽश्रणे विपरीतं गौरवम्। भाष्ये इकारस्य प्रत्याख्यानाच्च। प्रत्याख्यानेन चेदमेव

---

१ 'आदेशप्रत्याशा' इति क. ख. पाठः।

ध्वन्यते–'इकारस्य फलाऽन्तरकल्पने नाऽभिनिवेष्टव्यम्, किन्त्वेतत्क्लेशपरिहारार्थ एव 'इकार' इति । आदेशे तु 'अदि'तिच्छेद एव सूत्रतात्पर्यम् । भाष्याऽनुरोधात् । वृत्तिकारास्तु पररूपवारणाय सामर्थ्याऽनुसरणक्लेशमसहमाना 'आदि'तिच्छेदमाहुः । एतेनाऽप्यैस् व्याख्यात इति दिक् ।

[1]परे तु 'विभक्त्यादेशेभ्यः परत्वाज्जरसि'त्यसङ्गतम्[2] । विभक्त्यादेशा[3]नामन्तरङ्गत्वात् । अधिकविभक्तित्वज्ञानसाऽपेक्षत्वेन जरसादेशस्य बहिरङ्गत्वात् । इनादीनां प्रत्ययविशेषाऽपेक्षत्वामित्यप्यस्य प्रकृतिविशेषाऽपेक्षत्वेन समम् । 'पूर्वस्थानिकत्वेन जरसोऽन्तरङ्गत्वमि'त्यपि न । पूर्वनिमित्तकत्वेन विभक्त्या[4]देशानामपि तत्त्वात् । '[5]स्थान्यपेक्षया पूर्वनिमित्तमन्त-

---

१ 'अपरे तु' ख. ग. पाठः ।

२ इतोऽग्रे—'जरसादेशस्य विभक्तिज्ञानसापेक्षत्वेन बहिरङ्गतया, इनादीनां च तन्निरपेक्षत्वेनान्तरङ्गत्वात् । न चेनादीनां प्रत्ययविशेषापेक्षत्वेन बहिरङ्गत्वम् । 'विशेषाऽपेक्षं बहिरङ्गमि'ति न वचनं, किन्तु विशेषधर्मापेक्षया सामान्यधर्मस्य प्रथमोपस्थितत्वेन तन्निमित्तकस्य पूर्वं प्रवृत्तिरिति हि तद्बीजम्, तन्निमित्तसमुदायापेक्षयाऽधिकविशेषधर्मनिमित्तकत्वं वा । एवञ्च यद्विशेषधर्मस्य सामान्यधर्मज्ञानं विना न ज्ञानं, तादृशविशेषापेक्षस्याऽस्तु बहिरङ्गत्वम् । यथा 'रुदश्च पञ्चभ्य' इतीटाऽपेक्षितसार्वधातुकत्वज्ञानं धातुविहितप्रत्ययत्वज्ञानसापेक्षमिति, पूर्वं तज्ज्ञानमावश्यकमिति, यासुटः सार्वधातुकत्वज्ञाननिरपेक्षप्रवृत्त्याऽन्तरङ्गत्वं युक्तम् । नचैवं प्रकृते । विभक्तित्वज्ञानोत्तरप्रवृत्तिकजरसः प्रागेव 'टा' इत्याद्याकारकस्वरूपज्ञानमात्रापेक्षेनादीनां प्रवृत्तेस्तेषामेवान्तरङ्गत्वात् । एतेन 'पूर्वं पूर्वमन्तरङ्गमि'ति सर्वतो जरसादेशोऽन्तरङ्ग' इत्यपास्तम् । युगपत्प्राप्तावेव तदन्तरङ्गत्वप्रवृत्तेः । अत एव 'जराया' इति सूत्रेअजरांसीत्यत्र'—इति ग. पाठः ।

३ 'आदेशानामन्तरङ्गत्वात्' इत्येव ख. पाठः ।

४ 'निमित्तकत्वेन आदेशानाम्' ख. पाठः । ५ 'केचित्' इत्यन्तोऽयं क. पाठः ।

रङ्गं, परनिमित्तकञ्च बहिरङ्गमि'त्यपि केचित् । अत एव 'जराया'इतिसूत्रे 'अजरांसी'त्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरसि'ति भाष्योक्तं सङ्गच्छते। अन्यथा त्वद्रीत्या शिभावात्पूर्वमेव जरसः प्रवृत्तौ, तदा च सर्वनामस्थानत्वाऽभावान्नुमो[1] विप्रतिषेधविचाराऽसङ्गतिः स्पष्टैव। मम त्वन्तरङ्गत्वाज्जरसः पूर्वं शिभावे प्रवृत्ते, तत्सङ्गतिः स्पष्टैव[2] । अत एव 'टाङसी'ति सूत्रे कैयटेनोक्तं-'भाष्यकारस्तु सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नतिजरेणाऽतिजरादिति भाव्यं, न त्वतिजरसिनाऽतिजरसादितीति मत्वा गौरवमुद्भावितवानि'ति। भवद्रीत्या पूर्वं जरसादेशे, इनाद्यप्राप्त्या, तदभावपक्षे च तस्याऽप्राप्त्या, 'सन्निपातपरिभाषयाऽनभ्युपयन्नि'त्यसङ्गतिः स्पष्टैव। [3]असिद्धविषयेऽपि तत्परिभाषाप्रवृत्तिः प्रागुपपादिता, उपपाद-

१ 'नुमा विप्रतिषेधविचारस्य नाऽसङ्गतिः' ग. पाठः ।

२ इतोऽग्रे—'न च 'शि सर्वनामस्थानमि'त्यत्र शिपदस्य लक्षणया शिस्थानिपरत्वेन जश्शसोरेव सर्वनामस्थानत्वमिति तद्भाष्याशयः । लक्षणायां मानाऽभावात् । मुख्यार्थे बाधाऽभावाच्च'—इति ग. पाठः ।

३ 'असिद्धविषयेऽपी'त्यादिमूलस्थ–क. पाठस्थाने—'न च जरसादेशस्य बहिरङ्गतयाऽसिद्धत्वेन तद्विषये कथं संनिपातपरिभाषाप्रवृत्तिः ? । 'असिद्धस्यापि तद्विघातकस्याऽनया निवृत्तिरि'त्यर्थस्य क्रुन्मेजन्तसूत्रभाष्यसंमतिपूर्वकमष्टशब्दे उपपादयिष्यमाणत्वात् । एवञ्च टा-भिस्-ङे-ङसि-ङस्-आम्सु विभक्तिनिमित्तककार्ये कृते जरस् न भवत्येव । क्वचित्संनिपातपरिभाषाविरोधात्, क्वचिदजादित्वविघातात् । एवं जराशब्दे स्त्रीलिङ्गे औ-ङे-ङस्-आम्-ङिषु न । 'औङ आपः' 'याडापः' 'ह्रस्वनद्याप' इत्येतेषु कृतेषु क्वचित्संनिपातपरिभाषाविरोधात्, क्वचिदजादित्वविघातात् । टौसोस्तु 'आङि चाप' इत्येत्वे कृतेऽपि स्थानिवद्भावेन भवत्येव जरस् । नपुंसकनिर्जरशब्दे औ-जस्-शस्-ओस्-ङिष्वेव जरस्, नान्यत्र । यद्यपि टा-ङे-ङसि-ङस्-आम्सु पुंलिङ्गवत्, सोरमि च संनिपातपरिभाषया तदभावेऽपि द्विताथैकवचने तदभावे न मानं, तथापि तस्याऽप्यन्तरङ्गत्वादतोऽमित्यमि, संनिपात-

यिष्यते च । नपुंसकद्वितीयैकवचनेऽप्यन्तरङ्गत्वादतोऽमित्यमि, संनिपात-परिभाषया जरसभावः । न च तत्र नाऽकारान्तसन्निपातकृतमेवाऽजादित्वं, किन्तु तदभावेऽपि । एषा तु सन्निपातलक्षणविधिं विना न यस्य प्रवृत्ति-योग्यता, तत्रैवेति भवत्येवाऽत्र जरसि'ति युक्तम् । मानाऽभावात् । 'टाङसी'तिसूत्रस्थेनाऽतिजरेणेत्येतद्विषयकैयटेन विरोधाच्च ।

( एतेन 'परत्वान्नित्यत्वाद्वाऽम्भावं बाधित्वा जरसि'ति परास्तम् । अत एव 'जराया' इति सूत्रे 'इष्टमेवैतत्संगृहीतम् 'अतिजरम्' अतिजरै'-रिति प्रथमा द्वितीयासाधारण्येनैवोक्तम् ) । एवं च स्त्रियां जरसादेशे 'याडाप' इत्यादीनामाकारप्रश्लेषेण वारणं विफलमेव । ( तेषां परत्वात् ) । अतिखट्वशब्दे-'अतिखट्वौ','अतिखट्वेन', 'अतिखट्वाय', 'अतिखट्वे' इत्यादौ 'औङ आपः' 'आङि चापः' 'याडापः' 'ङेराम्नद्याम्नीभ्यः'त्येतेषां वारणाय तु प्रश्लेष आवश्यक एव ।

यद्यप्यनया रीत्या तिस्रादेशाऽपेक्षया त्रयाऽऽदेशस्याऽन्तरङ्गत्वं, तथाऽपि 'न तिसृचतसृ' इति ज्ञापकादन्तरङ्गत्वस्य क्वचिदनाश्रयणा-त्परत्वेनैव व्यवस्था । एवमेव नुमनुटोर्विप्रतिषेधस्याऽप्युपपत्तिरित्याहुः ।

---

परिभाषया तद्प्राप्तिः'–इति क. पाठस्यैव प्रपञ्चस्वरूपो ग. पाठः ।

१ 'संनिपातपरिभाषा तु' ग. पाठः ।

२ 'सूत्रस्थाऽतिजरेणेत्येव रूपमिति प्रागुक्तकैयटविरोधाच्च' ग. पाठः ।

३ क. कुण्डलितः, ख. ग. पाठः ।

४ 'एवं च' इत्यारभ्य 'विफलमेव' इत्यन्तोऽयं पाठो ग. नास्ति ।

५ लघुशब्देन्दुशेखरस्थोऽयं पाठः ।

६ एतत्स्थाने—'अनङ्कार्य-नसादीनां तेभ्योऽन्तरङ्गत्वेन, नसादिषु कृतेषु, 'याडाप' इत्यादीनां वारणाय तु प्रश्लेष आवश्यक एव । 'नसादयस्त्वङ्ग-संज्ञानपेक्षत्वेनौङ आप इत्यादिप्रवृत्तेः प्रागेव भवन्ति । तेषु कृतेषु स्थानिवद्भावेनाऽऽबन्तत्वमादाय प्राप्ता अपि ते विभय आकारप्रश्लेषाच्च

पद्दन्नो। अत्र शस्प्रभृतयो निमित्ततयोपात्तास्ते स्वप्रकृतिभूतान् पदादयश्च स्वाऽर्थबोधनसमर्थान्, स्वमदृशवर्णवतश्च, स्थानिन आक्षिपन्तीत्याह—पाद्-दन्तेति। (एवञ्चाऽऽक्षिप्तस्थानिनामेव 'शस्प्रभृतिष्वि'ति-विशेषणमिति भावः)। 'अनुदात्तस्य चर्दुपधस्ये'त्यतोऽन्यतरस्यामित्यनुवर्त्तत इत्याशयेनाऽऽह–शसादौ वेति। यद्यपि 'वा'ग्रहणं नाऽनुवर्त्तते, लोके शसादौ पादादीनां प्रयोगोऽसाधुरेव, अत एव 'ये च तद्धिते' इति-सूत्रस्थ–'वा केशेष्वि'ति वार्त्तिके 'वा'ग्रहणं चरितार्थम्। (मण्डूकानुवृत्तौ मानाऽभावाच्च। भाष्याऽनुक्तत्वाच्च)। छन्दसि सर्वविधीनां वैकल्पिकत्वेन वेदे पादादीन् साधयता कैयटेन, हरिणा च तदनुवृत्त्यभावस्यैव ध्वनितत्वादिति बहवः, तथाऽपि 'तुल्याऽऽस्य'सूत्राऽऽदिभाष्ये 'आस्ये'-'पादेनोपहतं''मासेन पूर्वाये'त्यादिप्रयोगदर्शनेन, 'हृदयस्य प्रिय' इत्यादिसौत्रप्रयोगेण चाऽस्य वैकल्पिकत्वमावश्यकम्। कैयटादयश्चिन्त्या एव। वार्त्तिके 'वा'ग्रहणं त्वस्य नित्यत्वबोधकमिति भावः।

नन्वत्र 'च्छन्दसी'त्यनुवर्त्तते' इति प्राञ्चः, तत्कथमस्याऽत्रोपन्यास इति चेत्। अत्राऽऽहुः—'छन्दसी'ति नाऽनुवर्त्तते। भाष्येऽनुक्तेः।

---

भवन्तीति कौमुद्यामेव स्त्रीलिङ्गे स्पष्टम्। न चैवं 'तिसृणामि'त्यादावन्तरङ्गत्वान्नयादेशापत्तिः, तिस्रादेशस्य विभक्तिनिमित्तकत्वेन बहिरङ्गत्वादिति वाच्यम्। नुम्नुटोः पूर्वविप्रतिषेधपरवार्त्तिकेनेदृशान्तरङ्गत्वस्य क्वचिदनाश्रयणपूर्वकं 'विप्रतिषेधे परमि'त्यस्य प्रवृत्तेर्ज्ञापनेनाऽदोषादिति मात्सर्यमुत्सार्य सुधियो विभावयन्त्विति प्राहुः।' इति क. कुण्डलितः ख. ग. च. पाठः।

१ ग. च. पाठः। २ ग. च. पाठः।

३ 'व्यवस्थितविभाषात्वबोधकम्' इति क. कुण्डलितः ख. ग. पाठः।

४ एतत्स्थाने–'ये च तद्धिते' इति सूत्रे 'छन्दस्यतद्धितेऽजादौ शीर्षभावो वक्तव्य' इत्यत्र च्छन्दोग्रहणेन 'शीर्षंश्छन्दसी'त्यत्र 'छन्दसी'त्यस्य स्वरितत्वाऽभावबोधनात्' इति ख. ग. पाठः।

अत एव 'मासश्छन्दसी'त्यत्र 'च्छन्दो'ग्रहणं चरितार्थम् । दृश्यन्ते च लोकेऽपि बहुशः प्रयोगा इति दिक् ।

निशाशब्दस्य निश्प्रकृतिकत्वेनाऽऽपो वैकल्पिकत्वेन च 'वाक्''वाचे'-त्युभयवन्निश् निशयोरुभयोर्यद्यपि सूत्रं विनापि सिद्धिस्तथाऽपि सुटि हलन्तस्याऽसाधुत्वबोधनायाऽत्र ग्रहणम् । प्रामादिकमेवेति । 'आस्नो वृकस्य चिद्वर्त्तिकामभीके' 'हव्या जुह्वान आसनी'त्यादौ मुखादित्या-द्यर्थस्य वेदभाष्ये उक्तत्वादिति भावः । प्रत्याहार इति । औट-ष्टकारेणेति भावः । 'टा'टकारेण तु न । व्याख्यानात् । औटष्टस्याऽनन्या-ऽर्थत्वाच्च । 'टा'टकारस्तु 'टाङसी'त्यादौ विशेषणाऽर्थः । सुडागमस्य तु न ग्रहणम् । प्रत्ययाऽप्रत्यययोः प्रत्ययस्यैव ग्रहणात् । 'सर्वनामस्थाने-चे'त्यत्राऽसम्बुद्धाविति पर्युदासाच्चेत्यभिप्रेत्याह—स्वादिपञ्चेति ।

अक्लीबस्येति । एतेन पर्युदासत्वं ध्वनयति । वाक्यभेदाऽसमर्थ-समासाऽऽपत्त्या प्रसज्यप्रतिषेधस्य गुरुत्वात् । यत्तु 'सुट् स्त्रीपुंसयोरि'ति-वक्तव्ये, 'नपुंसकस्ये'त्युक्तिः प्रसज्यप्रतिषेधम् , असामर्थ्ये समासं च ज्ञापयती'ति कैयटः । तन्न । विपरीतं तत्रैवाऽर्द्धमात्रागौरवादित्याहुः । ध्वनितं चेदं भाष्ये ।

यत्तु 'व्रते' इति सूत्रे 'अनपुंसकस्ये'त्यसमर्थसमासे उदाहरणं भाष्ये दत्तं, तदप्येतत्सूत्रे प्रसज्यप्रतिषेधव्याख्यातृमताऽभिप्रायेणेति न तद्विरोधः ।

स्वादिषु । 'सु'रत्र प्रथमैकवचनं, न तु सप्तमीबहुवचनम् । प्रथमो-पस्थितत्वात् । 'असर्वनामस्थाने' इति पर्युदासाच्च । 'आदि'ग्रहणसाम-र्थ्याच्च सुप्व्यतिरिक्तानामपि ग्रहणम् । अन्यथा 'सुपी'त्येव वदेत् । ते चाऽविशेषात्सर्वेऽपि कबन्ता इत्याशयेनाऽऽह—कप्प्रत्ययावधीति ।

यचि भम् । 'य् च, अच्चे'ति समाहारद्वन्द्वः । समासान्तविधेरनित्यत्वान्न टच् । 'यची'त्यनेन स्वादेर्विशेषणात् 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति-

१ एतत्स्थाने—'प्रत्यासत्तिन्यायात्' इति ख. ग. च. पाठः ।

तदादिविधिः । **असर्वनामेति** । तेन 'सुपादावि'त्यादौ 'पादः पदि'त्यादि-पदादेशादयो न । अयं च पर्युदासो, लाघवात् । ( यत्तु 'प्रसज्यप्रतिषेधे 'राजे'त्यादौ 'सुप्तिङन्तमि'ति पदत्वस्याऽपि निषेधाऽऽपत्तौ, नलोपाऽसिद्धिरि'ति । तन्न । 'अनन्तरस्ये'ति न्यायविरोधात् ) ।

एषा च पदत्वकार्यप्रतिबन्धरूपाऽशास्त्रीयेऽपि कार्ये भवति । 'न पदान्त'-सूत्रस्थभाष्यप्रामाण्यात् ।

आ कडा । 'प्राक्कडारात्समास' इति तु नाऽवधिः । व्याप्तिन्यायात् । 'तत्पुरुषो', द्विगुश्चे'ति लिङ्गाच्च । समावेशाऽर्थं हि तत् । इत्यभिप्रेत्याह—**कडाराः कर्मधारय इति** ।

'आ चाऽर्थादि'ति वक्तु युक्तम् । न हि 'चाऽर्थे द्वन्द्व' इत्यतः परमप्यस्योपयोगोऽस्ति । [3]केचित्तु 'एका संज्ञे'त्यधिकारादेव सिद्धाववध्युपादानं निरर्थकमेव, अन्यत्रेवाऽत्राऽपि तदुपादानं विनैव तन्निवृत्तिसिद्धेः । 'राजदन्तादिषु परमि'त्यादावनन्वयादुत्तरत्राऽननुवृत्तिसिद्धेश्च । इदमेव ध्वनयन्वक्ष्यति—**एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं** [4]स्पष्टार्थमिति 'शेषो घी'ति सूत्रे इति । तन्न । प्रतिसूत्रं तस्याऽसम्बन्धात् । अनन्वयाच्च ।

तस्मात् पारार्थ्यसाम्यात्परिभाषायामधिकारशब्दो बोध्यः । ध्वनितं चेदं 'षष्ठी स्थाने' इति सूत्रे भाष्यकैयटयोः । एवमेकेति स्त्रीलिङ्गनिर्देशात्, प्रकरणाच्च संज्ञालाभे, संज्ञाग्रहणमपि चिन्त्यप्रयोजनमिति दिक् ।

**एकैवेति** । सङ्ख्यावाच्येकशब्दोपादानादवधारणं संपद्यते इति भावः । यद्यपि परत्वाऽनवकाशत्वाभ्यां बाधकत्वेनाऽपीदं सिद्ध्यति,

---

१ क. कुण्डलितो ग. पाठः ।

२ 'एषा च' इत्यारभ्य 'भाष्यप्रामाण्यात्' इत्यन्तोऽयं क. ख. पाठो, ग. नास्ति ।

३ 'वस्तुत एका संज्ञेति' ख. ग. पाठः ।

४ 'स्पष्टार्थमिति 'शेषो घी'ति सूत्रे । यथान्यासे तु पारार्थ्यसाम्यात्' इति ख. ग. पाठः ।

५ 'इति तन्न' इत्यारभ्य 'तस्मात्' इत्यन्तः क. पाठः ।

तथाऽपि संज्ञानां विरोधाऽभावाद्विप्रतिषेधाऽप्रवृत्तिः । भिन्नफलत्वेन सामान्यविशेषभावाऽभावान्नाऽपवादत्वम् । ( एवं चैक[1]संज्ञाधिकारादन्यत्र संज्ञानां परस्परं बाध्यबाधकभावाऽभावः ) । अत[2] एव तव्यदादीनां कृत् कृत्य-प्रत्यय-संज्ञाऽऽदयः सिद्ध्यन्तीति बोध्यम् ।

या परेति । द्वयोः सावकाशयोः परा, निरवकाशत्वे तु सैवेति विवेकः । तेनेति । अनवकाशत्वेनेत्यर्थः । परोदाहरणन्तु 'अपादानमुत्तराणि कारकाणि बाधन्ते' इत्याद्याकरे स्पष्टम् । न[3] चैवमौपगव इत्यादौ 'सुप्तिङन्तमि'ति पदसंज्ञाया अन्तरङ्गत्वात्परत्वेन बाधोऽनया न स्यात् । उत्तरकालप्रवृत्तिकेऽज्ञानन्तर्येण 'नाजानन्तर्ये' इति निषेधात् । 'राजन्य' इत्यादौ सामर्थ्यादेवाऽन्तरङ्गबाधः ।

न चा[4]ऽङ्गसंज्ञाऽपि भ-पदसंज्ञाभ्यां परत्वाद्बाध्येतेति वाच्यम् । पदसंज्ञादिविधावङ्गमित्यनुवर्त्तनात् 'अङ्गं सत्पदं भवति, भं भवती'त्याद्यर्थोऽङ्गीकारेण समावेशस्वीकारात् । न च पर्यायः स्यात् , एवं चाऽनुवृत्तिरपि चरितार्था, नियमबाधश्च नेति वाच्यम् । अ[5]ङ्गप्रकरणे 'भस्ये'त्यस्य पाठेन, 'सु[6]पि च' 'तद्धितेष्वचामादेरि'त्याद्यङ्गकार्यविधानेन समावेशज्ञापनात् । पुरुषसंज्ञा-

---

१ क. नास्ति । ख. ग. पाठः ।

२ 'अत एव' इत्यस्य स्थाने 'तेन' इति ख. ग. पाठः ।

३ 'न चैवम्' इत्यारभ्य 'अन्तरङ्गबाधः' इत्यन्तः क. पाठः ।

४ एतदुत्तरम्—'औपगव' इत्यादौ 'सुप्तिङन्तमि'तिपदसंज्ञाया भसंज्ञया बाधश्च परत्वेन बोध्यः । तेन 'राजन्य'इत्यादौ न नलोप इति बोध्यम् । न च तस्या अन्तरङ्गत्वात्परत्वेन बाधोऽनया नोचितः । एवं तर्हि बाध्यसामान्यचिन्तया तस्या अप्येषा अपवाद इत्यदोषात् । अत्राऽपि 'सुप्तिङन्तमि'त्यनुवृत्तेर्वा । न चाऽङ्गसंज्ञापि भपदसंज्ञाभ्याम्' इति ख. ग. पाठः ।

५ 'अङ्गप्रकरणे भस्येत्यस्य पाठाच्च' ग. पाठः ।

६ 'सुपि च' इत्यारभ्य 'अङ्गकार्यविधानेन' इत्यन्तः क. ग. पाठः ।

परस्मैपदसंज्ञयोरपि 'णलुत्तमो वे'तिज्ञापकात्समावेशः। अन्यत्र इष्टसमावेशस्थाने चः पाणिनिना कृत एवेति ध्येयम्।

गुरु-लघुसंज्ञे वर्णस्य, नदी-घिसंज्ञे तदन्तस्ये'ति विभिन्नाऽवधिकत्वात्समाविशतः। 'तयोरपि वर्णसंज्ञात्वमि'तिपक्षे[1] 'ह्रस्वं लघ्वि'त्यत्र 'असखि'पदसहितं 'घि'पदमनुवर्त्त्य, गुरुसंज्ञाविधायके 'स्त्र्याख्य'पद-'यू'पदसहितं 'नदी'पदं चाऽनुवर्त्त्य[2], वाक्यभेदेन 'तत्संज्ञकयोस्ते संज्ञे विधीयेते' इति समावेशः। पर्यायस्तु घिपद नदीपदरहिताऽनुवृत्त्याऽपि सिद्ध इति दिक्। (न[3] चैतानि सूत्राणि 'निर्जर'शब्द एव वक्तुं युक्तानि। न च फलाऽभावः। पदान्तत्वप्रयुक्तरुत्ववारणेन भसंज्ञाफलसत्त्वादिति वाच्यम्। पदसंज्ञाया अकरणेनाऽपि तस्य सुलभत्वात्। इह तु 'दद्भ्यामि'त्यादौ जश्त्वाद्यर्थं पदत्वस्याऽऽवश्यकत्वे, 'दत' इत्यादौ तद्वारणाय भत्वमप्यावश्यकम्[4]) इति दिक्।

यलोप इति। 'हलि सर्वेषामि'तीत्यर्थः[5]। अङ्गाऽऽक्षिप्तस्य, भसंज्ञाक्षिप्तस्य च एकत्वे एव एतत्सूत्रप्रवृत्तिः, प्रत्यासत्तिन्यायादित्याशयेनाऽऽह—यजादिस्वादिपर इति।

एतेन 'भत्वस्य 'वृषण्वस्वश्वयो'रित्यादावप्रत्ययेऽपि विधानाद्भत्वेन न प्रत्ययाऽऽक्षेप' इति परास्तम्। अङ्गसाचिव्येन सम्भवात्। नन्विदम्

---

१ 'इति पक्षेऽपि' ख. ग. पाठः।

२ 'यूपद-शेषपदानुवृत्त्यापि' ग. पाठः।

३ क. कुण्डलितः ख. ग. पाठः।

४ 'भत्वमप्यावश्यकम्। न च 'दत' इत्यादौ 'स्वादिष्वि'ति पदत्वाज्जश्त्वं दुर्वारम्। न च भत्वेन बाधः। कार्याऽभावेन तदप्रवृत्तेरिति वाच्यम्। पदत्वप्रतिबन्धस्यैव कार्यस्य सत्त्वात्। न चेदमशास्त्रीयम्। 'न पदान्ते'तिसूत्रस्थभाष्यप्रामाण्येनाऽशास्त्रीयेऽप्येतत्प्रवृत्त्यङ्गीकारादित्याहुः' इति ग. पाठः।

५ 'हलि सर्वेषामिति, लोपः शाकल्यस्येति वेत्यर्थः' इति ग. च. पाठः।

असङ्गतम् । भत्वेनाऽङ्गनिष्ठयजादिस्वादिपरत्वाऽऽक्षेपेऽप्यवयवनिष्ठस्य तस्याऽऽक्षेपे मानाऽभावात् । 'यचि भमि'त्यत्र 'यस्मात्प्रत्ययविधिरि'त्यनुवृत्तेरङ्गस्यैव तद्विधानात् । ( संज्ञा विधिभिरस्यैकवाक्यत्वेऽपि, प्रत्ययस्याऽङ्गांशे उत्थिताकाङ्क्षत्वेन तत्रैवाऽन्वयस्यौचितत्वात् ) ।

किञ्चाऽनो विशेषणेऽपि 'अनस्तक्ष्णे'त्यादौ दोषो दुर्वारः । विधौ परिभाषोपतिष्ठते नाऽनुवादे' इति परिभाषया निर्दिष्टपरिभाषाऽनुपस्थितेः । ( 'अनन्त्यविकारे' इति परिभाषा तु नाऽस्त्येव । सत्त्वे तु यजादिस्वादिप्रत्ययस्याऽन्विशेषणत्वे फलाऽभावः । 'अनस्तक्ष्णे'त्येतदेव हि तत्फलमाहुः) इति चेत् । अत्राऽऽहुः 'ष्यङः संप्रसारणमि'ति सूत्रे भाष्यकाराः—

१ क. कुण्डलितो ग. पाठः ।

२ 'अनुपस्थितेरिति चेदत्राहुः' क. पाठः ।

३ क. नास्ति । ख. ग. पाठः ।

४ 'इति चेदत्राहुः—कार्यकालपक्षे पदैकवाक्यतायाः सर्वसंमतत्वेनोपस्थितपदानां यथेष्टमभिसम्बन्धाङ्गाकारात् । अयं भावः—तत्पक्षे 'यचि भमि'त्यादेरयमर्थः—'यत्र भशब्दस्तत्र यचीत्युपस्थितं भवति, 'यस्मात्प्रत्ययविधिस्तदादी' त्यनुवर्त्तमानं च । तत्र 'यस्मात्प्रत्ययविधिस्तदादी' त्युपस्थाप्यांशस्योपस्थापकं समानविभक्तिकत्वम् । 'यचि' 'प्रत्यये' इत्यादीनां संज्ञासूत्रे उपात्तविभक्त्यन्ततैव । सप्तम्यन्तादिपाठस्य वैयर्थ्यापत्तेः । प्रथमायास्तु साधुत्वार्थत्वेनाप्युपपत्तेः । तत्रोपस्थितप्रथमान्तपदोपस्थाप्यार्थस्योपस्थापकाऽर्थे एवान्वयः । सप्तम्यन्तस्य त्वन्येनापि । अत एव प्रकृतसूत्रे 'यस्मात्प्रत्ययविधिस्तदादी'त्यंशस्य 'भस्ये'त्यत्रान्वयमभिप्रेत्याऽङ्गावयव इति व्याख्यातम् । 'यची'त्यंशस्तु 'यजादिस्वादिपरो योऽनि'त्यन्विशेषणतया व्याख्यातः । 'यचि भमि'त्यादिकं तु 'इको गुणवृद्धी'इतिवदुपस्थापकमेव । उपस्थाप्यस्योपस्थापकेन प्रदेशेषु वृत्त्या बोधनात्परं संज्ञासूत्रव्यवहारः । वृत्त्या बोधकत्वमपि सामानाधिकरण्यादवसीयते । 'इको गुणवृद्धी'त्यादौ तु

'एवं तर्हि कार्यकालं संज्ञापरिभाषं, यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यम्। 'भस्ये'त्युपस्थितमिदं भवति-'यचि भमि'ति। तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः, अनाऽकारम्–'यजादिस्वादिपरस्याऽनो यो अकार' इति। तस्याऽयं भावः–कार्यकालपक्षे 'भस्ये'ति श्रुते, भपदार्थजिज्ञासायां 'यचि भमि'त्युपस्थितेन शक्तिग्रहे वृत्ते, एतद्वाक्याऽर्थबोधकाले लक्ष्याऽनुरोधेन तन्त्राऽऽदिन्यायाऽऽश्रयणाद्यचीत्यस्याऽन्विशेषणताऽपीति।'विधौ परिभाषे'ति न्यायस्तु नाऽस्त्येव। तज्ज्ञापकभूतेन'उदीचामात' इति सूत्रस्थ-'स्थाने'ग्रहणेन परिभाषाणामनित्यत्वमात्रकल्पनात्। अत एवोदात्तस्वरितयोर्यण इत्यादौ 'उदात्तस्वरितस्थानिकस्य यण' इति वृत्त्याद्युक्तं सङ्गच्छते। ( सत्त्वेऽप्यनित्यत्वाच्च )। 'षष्ठी स्थाने' इति सूत्रं 'निर्दिश्यमानस्ये'ति परिभाषापरम्। स्थानसम्बन्धलाभस्त्वन्तरङ्गत्वादिना, 'स्थानिवदादेश' इति ज्ञापकेन वेति। भाष्यमते स्थानसम्बन्धस्य परिभाषालभ्य-

---

नैवमिति स्पष्टमेव। न च यथोद्देशपक्षेऽपि भत्वाऽङ्गत्वयोः प्रत्ययनिमित्तत्वाद्व्यभिचारिहेतुना यजादिप्रत्ययपरत्वानुमानं भविष्यत्येवेति किं विशिष्य कार्यकालपक्षोपादानेनेति वाच्यम्। तथा सत्याक्षेपकविशेषणत्वस्यैव न्याय्यत्वेनाऽनो विशेषणताऽनापत्तेः। अनुमित्युपस्थितस्य वृत्त्याऽनुपस्थितत्वेन शाब्देऽन्वयाऽनापत्तेश्च। 'धूमोऽयं ज्वलतो'तिवत्। अत्र प्रमाणम्—एवं तर्हि कार्यकालं संज्ञापरिभाषम्'–इति ग. च. पाठः।

१ इतोऽग्रे–'तेनाऽनस्तक्ष्णेत्यादावनोऽकारादेर्न लोप इति 'ष्यङः सम्प्रसारणमि'ति सूत्रस्थं भाष्यमेव। 'आगन्तूनामन्ते निवेश' इतिन्यायेन 'अन' इत्यस्योत्तरं 'यची'त्यस्योपस्थितौ संनिधानेन तद्विशेषणत्वस्यैव न्याय्यत्वाच्च। एवञ्च भाऽऽक्षिप्तः प्रत्ययविशेषोऽङ्गं चेति द्वयमनो विशेषणम्। अन् त्वकारस्येति नोक्तदोषः। विधौ परिभाषेति न्यायस्तु' इति ग. च. पाठः।

२ 'अचीत्यस्य' ख. पाठः।

३ ग. च. पाठः।

त्वाऽभावेन ज्ञापकस्यैवाऽसम्भवाच्चेति दिक्। [1]केचित्त्वनन्त्यविकारेऽन्त्यसदेशस्येत्यनयेदं सिद्धम्। न चैषा 'ष्यङः संप्रसारणमि'तिसूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम्। वार्त्तिकोक्तफलानामन्यथा सिद्धिं प्रदर्श्याऽपि, 'यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थं परिभाषा कर्त्तव्ये'त्युपसंहारात्। अदमुयङ्, मिमार्जिषतीत्यर्थं च परिभाषावश्यकत्वम्। यत्तु 'न सम्प्रसारणे' इतिसूत्रे 'नैतस्याः परिभाषायाः सन्ति प्रयोजनानी'त्युक्तं,तत्तु 'न सम्प्रसारणे' इत्यादेरेव ज्ञापकात्प्रयोजनाऽत्यल्पत्वसूचकम्। 'अल्लोपोऽनः' 'सान्तमहत' इत्येतयोरन्याय्याऽनेककल्पनाऽपेक्षया परिभाषाया एव ज्यायस्त्वादित्याहुः।

तपरकरणं किम्?। अनितेः क्विपि 'आन' इत्यादौ ल्लोपो मा भूदिति। अन्त्वं त्वत्रैकदेशविकृतन्यायेन बोध्यम्। ([2]न च ल्लोपस्य सम्भावितत्वेनाऽकृतव्यूहपरिभाषया'अनुनासिकस्य क्वी'ति दीर्घाऽप्राप्तौ, ल्लोपे इष्टाऽऽपत्तिरिति वाच्यम्। तस्या अनित्यत्वात्। इदमप्यनित्यत्वे ज्ञापकमित्यन्यदेतत्)।

रषाभ्याम्। निमित्त-निमित्तिनोरपदस्थयोरसम्भवा'त्पदे' इत्यनेन सामर्थ्यादेकपदत्वे लब्धे, समानग्रहणमखण्डत्वलाभार्थम्। तेन समासे न-'रामनामे'ति। अखण्डत्वं चाऽत्र निमित्ताऽनधिकरणनिमित्तिमत्पदाऽघटितत्वम्। तेन 'मातृभोगीण' इत्यादौ णत्वसिद्धिः। केवल'भोगीने'त्यस्य, प्रत्ययमात्रस्य वा पदत्वाऽभावात्। लोकेऽर्थबोधकत्वाऽभावाच्च। अत एव 'आचार्यादणत्वं चे'ति सार्थकम्। '[3]सुपर्वणे'त्यादिसिद्धये 'निमित्तानधिकरणे'ति।

'पद'शब्देन चाऽत्र लोकेऽर्थप्रतीतिकृदुच्यते,-पद्यते बोध्यते इति

---

१ 'केचित्तु' इत्यारभ्य 'ज्यायस्त्वादित्याहुः' इत्यन्तः क. पाठः।

२ क. कुण्डलितः ख. ग. पाठः।

३ 'निमित्तानधिकरणेति' इत्यन्तोऽयं पाठो ग. नास्ति।

व्युत्पत्तेर्लक्षणया वा। एवं च 'गन्धर्वगानमि'त्यादौ 'गतिकारकोपपदानामि'ति सुबुत्पत्तेः पूर्वं समासेऽपि, णत्वं न भवत्येव। ( अत एव 'ब्राह्मणमानयती'ति विग्रहे 'ब्राह्मणो'त्यादौ 'पूर्वपदात्संज्ञायामि'ति-णत्वमुक्तं मनोरमायाम् )।

न चैवं क्षुभ्नादिषु 'नृनमन'शब्दपाठो व्यर्थः। संज्ञाभूताऽखण्डार्थं तस्याऽऽवश्यकत्वात्। न च तत्र 'च्छन्दस्यवग्रहादि'त्यनेन प्राप्तिः। ईदृशे विषयेऽवग्रहाऽभावात्। अत एव 'वर्णैकदेशानां वर्णग्रहणेनाऽग्रहणमि'ति-पक्षे 'नृनमन'शब्दपाठो ऋवर्णात्परस्य णत्वे ज्ञापक उक्त 'एओङ्'-'ऐऔच्'सूत्रयोर्भाष्ये। यूषो—मण्डविशेषः। ( 'मुद्गाऽमलकयूषस्तु भेदी दीपनपाचनः' इति दर्शनात् )। न च ष्टुत्वेनैव सिद्धेरस्येहोपन्यासो व्यर्थः। अत एव 'षग्रहणमुत्तरार्थमि'त्याकर इति वाच्यम्। 'पुष्ट' इत्यादौ चरिताऽर्थस्य ष्टुत्वस्याऽसिद्धतयाऽस्यैव प्रवृत्त्यौचित्यात्। आकरेऽपि-'इह षग्रहणं विनाऽपि लक्ष्यसिद्धिरस्तो'त्येतावति तात्पर्यमिति दिक्।

पूर्वस्मादिति। पूर्वस्मान्निमित्तत्वेनाऽऽश्रितादित्यर्थः। अत एव 'हे गौः' इत्यत्र गकारात्परस्य 'एङ्ह्रस्वादि'ति सम्बुद्धिलोपरूपे विधौ वृद्धेः स्थानिवद्भावो न। 'अचः परस्मिन्नि'तिसूत्रे 'पूर्वविधा'वित्यत्र आवृत्त्या पञ्चमीसमासस्याऽप्याश्रयणादयमर्थो लभ्यते इति भावः।

पक्षे त्विति। तुनाऽरुचिर्बोधिता। तद्बीजन्तु (षष्ठ्याः सम्बन्धसामान्यार्थकत्वेऽपि, निमित्तनिमित्तिभावसम्बन्धार्थकतया) तदाश्रयणे फला-

१ क. कुण्डलितः ख. ग. पाठः। २ क. कुण्डलितः ख. ग. पाठः।

३ 'आवृत्त्या पञ्चमीसमासस्याश्रयणात्' इति क. ख. पाठः।

४ इतोऽग्रे–'अचः परस्मिन्निति सूत्रे पूर्वस्येति सम्बन्धसामान्यार्थकषष्ठ्यन्तेन वा कर्मकिप्रत्ययान्तविधिशब्दस्य समासाश्रयणादयमर्थो लभ्यते इति भावः' इति क. कुण्डलितो ग. पाठः। ५ क. कुण्डलितो ग. पाठः।

६ 'सम्बन्धार्थकत्वाश्रयणे फलाऽभावः' इति ग. पाठः।

ऽभावः । न च बेभिद्यतेर्यङन्तात्तृचि 'उपजनिष्यमाऽणोप्यपवाद' इति न्यायेन ( निषेधविषयाऽभावस्यापि निमित्तत्वेन, अकृतव्यूहपरिभाषया वा ) पूर्वमिडभावेऽल्लोपे, यलोपे, 'एकाच उपदेशे' इति निषेधादिण्न स्यात् । पञ्चमीसमासे त्वल्लोपस्य स्थानिवत्त्वान्निषेधाऽप्रवृत्ताविट् सुलभ इति वाच्यम् । 'एकाच उपदेशे' इत्यत्र विहितविशेषणाऽऽश्रयणादल्लोपेऽपि निषेधाऽप्रवृत्तेः । स्पष्टं चेदमेकाचो द्वे इति सूत्रे भाष्ये ।

तत्र हि 'यङ्लोपे बेभिदिते'त्यत्र यङन्तात्तृचि, इट्प्रतिषेधमाशङ्क्य, 'एकाचोऽङ्गादि'ति व्याख्यानेन परिहृतम् । 'प्रत्ययविधानाऽवधेरेकाचः परस्ये'ति व्याख्येयमित्यर्थः । प्रत्ययविधानाऽवधेरेव प्रायेणाऽङ्गत्वात् । एवं च विहितविशेषणत्वं फलितम् । उपदेशग्रहणं च एकाजंशेन सम्बध्यते एव । विहितविशेषणेनैव 'बिभित्सती'त्यादावदोषात् । किञ्च तद्भाष्यस्य यथाश्रुतत्वे 'बिभित्सती'त्यादौ दोषवारणाय उपदेशग्रहणस्य एकाजंशेऽपि सम्बन्धे, 'बेभिदिते'त्यादावपि परिहाराऽसम्भवेन, तद्भाष्यस्य विहितविशेषणत्वे तात्पर्यमावश्यकमिति । अधिकं भाष्यप्रदीपोद्द्योते द्रष्टव्यम् ।

( [२]वसत्यादीनामनुदात्तपाठसामर्थ्यात्सूत्राऽऽरम्भसामर्थ्याच्च धातुस्वरेणोदात्तत्वेऽप्यस्य प्रवृत्तौ सिद्धायामुपदेशग्रहणं न कार्यमित्यपरं लाघवमत्र पक्षे बोध्यम् ) । एतेन 'गोधुक्शब्दादाचारक्विबन्तात्तृजादौ विहितविशेषणत्वे इण्निषेधो न स्यादि'त्यपास्तम् । परविशेषणेऽपि 'दुहि'त्यस्याऽङ्गत्वाऽभावेनाऽप्राप्तेः । हलन्तेभ्य आचारक्विभावाच्चेत्यलम् ।

न चैवमपि 'मथितं पण्यमस्ये'ति विग्रहे ठकि, इकादेशे 'यस्ये'त्यल्लोपे, 'इसुसुक्तान्तादि'ति कादेशे 'माथितिक' इत्यसिद्धिः, पञ्चमीसमासे त्वल्लोपस्य स्थानिवत्त्वान्न दोष इति वाच्यम् । सन्निपातपरिभाषया वारणात् । 'ठस्येकः' इत्यत्र स्थानिन्यकारस्योच्चारणार्थत्वेन ठस्याऽभावाच्च ।

---

१ क. कुण्डलितो ग. पाठः । २ क. कुण्डलितः ख. ग. पाठः ।

स्थानिवत्त्वन्त्वल्विधित्वान्न। आदेशे तु अकारो विवक्षितः। प्रत्ययेषु च सर्वत्राऽविवक्षितः। एवं हि लाघवं भवति। अठचि च नाऽतिप्रसङ्गः। ठस्याऽङ्गसंज्ञानिमित्तत्वाऽभावात्।

एतेनाऽऽदेशे प्यकारोऽविवक्षित इत्यपास्तम्। बहुषु प्रत्ययेषु विवक्षितत्वकल्पनाऽपेक्षयैकत्राऽऽदेशे एव विवक्षितत्वकल्पने लाघवात्। किञ्चैवं 'निषादकर्षू'शब्दात् 'ओर्देशे' इति ठञि, व्यञ्जनमात्रस्य व्यञ्जनरूप का'ऽऽदेशे, 'क'शब्दस्य लाक्षणिकत्वात्'केऽण' इति ह्रस्वाऽनापत्तिः। स्पष्टं चेदमव्ययात्त्यप्सूत्रे भाष्यकैयटयोः।

('स्थान्यादेशयोरि'ति मनोरमायां 'स्थानि'पदेनइकादेशस्थानिभूताष्ठगादयः, आदेशपदेन च तद्विधायकं सूत्रमिति न दोषः)। ध्वनितं चैतत्समाधानद्वयस्य मुख्यत्वं 'ठक्छसोश्चे'ति वार्त्तिके भाष्ये। नन्वेवमपि 'अपीपचन्नि'त्यत्र णिलोपस्य, चङन्त्यकारयोरेकादेशस्य च स्थानिवद्भावाऽनापत्तौ, अन्तेः 'सिजभ्यस्ते'ति जुसापत्तिरिति चेन्न। 'यस्य विभाषा'-'वित्तो भोगप्रत्यययोरि'तिसूत्रस्थकैयटोक्तरीत्या परसाहचर्यस्य बलवत्त्वेन विदिसाहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानात्।

परन्त्विदं चिन्त्यम्। विप्रतिषेधसूत्रे कार्यशब्देन शास्त्रीयस्यैव ग्रहीतुमुचितत्वेन तदप्राप्तेः।

'नित्यः परयणादेशः, परश्चाऽसौ व्यवस्थया।
युगपत्सम्भवो नास्ति, बहिरङ्गेण सिद्ध्यति॥'

—इत्य'चः परस्मिन्नि'तिसूत्रभाष्योक्तरीत्या पूर्वसाहचर्यस्याऽन्तरङ्गत्वेन, तस्यैव ग्रहीतुमुचितत्वाच्च[2]।

प्रत्यैषिषन्नित्यादावेवमपि दोषाच्च[3]। ('विभाषा[4] गमहनविदविशामि'-

---

१ क. कुण्डलितः ख. ग. पाठः। २ चकारः ख. नास्ति।

३ 'दोषाच्च' इत्यन्तः क. पाठः। ४ क. कुण्डलितो ग. पाठः।

त्यत्र लुग्विकरणपरिभाषाऽनुग्रहाय परसाहचर्यस्यैवाश्रयणमिति बोध्यम् । 'नुदविदोन्दत्रे'त्यत्रापि 'विदॢ लाभे'इत्यस्य तौदादिकस्यैव भोगप्रत्यययोर्वृत्तिसम्भवेन तस्य 'वित्तो भोगे'तिसूत्रे ग्रहणेन तक्रकौण्डिन्यन्यायेनाऽत्र तस्याऽग्रहणे, परसाहचर्येण रौधादिकस्यैव ग्रहणमिति बोध्यम् ) ।

वस्तुतस्तु पूर्वोत्तरसाहचर्येणाऽभ्यस्तादपि परस्याऽनादिष्टझेरेव ग्रहणेन दोषाऽभावात् । 'सुट् तिथारि'तिव'ज्झेर्जुसि'त्यत्रेकारस्योच्चारणाऽर्थत्वेन 'झ'मात्रस्य स्थानित्वेनाऽल्विधौ स्थानिवत्त्वनिषेधादन्तेर्झत्वाऽभावेनाऽदोष इत्यन्ये । 'तन्वन्ती'त्यत्रेडागमस्तु न । बहिरङ्गतया यणोऽसिद्धत्वादिति बोध्यम् ।

'न[2] च तदाश्रयणे विधिग्रहणं किमर्थम् ? । पूर्वस्माद्विधिरित्यर्थलाभार्थमि'त्यादिना सप्रपञ्चं तत्प्रयोजनानि व्याख्याय, 'पूर्वस्येति सम्बन्धसामान्याऽर्थकषष्ठ्यैव सिद्धे पुनर्विधिग्रहणं व्यर्थमि'त्याशङ्क्य, 'विधिमात्रे = शास्त्रीयेऽशास्त्रीये च स्थानिवद्भावो यथा स्यात् । वाय्वोः । 'लोपो व्योर्वली'ति लोपो मा भूदि'त्युक्त्वा 'अस्ति प्रयोजनमेतत् ? । किं तर्हीति । 'अपरविधाविति तु वक्तव्यम् । किं प्रयोजनम् ? । स्वविधावपि स्थानिवद्भावो यथा स्यात् । कानि पुनः स्वविधौ स्थानिवद्भावस्य प्रयोजनानि[3] ? । आयन्नासन्नि'ति भाष्याऽसङ्गतिः । 'बेभिदिते'त्यादीनामस्मिन् न्यासेऽसिद्धेरिति वाच्यम् । तत्रापि पञ्चमीसमासे बाधकाऽभावात् ।

१ 'अभ्यस्तस्यापि भावरूपादेशाऽनपहृतविकरणकाऽभ्यस्तग्रहणमि'त्यप्यतिक्लिष्टम् । तस्मात्पञ्चमीसमास एवोचितः । ( परे त्वीदृशसाहचर्याश्रयणाऽपेक्षया पञ्चमीसमासाश्रयणे गौरवाऽभावः । ईदृशसाहचर्यस्य दुर्ज्ञेयत्वं च' ) इति क. पाठः ।

२ 'अत एव विधिग्रहणं किमर्थम्' ख. ग. पाठः ।

३ इतः परं—'आयन्' 'आसन्नि'ति भाष्योक्तं सङ्गच्छते । अन्यथा 'बेभिदिते' त्यादीनामस्मिन्न्यासेऽसिद्धत्वेनाऽसङ्गतिः स्पष्टैव' इति ख. ग. पाठः ।

न्यासान्तरं तु स्वविधेरपि संग्रहायेति स्पष्टमेव। अत्रत्यकैयटस्य तु प्रमाद इति भाष्यप्रदीपोद्द्योते निरूपितम्।

'तन्वन्ती'त्यादाविट् तु न। उकारवृत्त्यार्द्धधातुकत्वस्याऽल्विधित्वेन स्थानिवत्त्वाऽभावात्। स्पष्टा चेयं रीति'र्भोभगो' इति सूत्रे भाष्ये इति तत्रैव सूत्रे निरूपितम्। अधिकं भाष्यप्रदीपोद्द्योते निरूपितम्।

( अस्मदुक्तरीत्या[1] साधने तु पञ्चमीसमासाऽऽश्रयणं व्यर्थमेव। न च निमित्ताऽपेक्षया परत्वविज्ञानात्तत्सिद्धिः, अकारलोपाऽऽदेर्निमित्तं ह्यार्धधातुकादि, न च तस्मात्परस्य विधिः, किन्तु तस्यैवे'ति कैयटोक्तरीत्या निर्वाह इति वाच्यम्। 'तत्तर्हि वक्तव्यम्?। न वक्तव्यम्। 'पूर्वविधावि'त्येव सिद्धम्। कथम्?। पूर्वग्रहणेन नाऽऽदेशोऽभिसम्बध्यते—कुतः पूर्वस्मात्?। आदेशादिति। किं तर्हि?। निमित्तमभिसम्बध्यते' इत्युत्तरभाष्येऽणावधित्वेनाऽऽदेशस्यैव सम्बन्ध इत्यभिप्रायेणैव न्यासाऽन्तरप्रवृत्तिरित्यर्थस्य स्पष्टतयाऽभिधानात्।

निमित्तस्याऽवधित्वेनाश्रयणे[2] यणाद्यादेशनिमित्ताऽन्त्यादेः पूर्वस्य धात्वादेराडादिरूपे कार्ये कर्त्तव्ये स्थानिवद्भावस्य पूर्वविधावितिन्यासेऽपि सिद्धत्वेन, न्यासाऽन्तरेऽप्रवृत्त्यापत्तेश्च। किञ्चाऽपरविधावितिन्यासे निमित्ताऽपेक्षया परत्वविज्ञाने, 'बाभ्रवीय' इत्यादौ 'हलस्तद्धितस्ये'ति यलोपेऽवादेशस्य स्थानिवत्त्वापत्तिः। न च 'न पदान्ते'ति निषेधः। स्वरदीर्घयलोपेषु लोपाऽजादेशस्यैव स्थानिवत्त्वनिषेधात्। अभावाऽतिदेशस्याऽनुपदमेव विधिग्रहणेन सिद्धान्तितत्वात्, 'स्थानिनि सति यन्न, तदादेशेऽपि ने'त्यभावाऽतिदेशाऽऽकारात्, 'योऽत्रा[3]श्रीयते नाऽसावादेशो, यश्चादेशो, नाऽसावाश्रीयते' इतिभाष्योक्तरीत्या न निर्वाहः। अत एव

१ इत आरभ्य 'असङ्गततापत्तिः' ( ४५५ पृष्ठे ) इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

२ 'निमित्तस्य' इत्यारभ्य 'अप्रवृत्त्यापत्तेश्च' इत्यन्तः क. ग. पाठः।

३ 'योऽत्र' इत्यारभ्य 'न निर्वाहः' इत्यन्तः क. ग. पाठः।

'पटयती'त्यादौ वृद्ध्यभावसिद्धिः । न च 'अपरविधा'विति न्यासे, आदेशाऽपेक्षया परत्वविज्ञाने 'नैधेय' इत्यसिद्धिः, अल्लोपस्य स्थानिवत्त्वेन 'ह्यच' इति ढगनापत्तेः, न ह्ययमादेशाऽपेक्षया परस्य कस्यचिद्विधिरिति वाच्यम् । निमित्ताऽपेक्षया परत्वविज्ञानेऽपि, दोषस्य तदवस्थत्वात् । 'परदेशे जायमानत्वेन परसम्बन्धिविधित्वमि'ति तूभयोः समम् । एतेन 'मथितमाचष्टे मथित्, ततष्ठकि, काऽऽदेशाऽभावाऽर्थं पञ्चमीसमास आवश्यक' इति निरस्तम् । 'अपरविधा'विति न्यासे आदेशस्य, निमित्तस्य वाऽवधित्वेऽपि, लोपात्, तन्निमित्तभूतणिच एव वाऽपरस्य विधिसत्त्वेन स्थानिवद्भावाऽनापत्त्या, कादेशसहितरूपस्यैव भाष्यकृत इष्टत्वाऽनुमानात् ।

किञ्च 'पूर्वस्ये'ति सम्बन्धसामान्यषष्ठ्या स्थानित्व-निमित्तत्व-सम्बन्धवत्कर्मत्वस्याऽपि ग्रहणे, 'पूर्वकर्मकविधा'वित्यर्थेन 'आयन्नि'त्यादीनां सिद्धौ वार्त्तिकाऽऽरम्भस्यैवाऽसङ्गतताऽऽपत्तिः) ।

नं[1]नु पञ्चमीसमासाऽङ्गीकारे 'प्रविगणय्ये'त्यादावल्लोपस्य स्थानिवत्त्वादयादेशो न स्यात् । 'वचनसामर्थ्यात्स्थानिवद्भावकृतव्यवधाने प्रवृत्ति[2]'रि'ति तु न । 'प्रशमय्ये'त्यादौ चारितार्थ्यादिति चेन्न[3] । 'निष्ठायां[4] सेटी'तिसेड्ग्रहणेन तदनित्यत्वेनाऽदोषात् । तथाहि—तत्र 'सेटी'तिपदं नाऽनिड्व्यावृत्त्यर्थम् । णि[5]जन्तात्तदभावात् । न च ज्ञपेः 'सनीवन्तर्धे'तीड्विकल्पात् 'संज्ञपित' इत्यादौ 'यस्य विभाषे'तीण्निषेधे[6] सम्भवतीति वाच्यम् । 'यस्य विभाषे'त्यत्रैकाच इत्यनुवृत्तेः । अन्यथा 'तनिपतिदरिद्राती'ति सनि विकल्पितेट्त्वेन 'दरिद्रित' इतीण्न स्यात् । 'वा दान्त'-

---

१ 'किञ्च' इति ख. ग. पाठः ।

२ 'प्रवृत्तिरिति चेन्न' ग. पाठः । ३ अत्र 'इति चेन्न' इति ग. नास्ति ।

४ 'ननु निष्ठायां सेटीति सेड्ग्रहणात्तदनित्यम् । तथाहि' ख. ग. पाठः ।

५ 'णिजन्तात्तदसम्भवात्' ख. ग. पाठः । ६ 'निषेधः' ख. ग. पाठः ।

सूत्रे 'ज्ञप्ता' इति निपातनेनेडभावस्येव, णिलोपस्याऽपि निपातनाच्च। तस्मात्तद्योगविभागेन कालाऽवधारणार्थम्—'इटि कृते एव णिलोपो, न तु ततः प्रागि'ति। अन्यथा 'कारितमि'त्यादौ [1]परमपीटं बाधित्वा नित्यत्वाण्णिलोपे, 'एकाच उपदेशे' इतीण्निषेधः स्यात्। पूर्वस्माद्विधौ स्थानिवत्त्वे त्वप्राप्त एव निषेधः। णिचा व्यवधानात्। तस्मात्सेट्ग्रहणमनित्यतां ज्ञापयति। ([2]इति चेन्न। सेट्ग्रहणेन लाघवात्तदभावस्यैव ज्ञापयितुमुचितत्वात्। अपि च सूत्रे पूर्वग्रहणवैयर्थ्याऽऽपत्तिः। षष्ठीसमासेन पूर्वस्य, पञ्चमीसमासेन स्वस्य, परस्य च विधौ स्थानिवद्भावस्य प्राप्तत्वेन, 'विधावि'त्येव सिद्धेः। पूर्वशब्दश्च व्यवहिताऽव्यवहितसाधारणस्तवाऽपि। अतिप्रसङ्गस्त्वनित्यत्वेन त्वयेव, मयाऽपि सुपरिहर इति दिक्)।

वस्तुत 'एकाच उपदेशे' इत्यत्र विहितविशेषणपक्षे–'सेटो'ति चिन्त्यप्रयोजनमेवेति बोध्यम्। [3]तदा तु 'प्रविगणय्ये'ति भाष्योदाहरणादेव तदनित्यत्वं बोध्यम्।

( [4]पूर्वत्रासिद्धे नेति। अतिदेशदृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धमिदम्। तस्य दोष इति। 'न मु ने' इत्यत्र नेति योगविभागेन एतदपि तथेति भावः )।

संयोगादिलोपेति। तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि लोपाऽभावार्थम्। लत्वे—'निगाल्यते'। न चाऽत्र णिलोपात्पूर्वम् ( [5]अन्तरङ्गत्वात् ) लत्वम्। सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतयाऽ[6]प्रवृत्तेः। न च स्थानिवदा-

१ 'परमपीटं बाधित्वा नित्यत्वात्' इति ग. नास्ति।

२ 'इति चेन्न' इत्यारभ्य 'इति दिक्' इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

३ 'तदा तु' इत्यारभ्य 'बोध्यम्' इत्यन्तः क. पाठः।

४ क. ख. नास्ति। ग. पाठः। ५ क. नास्ति।

६ 'अकृतव्यूहपरिभाषयाऽप्रवृत्तेः' ग. पाठः।

देशः । अल्विधित्वात् । प्रत्ययलक्षणन्तु नियमाऽर्थम् । एवं 'प्लायते' इत्यपि 'अयतावि'त्यस्योपसर्गविशेषणत्वे फलं बोध्यम्[1] ।

णत्वे—'माषवपनी'[2] । ङीबुत्पत्तेः प्राक् समासे समासरूपप्रातिपदिकान्तत्वाण्णत्वं प्राप्तम्, 'यस्ये'ति लोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाऽभावान्न ।

केचित्तु[3] 'णत्वग्रहणं व्यर्थम्, बहिरङ्गतयाऽल्लोपस्याऽसिद्धत्वादि'[4]ति । तन्न । पूर्वपदाऽऽक्षिप्तसमासरूपप्रातिपदिकान्तस्य तेन णत्वविधानेन, तस्याऽपि पूर्वपरोभयसाऽपेक्षत्वेन, समासत्वज्ञानसापेक्षत्वेन च समत्वादिति वार्त्तिकाऽऽशयः । 'निगाल्यते' इत्यत्राऽपि नाऽसिद्धत्वम् । 'नाऽजानन्तर्ये' इति निषेधा'दित्यन्ये ( —इति दिक्[5] ) ।

नलोपः ।

'विशेष्यमन्तस्येत्यस्य 'ने'त्येतदविभक्तिकम् ।
तथैव प्रातिपदिकेत्येतत्पदविशेषणम् ॥'

–इत्याशयेनाऽऽह– नेतीत्यादि[6] । सौत्रत्वात्तल्लोपः, न तु षष्ठी-

१ 'उपसर्गस्यायतिविशेषणत्वे' ग. पाठः ।

२ 'माषवपनी । ङीबुत्पत्तेः प्राक् समासोऽत्र कर्त्तव्यः । अन्यथा समासरूपप्रातिपदिकान्तत्वाऽभावाण्णत्वं न प्राप्नुयात् । इह 'यस्ये'ति लोपस्य स्थानिवत्त्वेन, नकारस्य प्रातिपदिकान्तत्वाऽभावाण्णत्वं न' इति ख. ग. पाठः ।

३ 'वस्तुतो णत्वग्रहणम्' इति ग. पाठः ।

४ 'अल्लोपऽस्यासिद्धत्वात् । इदं च 'प्रनिरन्त' इत्यत्र भाष्ये ध्वनितमिति शब्दकौस्तुभे स्पष्टमिति दिक्' ग. पाठः ।

५ 'इति दिक्' इति क. ग. नास्ति ।

६ 'प्रातिपदिकेत्यादि' ग. पाठः ।

तत्पुरुषयोः पूर्वपदे। असामर्थ्येन समासाऽसम्भवात्। 'तदन्तस्ये'ति षष्ठीतत्पुरुषः। यदि तु 'ने'त्यनेन पदं विशेष्यते, तदा विशेषणेन[1] तदन्त-विधौ लब्धेऽन्तग्रहणं[2] 'पदस्ये'त्यस्य वैयधिकरण्येनाऽन्वये तात्पर्यग्राहक-मिति भाष्यकृत इति हलन्ते निरूपयिष्यामः।

**विभाषा ङि**। 'नपुंसकाच्चे'ति विहितः शी इह गृह्यते, न तु 'जश्शसोः शिः'। तस्य सर्वनामस्थानत्वेन तस्मिन् भत्वाऽसम्भवात्।

**प्रकारार्थमिति**। प्रकारः—सादृश्यम्। तच्च सुप्त्वेन[3]। 'मांस्पचनी'-त्यादावपि 'न लुमते'ति निषेधाऽनित्यत्वाच्छसादिपरत्वं बोध्यम्।

अत्र 'सुप्रभृतिष्वि'ति वाच्ये, 'शस्प्रभृतिष्वि'त्युक्त्याऽन्यत्र[4] क्वचिदेव प्रवृत्तिर्बोध्यते। अत एव पत्-हृत्-निशां ग्रहणं चरितार्थम्। तेषां द्विविधा-नामपि कोशसिद्धत्वेन, तत्र व्यवस्थाऽर्थताया एव[5] वक्तव्यतया, प्रत्ययमात्रे प्रवृत्तौ तस्या असम्भवेन, तद्वैयर्थ्यं स्पष्टमेव[6]।

प्रकाराऽर्थत्वे प्रमाणमाह—**भाष्ये** इति। तत्र हि 'शस्प्रभृतिष्वि'त्यु-च्यते, अशस्प्रभृतिष्वपि दृश्यते, 'शलादोषणी' 'ककुद्दोषणी याचते महादेव' इत्युक्तम्। आद्यस्याऽधिगुप्रैषे पठ्यमानस्य शलाकाऽऽकारे दोषणी इत्यर्थः। छान्दसः कादिलोपः। एतेन 'दोषेत्यकारान्तस्य दूषण-वाचिनो दोषन्नादेश' इत्यपास्तम्।

**तेन पद्भिरिति**। एवं[7] तेन कोशस्थपदादीनां पादाद्यादेशत्वे, पादा-दिभ्यः पृथक् पदादिवचनं तत्र व्यर्थम्। न हि स्थान्यादेशयोः पृथगुपा-

१ 'विशेषणत्वेन' क. पाठः।

२ 'अन्तग्रहणं स्पष्टार्थम्' ख. पाठः।

३ 'प्रत्ययत्वेन' ख. पाठः। ४ 'अन्यत्र प्रत्यये क्वचिदेव' ख. पाठः।

५ 'प्रत्ययमात्रे एवावश्यकतया' ख. पाठः।

६ 'स्पष्टमेवेति दिक्' ख. ग. पाठः। ७ 'न च' ख.ग. पाठः।

दाने प्रयोजनमस्ति। स्थान्युपादानेनैव तदर्थोऽभिधानसमर्थोऽऽदेशस्याऽप्यर्थबोधनात्[1]। अत एव नसाद्यादेशानां कोशेऽनुपन्यास' इति परास्तम्। भिन्नत्वेऽपि[3] 'तृज्वत् क्रोष्टु'रिति[2]व्यवस्थाऽर्थमस्याऽऽवश्यकत्वेन, सौ परतो हृदादीनां प्रयोगार्थं प्रकारार्थत्वस्याऽऽवश्यकत्वात्। स्पष्टं चेदं समासकौमुद्यां 'वा शोकष्यञ्रोगेष्वि'ति सूत्रे।

ननु कोशे पदादयः शब्दपराः। वाच्यवाचकयोरभेदोपचाराच्च[4] प्रसिद्धार्थपदोपस्थितोऽर्थेनाऽभेदाऽन्वयः[5]। अर्थपरत्वं तु न सम्भवति। इतः पूर्वं शक्तिग्रहाऽभावात्। एवं चैकशेषप्राप्तिरेव न। अभेदश्च वाच्यवाचकभावमादाय पर्यवस्यतीति कोशादेः शक्तिग्राहकताऽपि सङ्गच्छते[6]। एवं च नाऽत्र क्षतिः प्रकारार्थत्वाऽभावेऽपीति चेन्न। कोशे तेषामर्थपरत्वात्। शक्तिग्रहस्तु पदत्वहेतुकानुमानेन सामान्यत एव पदप्रकारकः। एवञ्च[7] 'विष्णुपदार्थोऽभिन्नः कृष्णपदार्थ' इति क्रमेण बोधः। 'विनायको विघ्नराज' इत्यादौ द्वन्द्वविषये 'एते विनायकपदार्थोऽभिन्ना' इति बोधः। सर्वपर्यायद्वन्द्ववति कोशे 'एते पदार्था अभिन्ना' इत्यध्याहारेण बोधः। 'एतत्

१ 'प्यर्थबोधनेन तदनुपादानेऽपि क्षत्यभावात्' ग. पाठः।

२ 'इति वाच्यम्' ख. पाठः।

३ 'भिन्नत्वेऽपि' इति क. नास्ति।

४ 'अभेदोपचाराच्चाऽभेदान्वयः' ग. पाठः। ५ 'पदोपस्थापितार्थेन' ख. पाठः।

६ 'ग्राहकतापि सङ्गच्छते। यद्वा पदादयः तत्तत्पदमात्रप्रकारकार्थबोधकाः। सूत्रञ्चाऽभिव्यक्तेतिन्यायेन हृदयत्वादिना हृदयाद्यर्थकानामेव व्यवस्थापकम्। तथा च प्रकारार्थत्वस्य कथमेतत्प्रयोजनमिति। तन्न। तस्य न्यायस्य विशिष्टरूपोपादानविषयत्वेन, पदकार्यविषयत्वेन चाऽत्राऽप्राप्तेरित्याहुः।' इति ग. पाठः।

७ 'एवञ्च' इत्यारभ्य 'इत्याहुरिति दिक्' ( ४६१ पृष्ठे ) इत्यन्तः क. पाठः।

पदममुकवाचकमि'ति शक्तिग्रहस्तु स्वस्वप्रसिद्धपदार्थमादाय तत्तत्पुरुषस्याऽनियतः। पश्चान्मनसैव। आदावेव वा। अत एव तृतीयाध्यायतृतीयपादे शङ्करभगवत्पादैरुद्गीथाधिकरणे 'सामानाधिकरण्यं चतुर्द्धा, अध्यासाऽपवादैकत्वविशेषणत्वैरि'त्युक्त्वा, एकत्वे—'द्विजोत्तमो ब्राह्मणो भूदेव' इत्युदाहृतः। नेदं लौकिकवाक्यम्। तत्रैकेनैव विवक्षिताऽर्थसमर्पणाच्छब्दद्वयोच्चारणवैयर्थ्यस्याऽग्रे तैरेवोक्तत्वात्। तस्मात्कोशवाक्यमेवैतत्। तच्च तस्याऽर्थपरत्वे एव सङ्गच्छते। (अत एव 'नामन्त्रिते समानाधिकरणे' इति सूत्रे 'सामान्यवचनमि'त्यस्य प्रत्युदाहरणं भाष्ये—'अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये, एतानि तेऽघ्न्ये नामानी'ति दत्तम्। अन्यथैकार्थबोधकत्वरूपसामानाधिकरण्यस्याऽप्यत्राऽभावात्तदसङ्गतिः स्पष्टैव)।

एकशेषस्तु न। तथा सति तत्तच्छब्दस्वरूपस्य सम्यग्बोधाऽनापत्तेः। कोशस्य चाऽनेकशब्दानां स्वरूपबोधनपूर्वकं तेषामेकार्थबोधने तात्पर्यात्। एतदेवाऽभिप्रेत्योक्तं-'भेदाख्यानाय न द्वन्द्वो, नैकशेषो, न सङ्कर' इति।

'उक्तलिङ्गभेदाख्यानाय 'खं नभः श्रावणो नभाः' इत्यस्य स्थाने 'खश्रावणौ तु नभसी' इति न कृतम्। 'विष्णुर्नारायणः कृष्ण' इत्यादौ स्वरूपभेदाऽऽख्यानायैकशेषो न कृत' इति तदर्थः। अत एव 'यत्तदेतेभ्य' इत्यादौ पाणिनिनैकशेषो नाऽकारि। 'कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते' इत्यस्य 'अनुक्तानां–स्थानान्तरेऽनिर्दिष्टानां[2] भिन्नलिङ्गानां द्वन्द्व, एकशेषश्च न कृतोऽन्येषान्तु कृत एव, यथा'ऽप्सरोयक्षरक्षोगन्धर्वकिन्नरा' इति। तथा 'मातापितरा'विति, 'पितरौ' इति चैकशेषः। भिन्नलिङ्गानां, भिन्नस्वरूपाणामपि। 'विरूपाणामि'ति च तत्र प्राप्तिः। एवं भिन्नलिङ्गानां मिश्रतारूपः सङ्करोऽपि न कृतः। पूर्वपरत एकलिङ्गानां मध्ये भिन्नलिङ्ग इति न कृतमिति यावत्। यथा 'स्तवः स्तोत्रं नुतिः स्तुतिरि'त्येव

१ क. कुण्डलितः पाठः।

२ 'स्थानान्तरनिर्दिष्टानाम्' इति क. पाठः। स त्वशुद्धः।

कृतं, न तु 'स्तुतिः स्तोत्रं स्तवो नुतिरि'ति। 'क्रमादृते' इत्यस्य 'वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधी'त्याद्युदाहरणम् । तत्र द्वन्द्वसङ्करौ कृतावेवेति **स्वामी**'त्याहुरिति दिक् ।

( [1]शास्त्रस्य च न पदपरेषु प्रवृत्तिः । 'उभादि'त्यादिनिर्देशात् । न चाऽत्र संज्ञात्वम् । आधुनिकसङ्केताऽभावात् । 'अभिव्यक्ते'ति न्यायोऽप्यत्र नास्ति । अपदकार्यत्वात् । अत एव सर्वनामसंज्ञायां संज्ञाप्रतिषेधो वार्त्तिककृताऽऽरब्धः । एवं च नाऽत्र क्षतिः प्रकाराऽर्थत्वाऽभावेऽपीत्यरुचेराह—आसन्यमिति ) ।

भाष्यादिति । 'ककुद्दोषणी' इति पूर्वोक्तादेवेत्यर्थः । न चाऽत्र प्राण्यङ्गत्वादितरेतरयोगाऽभावेन, समाहारद्वन्द्वे, एकशेषे च कृते भाष्यं सुयोजमेव, एतस्य केवलस्य नपुंसकत्वाऽभावेऽपीति वाच्यम् । अल्पाऽच्तरत्वेन दोःशब्दस्य पूर्वनिपाताऽऽपत्तेः ।

किञ्च[2] तदन्ते आदेशो दुर्लभः, विशेष्याऽसन्निधानात् । सत्यपि तस्मिन् सम्पूर्णस्याऽऽदेशाऽऽपत्तिः । निर्दिश्यमानस्य कस्याऽप्यभावात् । स्थानिनामाक्षेपेणेव लाभात् । न चाऽवयवाऽनन्यत्वात्सिद्धिः । 'शसप्रभृतिष्वि'त्युक्त्या तत्प्रकृतिभूतानामेवाऽऽदेशौचित्यात् । तस्मात् 'ककुदि'ति पृथक्पदम् । ध्वनितं चैतत्कैयटेन 'ककुदि'त्येतद्रहितं 'दोषणी याचते'इति प्रतीकं गृह्णता । 'शला दोषणी'त्यत्राऽपि भिन्ने पदे । दक्षिणं दोरिति—'तमुपाद्रवदुद्यम्ये'ति पूर्वपादघटकोद्यम्येत्यनेन कर्मतयाऽन्वेति ।

दोषं तस्येति । दोषं = हस्तं, दूषणं च, भजत इति तदर्थः । 'दोर्दोषा च भुजो बाहुरि'तिनिघण्टौ दर्शनात्स्त्रियां भागुरिमते टाबित्याहुः ।

---

१ क. ग. नास्ति ।

२ 'किञ्च' इत्यारभ्य 'औचित्यात्' इत्यन्तः पाठो ग. नास्ति ।

३ 'स्त्रियामपि' ख. ग. पाठः ।

द्व्योरह्नोरिति। 'तद्धितार्थे'ति समासः। 'कालाट्ठञ्'। 'द्विगोर्लुगि'ति लुक्। 'राजाह' इति टच्। अह्नादेशः।

सङ्ख्यावि। 'सायेभ्य' इति वक्तव्ये पूर्वग्रहणमुत्तरपद इत्यस्याऽधिकृतस्य षष्ठ्यन्तत्वलाभाय। ( पूर्वशब्दो हि 'भीमो' 'भीमसेन' इतिवत्पूर्वपदार्थकः )। तदेतद् ध्वनयन्नुदाहरति—द्व्यह्नीति। एतेनोत्तरपदाऽधिकारबाधे मानाऽभावात्, 'न लुमते'त्यनित्यत्वस्य क्लृप्तत्वाच्च, 'द्व्यहस्थित' इत्येवैतदुदाहरणमिति ( 'द्व्यह्नी'त्युदाहरणं चिन्त्यमिति ) परास्तम्।

अह्नः साय इति। स्यतेर्घञि अवसानवचनः 'साय'शब्दः। 'सङ्ख्याविसाये'ति ज्ञापकादेकदेशिसमासः।

विश्वपा इति। 'विश्वं पाती'ति विग्रहे 'आतोऽनुपसर्गे' इति के प्राप्ते, वाऽसरूपन्यायेन क्विप्।

दीर्घाज्जसि च। चकारादिचीत्यनुवृत्तिः। यत्तु 'दीर्घाच्छसी'त्येव सूत्र्यताम्। 'दीर्घाच्छस्येवे'ति च नियमः। एवं च चकारो न कार्यः। 'ने'ति च नाऽनुवर्त्तनीयमिति महल्लाघवमि'ति। तन्न। 'दीर्घादेव शसी'ति विपरीतनियमाऽऽपत्तेः।

न्याय्यत्वादिति। जसि पूर्वसवर्णदीर्घनिषेधस्य न्याय्यत्वादित्यर्थः।

[ननु अक्पदोपस्थापिताऽऽकारादीनामण्त्वेन (अण्पदोच्चारणेन तेषामप्युच्चरितत्वेन च) तैरणुदित्सूत्रबलाद्दीर्घादीनामुपस्थानेऽपि, तेषामक्-

१ ग. पाठः।

२ क. कुण्डलितः ख. ग. पाठः।

३ 'न कर्त्तव्यः' ख. पाठः।

४ 'इत्यर्थः' इत्यन्तोऽयं क. पाठः।

५ क. पुस्तके मसीलेपेन निस्सारितोऽयम् 'विरोध इति मतेनेदम्' (४६३ पृष्ठे) इत्यन्तो ग्रन्थः। ख. ग. तु वर्त्तते।

६ ग. नास्ति। ख. पाठः।

पदोत्तरषष्ठ्या स्थानित्वबोधे मानाऽभावः । प्रत्ययानां प्रकृतिवृत्त्युपस्थाप्ये एवाऽन्वयात् । सवर्णिनां प्रकृतवाक्यघटकपदजन्यपदार्थोपस्थितिविषयत्वाऽभावेन शाब्दबोधविषयत्वस्य वक्तुमशक्यत्वाच्च । तथा चाऽणुदित्सूत्रे भाष्यम्-'ऋगि'त्युक्ते संपाठमात्रं गम्यते' इति । अस्य भावः—'ऋचं वद' 'ऋकपठ्यतामि'त्यादौ शब्दानुपूर्वीरूपाया 'अग्निमीळे' इत्यादिकाया ऋच एव कर्मत्वं प्रतीयते, न तु तदर्थस्येति । न च 'द्विरेफमानये'-त्यादौ द्विरेफपदोपस्थितभ्रमरपदेनोस्थितषट्पदस्य द्विरेफपदोत्तरद्वितीयया कर्मत्वबोधवदत्राऽपि भविष्यतीति वाच्यम् । अनयैवाऽनुपपत्त्या तत्र 'द्विरेफ'पदेन स्वशक्य-वाच्यत्वसम्बन्धेन षट्पदस्यैवोपस्थितेर्नव्यैरङ्गीकारात् । तथा च दीर्घेषु प्राप्तेरभावाद्व्यर्थो निषेध इति चेन्न । अस्मादेव ज्ञापकात्प्रत्याहारपदानां तद्वाच्यवाच्ये लक्षणाऽङ्गीकारात् । न चैवं ह्रस्वादीनां शक्त्या, दीर्घादीनां लक्षणयोपस्थितौ, युगपद्वृत्तिद्वयविरोध इति वाच्यम् । तस्याऽदोषत्वात् । अत एव 'गङ्गायां मीनघोषावि'त्यादितोऽपि बोधः । ह्रस्वानामपि तद्वाच्यवाच्यत्वेन लक्ष्यतावच्छेदकाऽऽक्रान्तत्वाच्च । न च ह्रस्वस्य ह्रस्ववाच्यता कथम्, अभेदे तदयोगादिति वाच्यम् । पुरुषभेदादिना भेदमादाय सवर्णत्ववत्तस्याऽप्युपपत्तेः । यत्तु 'स्ववाच्यसवर्णित्वं लक्ष्यतावच्छेदकमि'ति । तन्न । 'पुंगानमि'त्यादौ 'पुमः खय्यम्परे' इत्याद्यापत्तेः । [1]अन्ये त्वस्मादेव ज्ञापकात्सति तात्पर्यग्राहके क्वचित्प्रकृतिवृत्तिप्रयोज्योपस्थितविषयेऽपि प्रत्ययाऽन्वयस्य, समभिव्याहृतपदप्रयोज्योपस्थितिविषयस्य च शाब्दबोधविषयत्वं ज्ञाप्यते । एवं च द्विरेफपदेऽपि न लक्षणा । वार्त्तिककृता तूक्ताऽनुपपत्त्यैव जातिग्रहणमाश्रित्याऽणुदित्सूत्रेऽण्ग्रहणं प्रत्याख्यातमिति दिक् । न्याय्यत्वादिति । परत्वेनेत्यर्थः । 'परस्परलब्धाऽवकाशयोरेकत्र प्रवृत्तिमात्रं विरोध' इति मतेनेदम् ]।

---

१ 'अन्ये तु' इत्यारभ्य 'न लक्षणा' इत्यन्तोऽयं पाठो ग. नास्ति ।

धातोः किं, हाहानिति । गन्धर्वविशेषवाच्यव्युत्पन्नं प्रातिपदिकम् । यदि तु 'हा' इति शोकव्यञ्जकशब्दं जहातीति 'हाहा' इत्ययमपि क्विबन्तो, विजन्तो वा क्रियाशब्दः, तदा–अकारेण सह वर्त्तते इति साः, तान् 'सानि'ति प्रत्युदाहरणं बोध्यम् ।

अपरे तु 'क्त्वः' 'श्नः' इत्यादिसिद्ध्यर्थम् 'आतोऽनाप इति वक्तव्यमि'ति वार्त्तिककृतोक्तम् । भाष्यकृता च[2] 'हलः श्न' इत्यादिनिपातनेन, योगविभागेन वा तत्सिद्धिमाश्रित्य प्रत्याख्यातम् । एवं च 'सा'शब्दादेर्यद्यभिधानं, तदा योगविभागेन लोपः सूत्रकृत इष्ट एवेत्येव युक्तम् ।

सूत्रे धातुग्रहणं 'खट्वा' इत्याद्याबन्तनिवृत्त्यर्थमेव । भाष्यवार्त्तिककृतोरज्ञानकल्पनाऽपेक्षया ईदृशाऽर्थकल्पनस्यैवौचित्यात् । अत एव 'हाहा'-शब्दस्याऽव्युत्पन्नत्वेऽपि योगविभागेनाऽऽतो लोप इत्युक्तं मुकुटेन ।

( [3]आबन्तप्रकृतिकाऽऽचारक्विबन्तेभ्यः कर्त्तृक्विप्तु अनभिधानान्न भवतीति भाष्यप्रदीपोद्द्योते निरूपितम् ) । अत एव 'प्रथमयोरि'तिसूत्रस्थभाष्यं सङ्गच्छते । तत्र हि 'पररूपं बाध्यसामान्यचिन्तया दीर्घमात्रस्य बाधकमि'ति पक्षे 'रामानि'त्यादिसिद्ध्यर्थम्, 'अतो दीर्घ' इति 'सुपि चे'ति चाँ[4]ऽनुवर्त्तमाने, 'बहुवचने झल्येदि'ति सूत्रे 'बहुवचने' इति योगविभागेन पररूपबाधकं दीर्घं विधाय, 'रामाणामि'त्यादावनेन दीर्घे परत्वात्कृते'ऽग्नीनामि'त्यादौ सावकाशस्य नुटोऽप्राप्तिमाशङ्क्य, 'ह्रस्वनद्याप' इति सूत्रे 'आज्जसेरि'त्यत आद्ग्रहणाऽनुवृत्त्या समाधाय, 'कीलालपामि'त्यादौ नुड्विधायके 'आतो धातोरि'त्यनुवर्त्त्य, लोपेन नुड्बाध[5]केन समाहितम् ।

१ 'क्विबन्तः' इति क. पाठः ।

२ 'भाष्यकृता च तत् 'हलः श्नः' इति ख. पाठः ।

३ क. कुण्डलितः ख. पाठः ।

४ 'बाऽनुवर्त्तमाने' ख. पाठः ।

५ 'नुड्बाधनेन' ग. पाठः ।

नुड्विधायके आब्ग्रहणं च न कार्यमिति तदाशयः । अधात्ववयवाऽऽकारान्तहाहादीनां लोपाऽभावे तु तदसङ्गतिः स्पष्टैवेत्याहुः ।

क्त्वः श्न इति । 'क्त्व इट्' 'श्नः शस्येत्त्वमि'त्यादिप्रयोगस्थान्युदाहरणान्यत्र । एतेन'आचारक्विबन्तात्कर्त्तरि क्विपा प्रयोगाणामुपपत्तौ, योगविभागो व्यर्थ' इति परास्तम् । 'क्त्वाप्रत्ययस्येडि'त्यर्थे साधुत्वाऽन्वाख्यानाय तदावश्यकत्वात् । आचारक्विबन्तस्य[1] भाष्ये क्वाऽप्यनुपन्यासेन, तेभ्यः कर्त्तृक्विपोऽनभिधानस्यैव लाभाच्च ।

शेषो घि । 'यू स्त्र्याख्या'वित्यतो 'यू' इति, 'ङिति ह्रस्वश्चे'त्यतो 'ह्रस्व' इति चाऽनुवर्त्तते । वचनविपरिणामेनाऽन्वयः[2] । 'शेष' इत्यस्याऽर्थमाह—अनदीत्यादि । तदन्तमिति । अनुवृत्तयुभ्याम[3]सखीतिपर्युदासलभ्यस्य, शेषपदोपस्थाप्यस्य वा विशेषणात्तदन्तलाभ इति भावः ।

सखिवर्जमिति । 'सखिभिन्नावयवावि'ति वर्णसंज्ञापक्षेऽर्थो, न तु 'सख्यवयवभिन्नावि'ति । तेना'ऽतिसखिने'त्यादिसिद्धिः । 'सखिभिन्ना'विति तदन्तपक्षे । न चाऽऽद्ये 'कृतं सख्ये'ति वाक्ये संज्ञाऽऽपत्तिः । पर्युदासेन तद्भिन्नप्रातिपदिकान्त्येवर्णस्यैव ग्रहणादिति भावः । पर्युदस्यमानसमर्पक'सखि'शब्देन तदन्तविधिस्तु दुर्लभः । विशेष्याऽसन्निधानात् । शब्दरूपविशेष्यमादाय तदन्तविधिस्तु न, नियामकाऽभावात् । तस्याऽतिप्रसक्तत्वाच्च । कार्यकालपक्षेऽङ्गरूपविशेष्यसन्निधानेऽपि, नञैकार्थीभावाऽऽपन्नस्य[4] तदन्वयो वक्तुमशक्यः । ( अत[5] एव 'सुसखेरि'त्यादि सिद्ध्यति ) इति ध्येयम् ।

---

१ 'आचारक्विबन्तस्य भाष्ये' क. पाठः । 'आचारक्विबन्तप्रकृतिककर्तृक्विबन्तस्य' ख. पाठः । 'क्विबन्तप्रकृतिककर्तृक्विबन्तस्य' ग. पाठः ।

२ 'विभक्तिविपरिणामेन' ख. ग. पाठः ।

३ 'युभ्यां शेषस्य विशेषणात्' ग. पाठः ।

४ 'आपन्नस्य निष्कृष्य तदन्वयो' ख. ग. पाठः । ५ क. कुण्डलितो ग. पाठः ।

ननु 'यस्येति चे'ति सूत्रे भाष्ये[1]'इवर्णस्य ईति किमुदाहरणमि'त्युक्त्वा, 'दाक्षी' इत्यादीनां सवर्णदीर्घणाऽन्यथासिद्धिं निरूप्य, इदं तर्हि 'अतिसखेरागच्छति' । 'अत्र यदि लोपो न स्यात्तदोपसर्जनह्रस्वत्वे कृतेऽपि, दीर्घस्य पूर्वाऽन्तवद्भावेन सखिशब्दत्वात् 'असखी'ति घिसंज्ञाप्रतिषेधः प्रसज्येत । लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोष' इत्युक्तम्[2] । तत्कथं पर्युदासो व्याख्यायते ? । तस्मिन्हि विशिष्टस्य[3] सखिभिन्नत्वेन घिसंज्ञा निर्बाधैवेति भाष्यमसङ्गतं स्यात् । यद्वा पर्युदासेऽपि 'अत्वसन्तस्ये'[4]ति सूत्रेऽधातोरित्येतद्घटकधातुपदस्य 'पिण्डग्र' इत्यादिसिद्ध्यर्थं धात्ववयवे इव, सखिशब्दस्य तदवयवे लक्षणामाश्रित्य, 'सख्यवयवभिन्नाऽवि'त्यर्थो वाच्यः । घिसंज्ञायां वर्णसंज्ञापक्ष एव युक्तः । अत एव 'घ्यन्तादजाद्यदन्तं विप्रतिषेधेने'ति वार्त्तिकव्यवहारः । एवं च 'शोभनस्य सख्युः सुसखेरि'ति वक्ष्यमाणमयुक्तम् । न चेकारलोपेऽपि लिङ्गविशिष्टपरिभाषया दोषः । कार्यकालपक्षे 'घेर्ङिती'त्यादिभिरेकवाक्यतया विभक्तौ लिङ्गविशिष्टाऽग्रहणात्' । तस्यो[5] अनित्यत्वाच्च । 'ख्यत्यादि'तिसूत्रे 'किमर्थं विकृतनिर्देशः ? । न 'सखिपतिभ्यामि'त्येवोच्येत ? । गरीयांश्चैव निर्देशः स्यात्, इह च स्यात्-'अतिसखेरागच्छती'ति । अत्र ङ्यन्तप्रकृतिक एवाऽयम् । लक्षणप्रतिपदोक्तपरिभाषामनाश्रित्येदं, विहितविशेषणाऽनाश्रयणवत् । तदाश्रये तु वक्ष्यमाणे 'सख्यु''र्लून्युरि'त्यादावव्याप्तिरेव दोषः, 'भूपतेरि'त्यादावतिव्याप्तिरपीति न तद्विरोधोऽस्य भाष्यस्य ।

( यत्तु[6] 'विहितविशेषणाऽऽश्रयणा'द्भूपतेरि'त्यादौ न दोष' इति कैयटः ।

---

१ 'भाष्ये' इति ग. नास्ति ।

२ 'इत्युक्तं भाष्ये' ग. पाठः ।  ३ 'शिष्टस्य' ख. पाठः ।

४ 'अत्वसन्तस्येति' इत्यारभ्य 'धात्ववयवे इव' इत्यन्तः पाठो ग. नास्ति ।

५ 'तस्या अनित्यत्वाच्च' इति ग. नास्ति ।  ६ क. नास्ति ।

तन्न । सिद्धान्ते फलाऽभावात् । तदन्तसंज्ञापक्षेऽपि 'असखी'ति घ्योरेव विशेषणम् । अवाऽन्तरवाक्याऽर्थबोधोत्तरमेव तदन्तविधिप्रवृत्तेः) । तदन्तसंज्ञापक्षे ततस्तदन्तविधिः, 'उतश्च प्रत्ययादि'तिवत् । तच्च सख्यवयवभिन्नत्वेनैव । तदन्तविधिस्तु शेषपदार्थविशेषणतया बोध्यः । तत्प्रत्याख्यानेऽपि शब्दरूपं विशेष्यमादाय पूर्वसाहचर्यादिति चेत् ।

सत्यम् । प्रकृतसूत्रस्थहरदत्तग्रन्थाऽनुरोधेन मूलस्य सत्त्वात् । अत्र तत्त्वं महद्भिर्निर्णयम् ।

मत्यै इति । न चाऽनवकाशत्वान्नदीसंज्ञैव भविष्यतीति वाच्यम् । 'आ कडारात्परं कार्यमि'ति पाठे समावेशसम्भवात् । तद्धि पूर्वयाऽनवकाशया बाधे प्राप्ते परस्या विधानार्थम्, न तु पूर्वाबाधनाऽर्थम् । एवं च यत्र पराऽनवकाशासमावेश इष्टस्तत्र विपरीतपाठेन निर्वाहः कार्य एतत्पक्षे । कार्यं चाऽत्र प्रकरणात्संज्ञैव । 'परा संज्ञे'ति वक्तव्ये 'परं कार्यमि'त्युक्तिस्तु 'विप्रतिषेधे' इत्युत्तरसूत्राऽर्था । अत एव 'वर्णयोर्नदीसंज्ञे'ति पक्षे 'हे प्रियवात्सी३के'त्यत्र कप्,'गुरोरनृत' इति प्लुतश्च सिद्ध्यति । अत एव विश्च ना च विनरौ । तावाचष्टे विनयति । 'प्रविनय्य गत'इत्यादौ 'ल्यपि लघुपूर्वात्' 'द्वन्द्वे घी'तिसूत्राभ्यामयादेश-पूर्वनिपातसिद्धिः । इदमेव चाऽस्मिन्प्रकरणे संज्ञानां बाध्यबाधकभावस्य ज्ञापकम् । तेनाऽनवकाशया सावकाशा बाध्यते । द्वयोस्तु सावकाशयोर्विप्रतिषेधे परया पूर्वेति बोध्यम् । तथा च नदीत्वादाडागमे, घित्वाच्च गुणे, 'मतयै' इति स्यादिति भावः ।

---

१ 'तदन्तसंज्ञापक्षेऽप्येतद्भाष्यप्रामाण्यात् घिशब्दस्य तदन्तविधिप्रवृत्तेः । तच्च सख्यवयवभिन्नत्वमेवेति चेत्सत्यम् । प्रकृतसूत्रस्थहरदत्तग्रन्थानुरोधेन' इति ग. च. पाठः ।

२ 'तदन्तसंज्ञापक्षे ततस्तदन्तविधिः' इति ख. नास्ति ।

३ 'ननु यस्येति चेति'(४६६ पृष्ठे) इति शङ्काग्रन्थस्य इदमुत्तरम् ।

ननु 'एका संज्ञे'त्येव पाठो युक्तः। पूर्वपाठे 'पार्श्वमि'त्यस्याऽसिद्ध्यापत्तेः। पर्श्वा णसि, भत्वाऽपवादतया 'सिति चे'ति पदत्वे प्राप्तेऽनेन[1] भत्वापत्तावोर्गुणाऽऽपत्तेः। पदत्वन्तु 'लोपः शाकल्यस्ये'तिलोपप्रवृत्त्या चरितार्थमित्यभिप्रेत्याऽऽह—एकसंज्ञेति। तथा चाऽनवकाशत्वात्स्त्रियां ङिति नदीसंज्ञैव भविष्यतीति भावः।

यत्तु 'परं कार्यमि'ति पाठेऽपि शेषग्रहणं व्यर्थमेव, नदीसंज्ञावचनसामर्थ्येन घिसंज्ञाबाधात्। ह्रस्वलक्षणनदीसंज्ञायाः प्रत्ययाऽपेक्षत्वेन बहिरङ्गत्वादन्तरङ्गायां घिसंज्ञायां सत्यां 'घेर्ङिती'ति गुणे, ह्रस्वाऽभावात्, नदीसंज्ञा निर्विषया स्यादि'ति। तन्न। भूतपूर्वगत्याश्रयणेन चारितार्थ्यसम्भवात्।('एका संज्ञे'ति पाठेन फलैक्याय बाधकल्पनमेवोचितमि'त्यन्ये)।[2]

अधिकारादिति। अत्र यद्वक्तव्यं तदुक्तमा कडारसूत्रे। स्पष्टार्थमिति[3]। 'तदन्तसंज्ञे'ति भाष्यनये स्पष्टतया तदन्तविधिलाभाऽर्थमित्यर्थः।

मात्रे इति। न च 'ऋतो ङी'ति नियमाद्गुणाऽभावे न दोष इति वाच्यम्। 'पित्रे'त्यादौ 'ना'भावस्य दुर्वारत्वात्। 'यू'ग्रहणाऽनुवृत्तावेव तात्पर्यग्राहकत्वस्योचितत्वाच्च।

आङो ना। ('ऊरुया' 'धृष्णुये'त्यादौ प्रकृतिविशेष-सुब्विशेषसापेक्षनाभावापेक्षयाऽन्तरङ्गत्वात्पूर्वं 'सुपां सुलुगि'ति यादेशे कृते, नादेशो न, भ्रष्टावसरत्वादित्याहुः)।

---

१ 'प्राप्ते पुनरनेन' ग पाठः।

२ क. नास्ति। ख. ग. पाठः।

३ इतोऽग्रे—'अत्र सूत्रे करणं स्पष्टार्थम्' इति ख. पाठः। 'पतिः समासे' इत्येतदर्थमावश्यकमिति तत्रैव निरूपयिष्यामः' इति ख. ग. पाठः।

४ क. कुण्डलितो ग. पाठः। ५ 'इत्याहुः' इति क. नास्ति।

'पुंसी'ति तु नोक्तम् । 'अमुना कुलेने'त्यसिद्ध्यापत्तेः । न च नुमेष्ट-सिद्धिः । मुत्वस्याऽसिद्धत्वेन नुमोऽप्राप्तेः । नाऽऽदेशे तु मुत्वं नाऽसिद्धम् । 'न मु ने' इति निषेधात् । स[1] हि 'न मु टादेश'इतिवार्त्तिकस्वारस्येन नादेशे एव । एतेन 'तन्त्रेण नादेश-नकारयोर्विषये तौ प्रति, अन्यं प्रति च, मुत्वमसिद्धं नेति तदर्थ' इत्यपास्तम् । किञ्च [ 'नन्वाङो[2] नुट् पुंसीति ( 'नुमाङि[3] पुंसी'ति वा ) सूत्रं कार्यम् । 'न मु ने' इत्यस्य चाऽकारस्योच्चारणार्थतया 'नकारे कर्त्तव्ये' इत्यादिरर्थः । न च नपुंसके 'अमुने'त्याद्यसिद्धिः । 'इकोऽची'ति नुमैव सिद्धेः । ( न च[4] 'प्रियत्रि'-शब्दे नाभावे हलादिविभक्तित्वा'त्षट्त्रिचतुर्भ्य'इति विभक्तेरुदात्तत्वं प्राप्नोति, नुमि तु नेति, कथं 'नुमाङि पुंसी'ति न्यासः, कथं वा नपुंसके नुमेष्टसिद्धिरिति वाच्यम् । तस्य गौणेऽप्रवृत्तेः । स्पष्टं चेदं 'चतुरः शसी'ति सूत्रे भाष्ये ) । न च मुत्वस्याऽसिद्धत्वेनेनादेशे, गुणे, नुमादे-रप्राप्तिः । नकारविषये तं प्रति, अन्यं प्रति च, मुत्वाऽसिद्धत्वाऽभावस्य 'न मु ने' इत्यनेन बोधनात् । अत एव 'न मु ने' इति सूत्रं चरितार्थम् । यथान्यासे चाऽमुनेत्यादिसिद्धिः । अन्यथा इनादेशे गुणेऽसिद्धिः स्पष्टैव ।

न[5] चैवमपीनादेशगुणयोः संभावितत्वेनाऽजादिविभक्तिपरेगन्ताङ्गरूप-निमित्तविनाशसम्भावनेन, पुंसि च घ्यन्तरूपनिमित्तविनाशसम्भावनेना-ऽमुनेत्यसिद्धिरिति वाच्यम् । यथान्यासेऽपि दोषात् । 'न मु ने' इतिसूत्रा-रम्भसामर्थ्यात्परिभाषाऽप्रवृत्तिरिति तूभयोः समानमिति चेन्न ] । 'अमुष्मै कुलाय' 'अमुयोः' 'अमू कुले' इत्याद्यसिद्ध्यापत्तेः । 'न मु ने' इति सूत्रविषये

१ 'स हि न मुटा' इत्यारभ्य 'इत्यपास्तम्, किञ्च' इत्यन्तः क. पाठः ।

२ 'इति चेन्न' इत्यन्तोऽयं क. कुण्डलितः ख. ग. पाठः । ३ क. नास्ति ।

४ ख. ग. पाठोऽयं नुम्न्यासविषयः । क. तु नास्ति ।

५ 'न चैवमपि' इत्यारभ्य 'उभयोः समानम्' इत्यन्तः क. कुण्डलितो ग. पाठः ।

पूर्वं विभक्तिनिमित्तकार्याऽप्रवृत्तौ, णुत्वे, तस्य नकारविषये कमपि प्रत्यसिद्धत्वाऽभावेन, विभक्त्यादेशं प्रत्यसिद्धत्वेऽपि वा, स्मैभावात् परत्वेन नुमापत्तेः । अन्त्ययोरप्येत्वस्याऽप्रवृत्तौ, णुत्वे, नुमि चाऽनिष्टं स्पष्टमेव । किञ्च[1] गौणेऽपि 'षट्त्रिचतुर्भ्य' इत्यस्य प्रवृत्तिरि'ति मते 'प्रियत्रिणा कुलेने'त्यत्र तत्स्वरसिद्धये नपुंसकेऽपि परत्वान्नाभाव आवश्यक इति दिक् ।

**आङ्ितीति** । ङ्कारविशिष्टा[2] संज्ञा, न त्वस्य ङस्येत्त्वम् । अत एव 'हरिणे'त्यादौ न गुणः । एवमौङ आप इत्यत्रापि बोध्यम् ।

**घेर्ङिति** । अत्र 'सुपि चे'त्यतः 'सुपी'ति वर्त्तते । 'पट्वी'ति तेन सिद्धम् । अत्रेत्संज्ञकङ्कारादावित्यर्थ इति 'औङ आप'इति सूत्रस्थभाष्ये स्पष्टम् । 'सुपां सुलुगि'ति सूत्रभाष्ये तु 'आङ्याजयारामुपसङ्ख्यानमि'ति विभक्ते-राङादेशे, 'प्रवाहवे'त्यत्र गुण उपन्यस्त इति बोध्यम् ।

ननु 'घेर्ङी'त्येव सूत्रमस्तु । 'ङकारादा'वित्यर्थेनाऽदोषात् । आङा-देशस्तु 'ङा' इत्येव वक्तुं शक्यः । न च 'आण्नद्या' इत्यादौ षष्ठ्यर्थतया विपरिणामेन 'यस्मिन्विधिरि'त्यस्याऽप्रवृत्तावर्थाऽसङ्गत्यापत्तिः, तत्प्रवृत्तौ स्वरूपतः सप्तम्या एव निमित्तत्वमित्यर्थस्य 'औङ आप' इति सूत्रे भाष्ये ध्वनितत्वादिति चेन्न । 'बहुश्रेयस्यामि'त्यादावामि 'आण्नद्या' इत्यस्या-ऽनापत्तेः । ङकारादित्वस्याऽल्विधित्वेन स्थानिवत्त्वाऽयोगात् । तथा च नुडापत्तिः । इद्ग्रहणे त्वनुबन्धकार्यत्वात्स्थानिवत्त्वं स्पष्टमेवेति दिक् ।

**ङसि** । इह एङो द्वित्वेऽपि यथासङ्ख्यं न । अस्वरितत्वात् । 'ङसोरि'त्येव सिद्धे 'ङसि'ग्रहणं चिन्त्यप्रयोजनम् ।

**अच्च घेः** । 'इदुद्भ्यामि'ति, 'ङेरि'ति, 'औदि'ति च पदत्रयमनुवर्त्तते

---

१ 'किञ्च गौणेऽपि' इत्यारभ्य 'नाभाव आवश्यकः' इत्यन्तः क. पाठः, ख. ग. नास्ति ।

२ 'ङकारविशिष्टा' इत्यारभ्य 'इत्यत्रापि बोध्यम्' इत्यन्तः क. ग. पाठः ।

इत्याशयेनाऽऽह—इदुद्भ्यामित्यादि । 'घेरुत्तरस्ये'ति तु नोक्तम् । आवृत्तौ मानाऽभावेन, तस्य षष्ठ्यन्तत्वेन च तथाऽन्वयाऽसम्भवात् ।

इदुद्भ्यामिति किम् ? । घेः परस्य ङेरौदेवेति, ङिप्रकृतेर्घेरौदेवेति वा-ऽर्थो मा भूदिति ।

औतस्तकार उच्चारणार्थो, न स्वरितत्वाऽर्थः, 'स्तीर्णे बर्हिषि समिधानेऽग्ना'वित्यादौ स्वरितत्वाऽदर्शनात् ।

नन्वौतः स्वरितत्वेऽपि नाऽग्नावित्यत्र स्वरितश्रवणम्, अग्निशब्द-स्याऽन्तोदात्तत्वेन 'एकादेश उदात्तेनोदात्त' इत्यनेनोदात्तत्वादिति चेन्न ।

वृत्तौ 'अनुदात्तस्ये'त्यस्य तत्राऽनुवर्त्तितत्वात् । 'अनुदात्तं पदमेक-वर्जमि'ति परिभाषया औकारस्वरितत्वमादायाऽग्निशब्दस्य सर्वाऽनु-दात्तत्वाच्च । अत एव 'औपगवत्वमि'त्यादौ त्वप्रत्ययोदात्तत्वं निमित्ती-कृत्याऽणन्तस्य निघात इति स्पष्टं भाष्यादौ । न च 'तस्य लोप' इति सूत्रस्थभाष्यरीत्या, 'दिव औत्'सूत्रे उपपादयिष्यमाणाऽस्मद्रीत्या चो-च्चारणाऽर्थानामपीत्संज्ञकत्वेन दोषः । न च 'न विभक्तावि'तीत्त्वनिषेधा-ऽऽपत्तिः, इत्संज्ञाप्रवृत्तिकाले विभक्तित्वाऽभावादिति वाच्यम् । 'प्रत्यया-

१ 'घेः परस्य' इत्यारभ्य 'अर्थो मा भूदिति' इत्यन्तः क. पाठः । 'इदुद्भ्यामिति किम् ? । ङेरेवाऽकारो मा भूदिति । यत्तु 'ङित् घेरि'त्येव सूत्रं कार्यम् । ङितीति टिलोपेन रूपसिद्धेरिति । तन्न । विंशतौ तिलोपापत्तेः' इति तु ग. पाठः ।

२ 'ङेरेवाऽकारो, घेरेवौकारो वा मा भूदिति' ख. पाठः । ३ ग. नास्ति ।

४ 'स्तीर्णे' इत्यारभ्य 'इत्याहुः' (४७२ पृष्ठे ) इत्यन्तः क.कुण्डलितः पाठः ।

५ इतः परम्—'औदित्यादेस्तपरसूत्रबलेन संज्ञात्वात्संज्ञायां तित्त्वम्, न च तत्र तत्प्रयुक्तं कार्यम्, यत्र च संज्ञिनि कार्यं, न तत्र तित्त्वम् । एवञ्च 'तित्स्वरित'मित्यस्य साक्षात्तिति चारितार्थ्येनाऽऽदेशेऽप्रवृत्तेरदोषात् । 'तिति

ऽप्रत्यययोरि'त्येव सिद्धे पुनः 'तिति प्रत्ययग्रहणं कर्त्तव्यमि'ति वार्त्तिकेन औपदेशिकप्रत्ययत्ववत्येव तत्प्रवृत्त्या, नाऽत्र स्वरितत्वप्रवृत्तिरितीत्संज्ञकत्वेऽपि न दोषः।

किञ्चाऽऽदेशेषु तकारस्य दकारस्थाने चर्त्त्वेनिष्पन्नतया, दित्त्वस्यैव सत्त्वेन, न स्वरप्राप्तिरित्याहुः। 'अदि'ति वा तपरत्वमप्येवम्। न च 'बुद्धात्रि'त्यादौ टान्निवृत्त्यर्थम्। सन्निपातपरिभाषया तद्वारणस्य 'कृन्मेजन्त'सूत्रे भाष्यादौ कृतत्वात्। किञ्च भिन्नकालव्यावृत्त्यर्थेन तपरत्वेन भाविदीर्घव्यावृत्तेरिव, टाबभावस्य वाच्यवृत्त्योपपादनमशक्यम्। एवं च तपरकरणाट्टापा सह दीर्घो मा भूत्, टाप्तु स्यादेव।

न च 'ज्ञोऽविदर्थस्ये'ति प्रकरणेन समासबाध इवाऽनेन टापोऽपि बाध इति वाच्यम्। 'प्रतिपदविधाना षष्ठी न समस्यते' इतिवार्त्तिकाऽनुरोधेन तत्र तथा कल्पनेऽपीह तथा कल्पने मानाऽभावादित्यग्रे निरूपयिष्यामः। अत एव भाष्ये औकारं ङितमाश्रित्याऽऽदिति प्रत्याख्यातम्—'अथ वा ङिदौकारः करिष्यते, 'औ ङिच्च घेरि'ति ग्रन्थेन। अत एव न्यासप्रदर्शनभाष्ये 'औदि'ति तकाराऽनुच्चारणम्। न च ङित्त्वे विंशतौ

---

प्रत्ययग्रहणं कर्त्तव्यम्। इह मा भूत् द्युभि'रिति'तित्स्वरित'मितिसूत्रस्थभाष्यन्तु प्रत्ययग्रहणाऽभावे इत्संज्ञायां परम्परया स्वरेण फलवत्त्वं स्यादिति 'कृत्वा चिन्ता' न्यायेन नेयम्। प्रत्ययाऽप्रत्ययपरिभाषाऽनाश्रयणेनैवैतदनाश्रयणेनापि तत्प्रवृत्तिरिति वा बोध्यम्। किञ्च संज्ञापि तकारानन्तरिकैव। न तु तितः। संज्ञाया इव, तस्यापि प्रयोगाऽसमवायित्वेनेत्संज्ञायां मानाऽभावात्। फलाऽभावाच्च। 'तस्य लोप' इति सूत्रस्थं भाष्यन्तु प्रौढ्येत्याहुः। यदि त्वौदित्यादौ फलाऽभावात्तपरसूत्राऽप्रवृत्त्या नास्य संज्ञात्वमित्युच्यते, तदा प्रत्ययाऽप्रत्यययोरित्येव सिद्धे' इति ग. पाठः।

1 'ङित् औ करिष्यते' इति पाठान्तरम्।

तिलोपाऽऽपत्तिः। 'टेर्डिति' 'ति विंशतेस्तद्धिते नः' 'अह्नष्टखोरेवे'ति न्यासे दोषाऽभावादित्याहुः ।

**अनङ् सौ ।** 'सोर्डे'त्येव सिद्धेऽनङ्विधानफलम् (हलन्तशेषे[१]) उशनस्शब्दे निरूपयिष्यामः । 'सावि'ति न सप्तमीबहुवचनम् । 'असम्बुद्धावि'ति पर्युदासात् । ङकारोऽन्त्यादेशार्थः । नकाराऽकारस्तूच्चारणार्थः ।

**अलोऽन्त्यात् ।** अवध्यवधिमतोः साजात्यमभिप्रेत्याह—**पूर्वो वर्ण इति ।** अत एव 'शिष्ट' इत्यादौ 'शा' इति समुदायस्य 'शास इदि' तीत्त्वं न । पञ्चम्यन्ताऽल्ग्रहणाच्च शस्य न ।

**सर्वनामस्थाने ।** 'नोपधाया' इत्यस्य, 'ढ्लोपे' इत्यतो दीर्घपदस्य चाऽनुवृत्तिमभिप्रेत्याह—**नान्तस्येत्यादि ।**

**अपृक्त ।** 'एक'शब्दोऽसहायवाची, सङ्ख्यावाची वा । 'अभैत्सीदि'त्यत्र सिचो लोपस्तु न । 'सुती'तिसाहचर्याद्विभक्तेरेव तत्र ग्रहणात्[२]।

'अलि'त्येव सिद्धे[३] 'एक'ग्रहणं वर्णग्रहणे जातिग्रहणज्ञापनार्थम् । तेन 'धिप्सती'त्यादिसिद्धिरिति मूले एव स्फुटी भविष्यति । न च ज्ञापितेऽपि कथमेकग्रहणं चरितार्थम् । यावताऽल्ग्रहणसामर्थ्यात्संज्ञाविधानसामर्थ्याच्चैकग्रहणाऽभावेऽप्यल्रूपस्यैव भविष्यतीति वाच्यम् । 'सामर्थ्येन समुदायस्यैव संज्ञा, नाऽल्रूपस्ये'त्यर्थस्याऽपि कल्पयितुं शक्यत्वात् । क्विबादौ च संज्ञाऽव्यावृत्तिः फलम् । हल्ङ्याप्सूत्रे सोः 'अपृक्तमि'ति विशेषणं न सम्बध्येतैव, सामर्थ्यात् । तिस्योर्हल्मात्रस्याऽपृक्तत्वन्तु स्थानिवत्त्वेन भविष्यति । 'वेरपृक्तस्ये'ति सूत्रं तु 'दर्विरि'त्यादावेव

---

१ 'स्तीर्णे बर्हिषि' ( ४७१ पृष्ठे ) इत्यारभ्य 'इत्याहुः' इत्यन्तो ग्रन्थो लघुशब्दरत्ने स्थापितो नागेशेनेति क. पुस्तके तेन कुण्डलनया निःसारितः ।

२ ग. पाठः ।

३ 'अलित्येकत्वविवक्षयैव सिद्धे' ख. ग. पाठः ।

भविष्यतीति शङ्कावारणाऽर्थत्वेन चारितार्थ्यादित्याहुः । 'निपात एके'त्यनेनैतदर्थज्ञापने, तत्प्रयुक्तजातिग्रहणवारणायेदमावश्यकमेव । अस्य ज्ञापकत्वे त्वनयैव रीत्या तदावश्यकमिति बोध्यम् ।

'अपृक्त' इत्यत्र पुंस्त्वमविवक्षितम् । अत एवा'ऽपृक्तं ह्'लिति नपुंसकनिर्देशः सङ्गच्छते । अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धे, संज्ञाविधानं विस्पष्टाऽर्थमित्याहुः ।

हल्ङ्याप् । 'दीर्घादि'ति ङ्यापोरेव विशेषणम्, न तु हलः, असम्भवात् । 'सुतिसी'ति पृथक्पदम् । 'परमिति[1] । 'तस्मादित्युत्तरस्ये'ति जाग्रति विहितविशेषणाऽसम्भवादिति भावः ।

केचित्तु विशेष्याऽसन्निधानाद्धलंशे तदन्तग्रहणाऽसम्भवेन, तत्साहचर्यात् ङ्याबंशेऽपि तदन्ताऽग्रहणेन, 'ह्लो[2], ङ्यापश्च परमि'ति वृत्तिरुचितेत्याहुः ।

हलिति । तस्य सुतिसिरूपत्वं स्थानिवद्भावेन बोध्यम् । लुप्यते इति । अनुवर्त्तमान'लोप'शब्दस्य भावसाधनत्वेऽपि, 'हलि'ति प्रथमान्तसामाना-

१ 'परमिति । 'विहितविशेषणत्वे तु 'बहुश्रेयसी'ति न सिद्ध्येत् । तत्र स्त्रीप्रत्ययस्योपसर्जनत्वेन तदादिनियमप्रवृत्तेः, समुदायस्य ङ्यन्तत्वाऽसम्भवात् । अवयवस्य ङ्यन्तत्वेऽपि, ततः सोर्विहितत्वाऽभावात् । परत्वं त्ववयवङ्यन्तादस्त्येव । 'तस्मादित्युत्तरस्ये'ति जाग्रति विहितविशेषणाऽसम्भवाच्चेति भावः । अत एव 'ईयसश्चे'ति सूत्रे, 'गोस्त्रियोरि'ति सूत्रे च भाष्येऽविभक्तिक-'बहुश्रेयसी' इति प्रयोगः संगच्छते । तत्रत्यकैयटस्तु प्रामादिक इत्यवधेयम् । 'या' 'सा' 'के'त्यादावव्याप्तेश्च । न च हलन्ताद्विहितत्वेन निर्वाहः । 'यः' 'सः' कर्त्ते'त्यादावतिव्याप्त्यव्याप्तेरिति[1] दिक् ।' इति ख. ग. पाठः ।

२ 'हलः परं, ङ्यापश्च परम्' ख. पाठः ।

---

1 अत्र कर्त्तेत्यत्राऽव्याप्तिः, 'यः, सः' इत्यादावतिव्याप्तिरिति योज्यम् ।

धिकरण्यात्कर्मसाधनत्वमिति भावः। यद्यपि 'तस्मादित्युत्तरस्ये'ति परिभाषणात्षष्ठ्यन्तताऽपि सम्भवति, तथाऽपि बहुषु पदेषु विभक्तिविपरिणामकल्पनाऽपेक्षयागन्तुक'लोप'शब्दे एवाऽर्थाऽन्तरकल्पनमुचितमिति भावः।

हल्ङ्याब्भ्यः किमिति । 'राम' इत्यादौ दीर्घान्तत्वाऽभावाद्दोष इति प्रश्नः।

दीर्घात्किमिति । ङ्यापोर्दीर्घत्वाद्विशेषणं व्यर्थमिति प्रश्नः। निष्कौशाम्बिरिति। न च 'सु-ति-सीतिप्रत्ययैरङ्गाऽऽक्षेपात्, उपसर्जनस्त्रीप्रत्यये तदादिनियमसत्त्वाच्चाऽङ्गस्य ङ्याबन्तत्वाऽभावेन नाऽत्र दोष इति वाच्यम् । आक्षेपे, आक्षिप्तस्य विशेष्यतया शाब्दाऽन्वयित्वे वा, मानाऽभावात्।

किञ्चैवमपि 'बहुश्रेयसी'त्यादिसिद्ध्यर्थं प्रत्ययग्रहणपरिभाषयाऽङ्गं विशेष्यमादाय, 'येन विधिरि'ति परिभाषया च 'टिड्ढाणञि'तिसूत्रे-'ऽणन्तान्तादि'तिवत्, 'ङ्याबन्तान्तादि'त्यर्थस्याऽऽवश्यकत्वेन, दीर्घग्रहणाऽभावे दोषस्य सत्त्वात्। 'माले'त्यादौ तु व्यपदेशिवद्भावेन सिद्धिः। श्रविष्ठासु जातः 'श्रविष्ठ' इत्यादौ तद्धितलुकि, स्त्रीप्रत्ययलुकि च, प्रत्ययलक्षणेनाऽऽबन्तत्वात्, आपः परत्वाच्चाऽतिव्याप्तिवारणार्थं दीर्घग्रहणस्याऽऽवश्यकत्वाच्च।(न च गङ्गीयतेः क्विपि 'गङ्गी'रित्यत्र ईकारस्य स्थानिवद्भावेन

१ इतोऽग्रे–'सखेति। नान्तलक्षण उपधादीर्घः। यद्यपि 'सख्युरसम्बुद्धावि'ति सोर्णित्त्वेन परत्वेन'अत उपधाया' इति वृद्धिरुचिता, एवं चाऽत्रैव तल्लख उचितस्तथापि फले विशेषाऽभावात्कृताऽकृतप्रसङ्गित्वेन दीर्घस्य नित्यत्वाच्च, 'सख्युरसम्बुद्धावि'ति णिद्भावमुपजीव्य प्रवृत्तत्वेन वृद्धेर्बहिरङ्गत्वाच्च न दोष इत्याहुः'–इति ग. पाठः।

२ 'अङ्गस्य विशेष्यत्वेन येन विधि' ख. पाठः।

३ इतोऽग्रे–'अप्रातिपदिकेने'ति निषेधस्तु प्रत्ययविधिविषयः' इति क. कुण्डलितो ग. पाठः।

४ 'न च गङ्गीयतेः इत्यारभ्य 'ग्रहणाच्च' इत्यन्तः क. कुण्डलितः ख. ग. पाठः। मनोरमाशब्दरत्नस्थोऽयं ग्रन्थः।

आप्त्वाद्दीर्घत्वाच्चाऽतिव्याप्तिः, तथा अस्य स्त्री 'ई'। देवदत्तस्य ई-'देवदत्तेरि'त्यादावतिव्याप्तिरिति वाच्यम्। 'ङी-ई' 'आ-आ'विति प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानेनाऽदोषात्। [1]दीर्घग्रहणेनोपस्थितत्वादीकाराऽऽकाररूपस्यैव दीर्घस्य ग्रहणाच्च )।

'अपृक्तं किम्?। बिभर्त्ती'ति क्वाचित्कोऽपपाठः। विशिष्टस्याऽहल्त्वात्। 'सु-ति-सिरूपं हलि'ति सामानाधिकरण्येनैन मूले व्याख्यानात्। एवं चाऽपृक्तग्रहणं चिन्त्यप्रयोजनमेव। स्पष्टं चेदं भाष्ये।

( [2]ननु सुरां सुनोतीति सुरासुत्, तमाचष्टे इति ण्यन्तात्क्विपि 'सुराः' 'सुरासावि'त्यादौ सुनोत्यवयवसुलोपवारणाऽर्थं तत्। न च 'णौ चङ्य'तिसूत्रस्थभाष्यप्रामाण्येनगु[3]पधेभ्या णिज् नास्तीति कैयटादिभिः सिद्धान्तितत्वेन कथमत्र णिजिति वाच्यम्। तद्भाष्यस्य तेषां लुङि प्रयोगाऽभावमात्रकल्पनेनोपपत्तौ, सर्वथा णिजभावकल्पनस्य कैयटाद्युक्तस्याऽप्रामाणिकत्वादिति चेन्न। 'प्रत्ययाऽप्रत्यययोरि'ति परिभाषया, परस्परसाहचर्यणाऽनुनासिकोकारपाठेन च विभक्तेरेव सोर्ग्रहणेनाऽदोषात्।

वस्तुतो 'गङ्गीरि'त्यादीनामभिधाने दृढतरमानं चिन्त्यम्।

[4]अत्र वदन्ति,-'ङ्यापोरि'ति सोरेव विशेषणम्, न तु तिस्योः, व्याख्यानात्। तेन 'गङ्गा'शब्दादाचारक्विबन्ताल्लङि, तिप्सिपोः, शपि, 'अगङ्गादि'त्यादौ, कस्य स्त्री की, ततः, ङ्गाशब्दाच्चाऽऽचारक्विबन्तात् यङ्लुकि, लङि, 'अचेकेत्' 'अजाङ्गादि'त्यादौ च लोपो न। न च 'अगङ्गा'दित्यादौ शपा व्यवधानम्। एकाऽऽदेशे कृते तस्य पूर्वाऽन्तवत्त्वेन

---

१ 'दीर्घ' इत्यारभ्य 'ग्रहणाच्च' इत्यन्तोऽयं ग. नास्ति। क. तु कुण्डलितः।

२ क. कुण्डलितः ख. ग. पाठः।

३ 'इकारोकारोपधेभ्यो' इति ख. पाठः। 'इदुदुपधेभ्यो' इति ग. पाठः।

४ 'अत्रेदं चिन्त्यम्' ग. पाठः।

५ 'पूर्वान्तत्वेन' इति क. ग. पाठः।

ग्रहणात् । न च स्थानिवद्भावः । अपूर्वविधित्वात् । न चैवं 'बुद्धावि'त्यादौ सन्निपातपरिभाषया टाब्नेति भाष्योक्तं विरुध्यते इति वाच्यम् । दीर्घ-प्रवृत्त्युत्तरमन्तादिवद्भावप्रवृत्तावपि, टाबुत्पत्तिकालिकाऽऽनन्तर्यविघातस्य तेन वारयितुमशक्यत्वात् । यद्वा[1] 'अचेकेदि'त्यादावीकाररूपत्वाऽऽभावात् भाष्यमते न प्राप्तिः । सूत्रमतेऽपि दीर्घग्रहणेनोपस्थितत्वादीकाराऽऽकार-रूपस्यैव दीर्घस्यैव ग्रहणान्न दोषः । ( एवञ्च[2] गङ्गामिच्छति गङ्गीयति । गङ्गीयतीति गङ्गीरित्यादौ न सुलोपः ) । एवं चेकाररूपङ्यन्तात्तिस्योर-सम्भवेन, तत्साहचर्यादापोऽपि सोरेव लुँक्[3] । अत एव 'यदि पुनरयम-पृक्तलोपः संयोगाऽन्तलोपो विज्ञायेत, द्विहल्पृक्तग्रहणं, तिस्योश्च ग्रहणं न कर्त्तव्यं भवती'त्येतत्सूत्रे उपक्रमस्थं भाष्यं सङ्गच्छते । यदि ङ्याब्ग्रहणं तिस्योरपि विशेषणं स्यात्कथं तिस्योर्ग्रहणस्याऽकर्त्तव्यतां ब्रूयादित्याहुः ।

तदेतत्सर्वमीदृशानामभिधानसत्त्वे युक्तम् । न च हल्ग्रहणाऽभावे 'राजे'त्यादौ सोः संयोगान्तलोपे, तस्याऽसिद्धत्वान्नलोपो न स्यादिति वाच्यम् । 'न ङिसम्बुद्ध्योरि'तिसम्बुद्धिग्रहणेन विभक्तिसंयोगाऽन्तलोपस्या-ऽसिद्धत्वाऽभावज्ञापनात् ।

'गोमाँनि'[4]त्यादौ तु नलोपो न । तलोपस्याऽसिद्धत्वबाधे माना-ऽभावात् । लक्ष्यभेदाच्च तत्र वारं वारं संयोगान्तलोपः । न च 'सावपि

---

१ 'यद्वा' स्थाने 'केचित्तु' इति ग. पाठः ।

२ 'एवञ्च' इत्यारभ्य 'न सुलोपः' इत्यन्तोऽयं ग. पाठः ।

३ एतदुत्तरं—'न च कीशब्दात्क्यजन्तात् क्विपि, आचारक्विपि, यङ्लुकि 'कौ लुप्त'मित्यस्याऽसार्वत्रिकत्वात्स्थानिवत्त्वेन गुणाऽप्रवृत्तौ, ईकाररूपङ्यन्ता-त्तिस्योः सम्भव इति वाच्यम् । यणो दुर्वारत्वात् । आचारक्विबन्ताद्यङ्लुक्-सत्त्वे मानाऽभावाच्चेत्याहुः' इति ग. पाठः ।

४ 'अत एव गोमानित्यादौ नलोपो न' इति ग. पाठः ।

पदमि'ति पक्षे तच्चारितार्थ्यम्[1]। तत्पक्षाऽऽश्रयणे प्रकृतेऽपि नलोपसिद्धेः। न च तत्पक्षाऽऽश्रयणे 'राजे'त्यादौ संयोगाऽन्तलोपस्याऽसिद्धत्वान्नलोपे, सो रुत्वविसर्गौ स्यातामिति वाच्यम्। उक्ताऽर्थज्ञापकेनाऽदोषात्[2]।

तथा हि-'न ङि'तिसूत्रे 'ङिसम्बुद्धयोरि'ति षष्ठी। अत एव ङौ नलोपनिषेधः सार्थकः। अन्यथा ङेर्लुका लुप्ततया तत्परत्वं दुरुपपादं स्यात्। न च 'न लुमते'ति निषेधाऽनित्यत्वान्न दोषः। तदपेक्षया षष्ठ्यन्ततया व्याख्यानस्यैव लघुत्वात्। एवं च सम्बुद्ध्यन्तप्रातिपदिकाऽन्तस्य नलोपनिषेधोऽनेन। न हि प्रथमं संयोगान्तलोपं विना सम्बुद्ध्यन्तं प्रातिपदिकं नान्तं लभ्यते। असिद्धत्वाऽभावं विना च प्रथमं संयोगाऽन्तलोपो दुर्लभः। न च 'हे ब्रह्मन्नि'ति नपुंसके नलोपनिषेधाय तदावश्यकम्, तत्र हि'स्वमोरि'ति लुगिति वाच्यम्। 'संबुद्धौ वा नपुंसकानां नलोपो वाच्य' इति वार्त्तिकसत्त्वेन फलाऽभावात्। तच्च 'ङिसम्बुद्धयो'रित्यस्य षष्ठ्यन्तत्वपक्षे विकल्पाऽर्थमावश्यकम्। न च 'वा नपुंसकानामि'त्येव भाष्ये पठितम्, सम्बुद्धिग्रहणं च सूत्रादेव सम्बध्यते इति, तदर्थं सम्बुद्धिग्रहणस्य चारितार्थ्यात्कथं ज्ञापकत्वमिति वाच्यम्। अत्र पाठेनोक्ताऽर्थज्ञापकत्वस्याऽपि सम्भवात्।

न[3] च सम्बुद्धिग्रहणस्य भाष्ये प्रत्याख्याततत्वेन ज्ञापकता न युक्ता[4]। सूत्रस्थङिग्रहणस्य, 'ङिसम्बुद्धयोरनुत्तरे'ति वार्त्तिकस्थसम्बुद्धिग्रहणस्य च प्रत्याख्यानेऽपि, सूत्रस्थस्य तस्याऽप्रत्याख्यानादित्यग्रे निरूपयिष्यामः। एवं च ज्ञापकं सुस्थम्[5]।

---

१ एतदुत्तरं 'ङिसम्बुद्धयोरिति षष्ठ्याश्रयणात्' इति ग. पाठः।

२ 'नलोपात्प्राक् संयोगान्तलोपः' इत्यर्थज्ञापकेन 'न ङिसम्बुद्धयोरि'त्यनेनेत्यर्थः। अत्र 'ज्ञापनेन' इति पाठः स्यात्।

३ 'एतेन' ग. पाठः। ४ 'न युक्तेति परास्तम्' ग. पाठः।

५ इतोऽग्रे—'एतेन 'राजे'त्यादौ सावपि पदत्वान्नलोपे कृते, सो रुत्वविसर्गौ स्यातामित्यपास्तम्। विभक्तिसंयोगान्तलोपस्याऽसिद्धत्वाऽभावज्ञापनेन

एतेन 'राजैधते' 'चक्रथत्र' 'राजाच्छत्त्र'मित्यादौ[1] वृद्धि-यण्-तुगादिकं न स्यात्। संयोगान्तलोपस्याऽसिद्धत्वादि'ति परास्तम्। विभक्तिसंयोगान्तलोपस्याऽसिद्धत्वाऽभावज्ञापनात्।

एतेन[2] 'अभिनोऽत्रे'त्यत्रोत्त्वं न स्यादित्यपास्तम्। 'संयोगान्तलोपो रोरुत्वे'इति सिद्धकाण्डे पाठाच्च। अत एव 'हरि'शब्दान्मतुपि 'छन्दसीर' इति वत्वे, नुमि, संयोगाऽन्तलोपे, 'मतुवसोरि'ति रुत्वे, उत्वे, गुणे, 'हरि वो मेदिनं त्वे'ति सिद्धम्। 'संयोगान्तलोपो रोरुत्वे' इत्यस्य विनिगमनाविरहात् 'नमुने' इतिवदुत्वे कर्त्तव्ये, कृते चेति व्याख्यानेन, 'एङः पदान्तादि'ति पूर्वरूपेऽपि, संयोगान्तलोपो नाऽसिद्धः। न चैवमपि 'रात्सस्ये'तिनियमेन 'अबिभर्भवानि'त्यत्र लोपाऽनापत्तिः। तत्र तकारस्याऽपि प्रश्लेषान्न दोष इत्यस्य भाष्य एवोक्तत्वात्।

कीर्त्तयतेर्यदि क्विब्विचौ स्तस्तदा 'कीरि'त्येव रूपम्। एवं वृतेर्यङ्लुकि 'अवर्वरि'त्येव। कीर्त्तयतेः क्विब्विचावेव न स्तः। वृत्धातोर्यङ्लुकि ईडभावे तिप्सिपोः प्रयोग एव नास्तीति[3] तत्त्वम्। तदुक्तं[4] भाष्ये—'यथाऽलक्षणमप्रयुक्ते' इति। 'अप्रयुक्ते लक्षणप्रवृत्त्यभावस्य योग्यते'ति तदर्थः।

---

परत्वात् पूर्वं संयोगान्तलोपस्यैव प्राप्तेः। न हि प्रथमं संयोगान्तलोपं विना सम्बुद्ध्यन्तप्रातिपदिकं नान्तं लभ्यते। 'ङिसम्बुद्ध्योरि'ति षष्ठीत्युक्तमेव' इति ग. पाठः।

१ 'राजैधते, अचका राज्यं, चक्रथत्र, राजाच्छत्रमित्यादौ वृद्धि-ढ्लोप-दीर्घ-यणतुगादिकं न स्यात्' इति ख. पाठः।

२ 'एतेन 'अचका राज्यमि'त्यादौ 'ढ्लोप' इति दीर्घो न स्यात्। 'अभिनोऽत्रे'त्यत्रोत्त्वं न स्यादित्यपास्तम्' ग. पाठः।

३ 'नास्तीत्यप्याहुः' ग. पाठः।

४ 'तदुक्तम्' इत्यारभ्य 'तदर्थः' इत्यन्तोऽयं पाठो ग. नास्ति।

नन्वेवं 'काष्ठशगेव नास्ती'ति 'परेश्च घाऽङ्कयोरि'तिसूत्रस्थभाष्य-प्रामाण्येन संयोगादिलोपप्राप्तियोग्य-काऽन्त-शब्दाऽभावेऽपि 'सुपीरि'-त्यादौ संयोगाऽऽदिलोपः स्यात्। पदान्तसंयोगाऽऽदिलोपस्य संयोगाऽन्त-लोपाऽपवादत्वात्। तथा च 'र्वोरुपधाया' इति दीर्घो न[1] स्यादिति चेन्न।

'तिप्यनस्तेः' 'सिपि धातो रुर्वे'ति सूत्राभ्यां धातुसम्बन्धिपदाऽन्तसस्य दत्व-रुत्वविधायकाभ्यां, 'क'साहचर्येण च, प्रकृतिप्रत्ययसम्बन्धिवर्णसंयोग-माश्रित्य पदे[2]ऽन्ते संयोगाऽऽदिलोपाऽप्राप्तेर्ज्ञापनेन, 'सुपीरि'त्यादौ दोषा-ऽभावा[3]त्। एतेन 'उखास्रदि'त्यादौ दत्वस्याऽसिद्धत्वात्संयोगाऽऽदिलोपः स्यादित्यपास्तम्। सिद्धकाण्डे 'वस्वादिषु दत्वमि'ति पाठाद्दत्वे कृते, तदप्राप्तेश्च।

नन्वपदान्तत्वाद्दत्वं न स्यादिति चेन्न। 'सावपि पदमि'ति पक्षा-ऽऽश्रयणात्। एष पक्षश्च हलन्तनपुंसके उपपा[4]दयिष्यते। न च काष्ठं

१ 'दीर्घो न स्यात्। तथा हर्यादिधातुभ्यो यङ्लुकि तिप्सिपोः संयोगान्त-लोपस्याऽसिद्धत्वेन 'लोपो व्योरि'ति लोपापत्तिः। यथान्यासेऽकृतव्यूह-परिभाषया परत्वान्नित्यत्वाच्च हल्ङ्यादिलोपप्रवृत्तौ, वल्परत्वाऽभावेना-ऽप्रवृत्तिः। प्रत्ययलक्षणन्तु न। वर्णाश्रयत्वादिति चेन्न' इति ग. पाठः।

२ 'पदान्तसंयोगादि' ख. पाठः।

३ इतोऽग्रे—'न च चकासादेः पचाद्यजन्तादाख्यानणिचि, ततः कर्त्तरि क्विपि, तत आचारक्विपि, लङि, अल्लोपणिलोपयोः स्थानिवत्त्वात्संयोगादिलोपा-ऽभावे, संयोगान्तलोपे, प्रागुक्तसूत्रद्वयं चरितार्थमिति वाच्यम्। शपा व्यव-धानेन संयोगाऽभावात्। लुक् तु दुर्लभः। लाक्षणिकत्वेन 'अदिप्रभृतिभ्य' इत्यत्र तेषामग्रहणात्। धातुग्रहणसामर्थ्येन 'सिपि धातोरि'त्यस्य नामधाता-वप्रवृत्तेश्च' इति ग. पाठः।

४ इतोऽग्रे—'यङ्लुकश्छान्दसत्वाद्धर्यादौ न दोषः। किञ्च विभक्तिसंयोगान्त-लोपस्याऽसिद्धत्वाऽभावज्ञापनान्न दोषः'—इति ग. पाठः।

तक्ष्णोतीति 'काष्ठतडि'त्यादौ 'स्कोरि'ति कलोपे कृते, सुलोपो न स्यात्, अपवादविषये उत्सर्गोऽप्रवृत्तेरिति वाच्यम् । अपवादस्याऽचारितार्थ्ये एव तदप्रवृत्तेः । अपवादप्रवृत्त्युत्तरं तत्प्रवृत्तौ बाधकाऽभावाच्चेत्याहुः ।

एवं च 'दीर्घान्ङ्याप: सोरि'ति सूत्रयितुमुचितम् । आकारेकारप्रश्लेषेण दीर्घग्रहणप्रत्याख्याने तु 'ङ्याप: सोरि'त्येवाऽस्तु ।

वस्तुतस्तु ज्ञापकसिद्धतत्तदानुमानिकवचनकल्पनाऽपेक्षया यथान्यासमेव लघु । किञ्च 'न ङिसम्बुद्ध्योरि'ति सप्तम्येव युक्ता । ङिग्रहणसामर्थ्याच्च 'न लुमते'त्यस्यैतद्विषयेऽनित्यत्वम् । एवं च[1] तदनित्यत्वमूलकमेव 'वा नपुंसकानामि'ति वार्त्तिकम् । एवं च ब्रह्मन्नाद्यर्थं सम्बुद्धिग्रहणस्याऽऽवश्यकत्वेन ज्ञापकाऽसम्भवः । अन्याऽपूर्ववचनकरणेन सिद्धप्रत्याख्यानन्तु न रमणीयम् । किञ्चैवं 'वस्वादिषु दत्वमि'ति न कार्यमित्यपरं लाघवम् । अधातुग्रहणेनैव दीर्घाऽभावसिद्धेः । इदमेवाऽभिप्रेत्य सूत्रशेषे भाष्ये 'तस्मादशक्यो हल्पृक्तलोपः संयोगाऽन्तलोपो विज्ञातुम् । न चेद्विज्ञायते, द्विहल्पृक्तग्रहणं, तिस्योश्च ग्रहणं कर्त्तव्यमि'त्युक्तम्[2] ) ।

सखेति । यद्यप्यत्रैव 'सख्युरसम्बुद्धावि'त्यादिलेख उचितस्तथाऽपि नान्तलक्षणदीर्घेणैव सिद्धेः, 'अत उपधाया' इत्यपेक्षया नित्यत्वेन तस्यैवौचित्याच्चाऽत्र नोक्तम् ।

सख्युः । 'इतोऽदि'त्यतोऽनुवृत्तं 'सर्वनामस्थाने' इति, 'असम्बुद्धा'-विति च 'गोतो णिदि'त्यतोऽनुवृत्त'णिदि'त्यनेन सामानाधिकरण्यायप्रथमया विपरिणम्यते इत्याह—सम्बुद्धिवर्जमिति । ( यद्यपि 'असम्बुद्धिरि'ति वक्तुमुचितम् । 'अनङ् सावि'त्यत्रैव सप्तम्या विपरिणामः शक्यः कर्त्तुं, तथापि भिन्नविभक्तिकत्वात् 'सर्वनामस्थाने' इत्यस्य निवृत्तिराशङ्क्येतेति

१ 'एवञ्च' इत्यारभ्य 'वार्त्तिकम्' इत्यन्तोऽयं पाठो ग. नास्ति ।

२ 'ननु सुरां सुनोतीति' ( ४७६ पृष्ठे ) इत्यारभ्य 'इत्युक्तम्' इत्यन्तः कुण्डलितः ख. ग. पाठः ।

३ क. कुण्डलितः ख. ग. पाठः ।

यथान्यासमेवोचितम्)।'मृजेर्वृद्धि'रित्यतो 'वृद्धि'रित्यनुवर्त्तते।'अङ्गस्ये'ति चाऽधिकृतम्[1]। तदाह—अङ्गस्य वृद्धिरिति।

ख्यत्यात्। यणा निर्देशेन सन्दिग्धत्वाद्विशेषेगोभयोर्ग्रहणमित्याह—खितीत्यादि। अकारस्तूच्चारणाऽर्थो, न तु मुख्याऽपत्याऽदिशब्दैकदेशाऽनुकरणम्। 'सख्युर्यः' 'पत्युर्नः' सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' 'आपत्यस्य च तद्धितेऽनाती'त्यादिनिर्देशादिति भावः।

'एकः पूर्वपरयोरि'त्येतदधिकारनिवृत्त्यर्थम्—[2]परस्येति। उकाराऽनुवृत्तिरिति। नदी-घिसंज्ञारहितस्य तस्याऽभावात्, तत्र च 'इदुद्भ्याम्' 'अच्च घेरि'त्याभ्यां बाधादिति भावः[3]। सुसखेति। 'न पूजनादि'ति निषेधात् 'राजाऽहःसखिभ्य' इति टच् न। समुदायस्येति। पर्युदासे समुदायस्य सखिभिन्नत्वात्, प्रसज्यप्रतिषेधेऽपि समुदायनिष्ठघित्वस्याऽवयवनिषेधेनाऽव्यावर्त्तनादिति भावः[4]। अत्र यद्वक्तव्यं तत् घिसंज्ञासूत्रे एवोक्तम्।

गौणत्वेऽपीति। अस्थ्याद्यनङ्वदिति भावः[5]।

---

१ 'अधिकृतमचो विशेष्यमित्यभिप्रेत्याह—अजन्तेति। वृद्धिरिति च।' इति ग. पाठः।

२ इतोऽग्रे—'अत्राऽप्यतीत्यनुवृत्तं ङसिङसोर्विशेषणम्—'अकाराद्योर्ङसिङसो'रिति। 'आदेः परस्ये'त्यकारस्य। 'ङसिङसोरत' इति फलितार्थकथनम्। यद्वा वैयधिकरण्येनैवाऽन्वयः' इति क. कुण्डलितो, ग. पाठः।

३ इतोऽग्रे—'न च नदीसञ्ज्ञकेषु परत्वादिदं शङ्क्यम्। पूर्वसूत्रे उकारोच्चारणवैयर्थ्यापत्तेः'—इति क. कुण्डलितो ग. पाठः।

४ इतोऽग्रे—'न च पर्युदस्यमानसमर्पके सखिशब्दे तदन्तग्रहणं शङ्क्यम्। विशेष्याऽसंनिधानादिति भावः'—इति ग. पाठः।

५ इतोऽग्रे—'अत एव 'येन विधिरि'त्यत्र 'परमसखायावि'ति बहुव्रीहिः। तत्पुरुषे हि टचा भाव्यमि'ति कैयटः। [1]असमस्तन्तु न। तदन्तविधेः प्रक्रमात्' इति क. कुण्डलितः ख. ग. पाठः।

---

1 'असमस्तन्तु न, तदन्तविधेः प्रक्रमात्' इत्ययं ख. ग. पाठः। क. नास्ति।

अत एव 'तृज्वत्क्रोष्टुरि'ति सूत्रे 'अतिसखीनी'त्युदाहृत्य 'णिद्वद्भावः प्राप्तो 'वृद्ध्यौत्वे'ति पूर्वविप्रतिषेधान्न भवती'त्युक्तं भाष्ये। तद्धि न समानाधिकरणतत्पुरुषे। 'मित्रं क्लीबे, सखा द्वयोरि'ति कोशेन सखिशब्दस्याऽनपुंसकत्वबोधान्नपुंसकत्वाऽनापत्तेः। अत एव भाष्येऽसमस्तमेव 'सखीनी'ति नोदाहृतम्। 'ब्राह्मणकुलानी'ति विशेष्यं चोदाहृतम्। 'अत्यादय' इति तत्पुरुषे, बहुव्रीहौ वा गौणत्वं स्पष्टमेव। ( अत[1] एव च 'द्वितीया श्रिते'तिसूत्रे 'तत्पुरुषविषये बहुव्रीहिर्ने'त्युपक्रम्य, उभयं खल्वपीष्यते, 'सोमसखा' 'गवांसख' इति भाष्यं सङ्गच्छते। पूर्वत्र बहुव्रीहित्वान्न टच्। उत्तरत्र 'षष्ठ्या आक्रोशे' इति षष्ठ्या अलुगिति दिक्)।

पतिः समासे। 'एव'कार इष्टतोऽवधारणाऽर्थः। ( अन्यथा[2] 'समासे पतिरेवे'त्यपि सम्भाव्येत। 'धात्वादेरि'तिज्ञापकाऽऽश्रयणे तु प्रतिपत्तिगौरवं स्यात्)। पतिशब्दोऽत्र स्वामिपर्यायो गृह्यते[3]। कथं 'सीतायाः पतये' 'सखिना वानरेन्द्रेणे'ति चेत्। अत्राहुः—असाधव एवैते। त्रिशङ्कायाज्ययाजनादिवत्तपोमाहात्म्यशालिनां मुनीनामसाधुप्रयोगोऽपि नाऽतीव बाधकः। अस्मदादीन्प्रति तु स्मृतिपुराणाऽध्ययनविधिबलात्तेषां तपोमाहात्म्यबलाच्च तदन्तर्गततत्पाठो न बाधकः। स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येव। नदीसंज्ञासूत्रस्थभाष्यकैयटस्वरसोऽप्येवम्।

---

१ 'अलुगिति दिक्' इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

२ 'गौरवं स्यात्' इत्यन्तः क. कुण्डलितः ख. ग. पाठः। मनोरमायां च दृश्यते।

३ इतोऽग्रे—'प्रसिद्धत्वात्। न क्विप्प्रत्ययान्तः पतधातुः। तेन 'पतिना भ्रातुने'ति सिद्धम्। [1]नापि पतिरित्याख्यातः पतिः, णौ टिलोपे—'अच इरि'त्यौणादिके-प्रत्ययान्तः[2]। लाक्षणिकत्वात्। अत एव 'सीतायाः पतये' इत्यादि सिद्धम्। एतेन 'सखिना वानरेन्द्रेणे'ति व्याख्यातम्' इति ख. पाठः।

---

1 'न तु' ख. ग. पाठः।

2 'इप्रत्ययान्तग्रहणम्, लाक्षणिकत्वात्' ख. ग. पाठः।

तत्र हि 'छन्दोवत्कवयः कुर्वन्ती'त्युक्त्वा, 'न ह्येषा इष्टिरस्ती'त्युक्तम्[1]।

'समासे'[2] इत्युक्तेर्बहुच्पूर्वे 'बहुपत्ये'त्यादौ घित्वं न। अत एव 'पतिर्वृत्तावेवे'ति नाऽसूत्रि। वर्णसंज्ञापक्षे 'पत्यवयवेकारः समासे एवे'त्यर्थः[3]। तदन्तसंज्ञापक्षेऽपि 'पत्यवयवेकारान्त' इत्यर्थः[4]। सूत्रे पतिशब्दश्च तदवयवेकारलाक्षणिकः।

न च 'शेषो घ्यसखिपती' इत्येव सूत्र्यताम्[5], 'सुसखिने'त्यादिव'त्सुपतिने'त्यादिसिद्धेरिति वाच्यम्। 'बहुपत्ये'त्यस्याऽनापत्तेः। किञ्च 'पतिगृहे' 'पतिसखायावि'त्यादौ पूर्वनिपातनियमाऽनापत्तेः। केवलपतिशब्दस्य घित्वाऽभावात्। यथान्यासे तु केवलस्य पतिशब्दस्यैव घित्वमिति स्पष्टमेव।

अत एव 'पतिसखी समास एवे'ति न सूत्रितम्। 'गृहसखायौ' 'सखिगृहे' इत्यत्र पूर्वनिपातनियमाऽऽपत्तेः। अत्र[6] न्यासे समासे विद्यमानस्य केवलसखिशब्दस्याऽपि घित्वात्। यथान्यासे तु नेति स्पष्टमेवेत्याहुः।

---

१ 'इत्युक्तमित्यन्ये' ख. ग. पाठः।

२ एतत्स्थाने–'अत्र शेष' इति वर्त्तते। तस्य च 'पतिरि'ति विशेषणम्। तेन 'पतिस्तदन्तश्च शेषः समासे एव घिरि'त्यर्थः। अत एव बहुच्पूर्वे बहुपत्येत्यादौ घित्वं न' इति ग. पाठः।

३ 'एवेत्यर्थात्' ख. ग. पाठः।

४ इतोऽग्रे—'भूपत्यादेः समासे विद्यमानत्वन्तु व्यपदेशिवद्भावेन'–इति ख. ग. पाठः।

५ एतत्स्थाने–'पतिरि'ति प्रथमा तदन्तसंज्ञापक्षे युक्तैव। वर्णसंज्ञापक्षे 'पत्यवयवेकारः समासे एवे'त्यर्थः। न च शेषो घ्यसखिपती इत्येव सूत्र्यताम्' इति ग. पाठः।

६ 'त्वदुक्तन्यासे केवलस्यापि सखिशब्दस्य घित्वात्' ख. ग. पाठः।

वस्तुतस्तु 'यस्येति चे'ति सूत्रस्थभाष्यरीत्या 'सुपतिना' 'सुसखा' इत्यादीष्टा[1]ऽसिद्ध्या तथा न्यासः कर्त्तुमशक्य एवेति बोध्यम् ।

**नित्यं बहुवचनान्त इति** । 'किमः सङ्ख्यापरिमाणे' इत्यनेन 'किम्'-शब्दात्सङ्ख्यापरिमाणे वर्त्तमानाद्बहुत्वसङ्ख्यावच्छिन्ने सङ्ख्येये वाच्ये एव डतिर्विधीयते, न तु द्वित्वाद्यवच्छिन्ने । अनभिधानात् । अत एव 'किमि'-त्येतत्परिप्रश्ने वर्त्तते । परिप्रश्नश्चाऽनिर्ज्ञाते । अनिर्ज्ञातं च बहुषु । द्व्येकयोः पुनर्निर्ज्ञातमेवे'ति डतिसूत्रस्थं भाष्यं सङ्गच्छत इति भावः ।

**बहुगण** । सङ्ख्याप्रदेशेष्वेतत्संज्ञाकरणज्ञानरूपप्रकरणसत्त्वेऽपि, तन्मूलकृत्रिमाऽकृत्रिमन्यायो न प्रवर्त्तते । 'सङ्ख्याया अतिशदन्ताया' इति-सूत्रे शदन्तपर्युदासात् । न हि शदन्ता कृत्रिमा[2]ऽस्ति । अत एव 'पञ्चकृत्व' इत्यादिसिद्धिः । एतन्न्यायोपयोगस्त्वभ्यासाऽऽम्रेडितादिसंज्ञाविषये द्रष्टव्यः । लक्ष्याऽनुसारात्कर्माऽऽदिगोत्राऽऽदिसंज्ञास्विवाऽत्राऽपि प्रकरणा-ऽनादर इति तत्त्वम् ।

नन्वेवं बहुगणग्रहणं व्यर्थम्, द्व्यादीनामिव लोके सङ्ख्यावाचकत्वा-देव प्रदेशेषु ग्रहणसिद्धेरिति चेन्न । नियत[3]विषयपरिच्छेदहेतुत्वाऽभावेन तस्याऽसङ्ख्यात्वात् । बहुत्वं हि त्र्यादिसङ्ख्याव्यापको धर्मविशेषः । अत एव भाष्ये 'एतत्सूत्रमतिदेशार्थं, यदयमसङ्ख्यां सङ्ख्येत्याहे'त्युक्तम् ।

ए[4]तेन 'अर्थाऽन्तरवाचित्वे सति, बहुत्ववाचिनश्चेत्सङ्ख्याकार्यं, तर्हि

१ 'सुसख्येत्यादीष्टाऽसिद्ध्या' ख. पाठः । 'इष्टसिद्ध्या' इति केनापि क. पुस्तके हरिताललेपेन शोधितः ।

२ इतोऽग्रे–'तेन च त्वदुक्तन्यायमूलस्य संज्ञिविशेषे क्रियमाणस्य संज्ञानियम-निष्ठस्य सामान्यापेक्षत्वस्याऽनाश्रयणम्, कृत्रिमान्तरव्यावृत्तिरूपविशेषा-पेक्षत्वस्य चाऽऽश्रयणमिति बोध्यम्'–इति क. कुण्डलितः पाठः ।

३ 'नियतविषय' इत्यारभ्य 'सङ्ख्येत्याहेत्युक्तम्' इत्यन्तोऽयं क. ग. पाठः, ख. नास्ति । ४ 'एतेन' इति क. पाठः । ख. ग. नास्ति ।

बहुगणयोरेवे'ति नियमार्थं तत्। तेन भूर्यादीनां न। तेषां वैपुल्याद्यर्थो-ऽन्तरवाचित्वात्। वैपुल्यं[1] विशालता। विशेषणविशेष्यदलाभ्यामबहुत्व-वाचिन एकशब्दस्य, बहुत्वमात्रवाचिनां त्र्यादीनां च न व्यावृत्तिः। (त्र्यादीनामर्थान्तरवाचित्वाऽभावात्[2])। न च 'अनियतसङ्ख्यावाचिनां चे-द्बहुगणयोरेवे'ति नियमोऽस्तु। अनन्तवाचिशतशब्दस्याऽनियतसङ्ख्या-वाचिनः सङ्ख्याऽकार्योऽनापत्तेः। मम तु न दोषः। सङ्ख्याऽतिरिक्ताऽर्थो-न्तराऽभावादित्यपास्तम्[3]। अनन्तशब्दवत्तद्वाचिशतशब्देऽपि सङ्ख्याकार्यो-ऽभावस्यैवोचितत्वाच्च।

'वतु' इति साऽनुबन्धनिर्देशो 'ब्राह्मणवदि'त्यादिव्यावृत्त्यर्थ इति दिक्[4]।

सङ्ख-वैपुल्यवाचकयोस्तु गण-बह्वोर्नेह ग्रहणम्[5]। परस्परसाहचर्येण त्र्यादिसङ्ख्याव्यापकधर्मवाचिनोरेव ग्रहणात्।

अत्र डतिस्तद्धित एव[6], न[7] तु पातेर्डतिः, उणादीनामव्युत्पन्नत्वात्। अतिकृप्रत्ययेनाऽपि पत्युः सिद्धेश्च। साहचर्याच्चेत्याहुः।

'ष्णान्ता षडि'त्यतः 'षडि'ति वर्त्तते। 'सङ्ख्ये'ति च प्रकृतं, 'डती'त्य-नेन विशेष्यत इत्याह—डत्यन्तेति।

ननु संज्ञाविधौ तदन्तग्रहणाऽभावात्, डतेरेव सङ्ख्यासंज्ञात्वा[8]'दित्यन्ता

---

१ 'वैपुल्यं विशालता। विशेषणविशेष्यदलाभ्याम्' इत्ययं क. पाठः।

२ ख. ग. पाठः।

३ 'इत्यपास्तम्' इत्यारभ्य 'उचितत्वाच्च' इत्यन्तोऽयं क. पाठः, ख. ग. नास्ति।

४ इतोऽग्रे–'सङ्ख्यायतेऽनये'त्यन्वर्थसंज्ञाविज्ञानादिति कैयटाद्युक्तम्। तन्न। असङ्ख्यां सङ्ख्येत्याहेति भाष्यविरोधात्'–इति क. कुण्डलितः ख. पाठः।

५ 'ग्रहणात्' इत्यन्तो लघुशब्देन्दुशेखरपाठोऽयम्। अत्र तु त्रुटितः।

६ 'अत एव डतिः' ख. पाठः।

७ 'न तु पातेः' इत्यारभ्य 'सिद्धेश्च' इत्यन्तः क. पाठः।

८ 'सङ्ख्यासंज्ञत्वात्' ख. पाठः।

सङ्ख्ये'त्यनुपपन्नम् । न च केवलस्य संज्ञायाः प्रयोजनाऽभावः । अङ्गाऽधिकारे तदन्तविधेः सत्त्वेन, षड्भ्यो लुक एव प्रयोजनस्य सत्त्वादिति चेन्न[1] । ( 'षट्कतिभ्यो लुगि'त्येव सिद्धे[2] ) 'षट्कती'ति डडनुवादेन थुको विधानेन[3] (च) तदन्तस्यैव सङ्ख्यासंज्ञाप्रवृत्तेः । सङ्ख्येति किम् ? । पतयः ।

**प्रत्ययस्य** । अनेकसंज्ञाकरणसामर्थ्यात्तन्त्राद्याश्रयणेन तद्भावितसंज्ञाऽऽश्रयणम्, अतो न सङ्करः । तस्मिन्हि 'हन्ती'त्यादौ 'श्ला'विति द्वित्वादि स्यात् । तदाह—**लुक्श्लुलुप्शब्दैरिति** ।

'अदर्शनं लोप' इत्यतो'ऽदर्शनमि'त्यनुवर्त्तते । प्रदेशेषु तु भाविसंज्ञाविज्ञानान्नाऽन्योन्याऽऽश्रयः । विशेषविहिता अप्येता लोपसंज्ञां न बाधन्ते । एकसंज्ञाधिकारादन्यत्र संज्ञासमावेशस्योक्तत्वात् । तेन प्रत्ययलक्षणसिद्धिः । एते च विधीयमानाः सर्वाऽऽदेशा एव । 'क्सस्याऽची'ति लोपे प्रकृते 'लुग्वा दुहदिहे'ति लुग्ग्रहणात् । प्रत्ययग्रहणं–'प्रत्ययाऽदर्शनस्यैवैताः संज्ञाः स्युरि'ति । अत एव 'आगस्त्यकौण्डिन्ययोरि'त्यादौ प्रत्ययविशेषाऽनुपादानेऽपि प्रत्ययस्यैव लुक् सिद्ध इति सूत्राऽऽशयः ।

**षड्भ्यो लुक्** । 'जश्शसोः शिरि'त्यतो 'जश्शसोरि'त्यनुवर्त्तते । 'षषो लुगि'त्येव सिद्धे बहुवचननिर्देशोऽर्थप्राधान्यसूचनार्थः । 'षट्शब्देन षट्संज्ञकः शब्दः, तदर्थसङ्ख्याश्रयाश्चे[4]त्युभयमपि विवक्षितम् । तेषां बहुत्वाच्चेदं बहुवचनम् । तत्राऽर्थात्परत्वं स्वगतसङ्ख्याऽनुवादकत्वरूपम् । एवं च 'षडर्थगतसङ्ख्याऽभिधायिनोरि'ति फलितोऽर्थः । तेन गौणे न ।

---

१ 'सत्त्वादिति चेन्न । 'सङ्ख्ये'त्यन्वर्थसंज्ञाविज्ञानात्सङ्ख्याप्रश्नविषयाऽर्थवाचिन एव डतेर्ग्रहणात् । तादृशाऽर्थवाचकत्वं च न केवलप्रत्ययस्येत्यवश्याऽऽश्रयणीयः संख्यासंज्ञायां तदन्तविधिः । अत एव 'कतिभिरि'त्यत्र 'षट्त्रिचतुर्भ्य' इति विहितत्वनिबन्धनविभक्त्युदात्तत्वं भवतीति न किञ्चिदनुपपन्नम्'—इति ख. ग. पाठः ।　　२ ग. पाठः । क. ख. नास्ति ।

३ ख. पाठः ।　　४ 'सङ्ख्याश्रयश्च' ग. पाठः ।

तत्रोक्तार्थस्य परशब्दवाच्यत्वं चिन्त्यम्। तस्मादत्र 'षड्भ्य' इति विहित-विशेषणम्। परमपञ्चादौ तु विशिष्टस्यापि सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोध(जन)कत्वेन सङ्ख्यावाचितया षट्त्वमस्त्येवेति न दोषः। षट्संज्ञाविषये 'लोके गणनायां प्रसिद्धसङ्ख्याशब्दानामेव ग्रहणमि'त्यत्र न मानम्। स्पष्टं चेदं सर्वादिसूत्रभाष्ये इति भाष्यप्रदीपोद्द्योते निरूपितम्।

**प्रत्ययलोपे**। इदं सूत्रं यत्र प्रत्ययः प्राधान्येनाऽऽश्रीयते, तत्राऽल्विधौ विध्यर्थम्। तेना'ऽतृणेडि'त्यत्र हलादौ पिति सार्वधातुके विधीयमाने इम्, 'मित्रशीरि'त्यादौ हलादौ क्ङिति विधीयमानमित्त्वं च सिद्ध्यति।

'प्रत्ययस्ये'त्यनुवृत्त्या सिद्धे पुनराद्यप्रत्ययग्रहणं ( मुख्ये प्रत्ययलोपे एव यथा स्यात्, ) अवयवलोपे मा भूत्। तेना'ऽऽघ्नीये'त्यादौ नाऽनुनासिकलोप इति भाष्ये स्पष्टम्।

इदमेव प्रत्ययग्रहणं ज्ञापकम् 'अवयवेऽपि प्रत्ययत्वप्रयुक्तकार्यस्ये'ति। एवं च 'आदेशप्रत्यययोः' 'इदुदुपधस्य चे'त्यनयोर्लक्षणादि नाऽऽश्रयणीयं भवति, 'सात्पदाद्योरि'ति च चरितार्थं भवति।

'स्थानिवदि'त्यनुवृत्त्यैव सिद्धे 'प्रत्ययलक्षण'ग्रहणन्तु 'प्रत्ययस्य यत्र वर्णाऽविशेषणत्वरूपं प्राधान्यं, तदेव यथा स्यादि'त्यर्थम्। तेन 'टिड्ढाणञि'त्यादौ प्राधान्येन यत्राऽलाश्रयणं, तत्राऽपि विध्यर्थं किं न स्यादि'ति न शङ्क्यमिति वार्त्तिकमतम्।

**भाष्ये** तु 'शास इत्'। 'अङि'। 'अजादौ क्ङिति चेदङ्यथेवे'ति नियमादजादिव्यावृत्तौ, 'शास इदि'त्यत्र हल्ग्रहणाऽकरणेन, स्थानिवद्भावादेव 'मित्रशीरि'त्यादि सिद्धम्। 'तृणह' इति सूत्रे'ऽचि ने'त्यनुवर्त्य,

---

१ 'तत्रोक्तार्थस्य' इत्यारभ्य 'न मानम्' इत्यन्तोऽयं क. ग. पाठः।

२ 'विधीयमानमिम्' ख. पाठः। ३ क. नास्ति। ख. ग. पाठः।

४ 'तत्रैव' ख. पाठः। 'तत्र' ग. पाठः। ५ 'सिद्धिः' ख. ग. पाठः।

'तृणहानी'त्यादिव्यावृत्तौ 'हली'त्यननुवृत्त्या 'अतृणेडि'त्यादि सिद्धमित्यादिरीत्या विधिफलानामन्यथासिद्धिं निरूप्य, स्थानिवत्सूत्रेणैव सिद्धे, नियमाऽर्थत्वमुक्तम् । नियमश्च द्वितीयप्रत्ययग्रहणात्–'प्रत्ययस्याऽसाधारणं रूपं यत्राऽऽश्रीयते, तदेव कार्यं प्रत्ययलोपे सति भवति, न तु प्रत्ययाऽप्रत्ययसाधारणमि'ति । तेन 'सुदृषत्प्रासाद' इत्यत्राऽसो लुकः स्थानिवत्त्वेनाऽस्त्वादसन्तत्वस्याऽऽर्थसमाजग्रस्तत्वेऽपि 'अत्वसन्तस्ये'ति दीर्घो न ।

न चाऽतुसाहचर्याच्छ्रूयमाणाऽसन्त एव दीर्घप्रवृत्तिः । 'सोमनसी' इति सूत्रेऽपि 'अलोमोषसी' इति पर्युदासेन श्रूयमाणाऽसन्तस्यैव ग्रहणमिति नियमोऽपि व्यर्थ इति वाच्यम् । साहचर्याद्यनित्यत्वस्यापि ज्ञापनादिति भाष्याशयः । विध्यर्थत्वे तु 'सुदृषदि'त्यादौ स्वरो दुर्वारः । स्थानिवद्भावस्याऽनिवृत्तेः ।

नन्वेवं 'दाधर्त्ती'ति सूत्रस्थभाष्यमसङ्गतं स्यात् । तत्र हि 'तेतिक्ते' इति किं निपात्यते ? । आत्मनेपदम् । नैतदस्ति, 'अनुदात्तङित'इत्येव सिद्धम् । नियमाऽर्थं तर्हि भविष्यति—'अत्रैव यङ्लुगन्तस्य, नाऽन्यत्र—बेभिदीती'त्युक्तम् । त्वद्रीत्या यङो लुकि अनेन नियमेनाऽऽत्मनेपदं दुर्लभम् ।

---

१ 'स्थानिवत्त्वेनाऽसन्तत्वेऽपि अत्वसन्तस्येति' इति क. पाठः ।
'स्थानिवत्त्वेप्यत्वसन्तस्येति' इति ग. पाठः ।

२ 'नियमोपि व्यर्थ इति वाच्यम् । 'अतु'साहचर्येण प्रत्ययाऽवयवस्यैवाऽसो ग्रहणापत्तौ 'अधातो'रित्यस्य वैयर्थ्याऽऽपत्त्या, तत्र साहचर्यस्याऽऽश्रयितुमशक्यत्वात् । किञ्चैवं सति 'सुस्रोता'इत्यादौ तुडागमेन प्रत्ययाऽवयवो यत्राऽस्, तत्रैव स्यात्, न तु 'सुपया' इत्यादौ । प्रत्ययोऽत्राऽस् । एवं 'सोमनसी'-इत्यत्र पर्युदासे प्रत्ययावयवाऽसन्तस्यैव ग्रहणाऽऽपत्तौ, 'सुव' इत्यादौ स्वराऽनापत्तेरिति भाष्याशयः'–इति ख. ग. पाठः ।

३ 'साहचर्यात्' इत्यत आरभ्य 'अनिवृत्तेः' इत्यन्तः क. ग. पाठः ।

४ 'लुकि प्रत्ययलक्षणेनात्मनेपदम्' ख. पाठः ।

ङित्त्वस्य प्रत्ययाऽप्रत्ययसाधारणत्वादिति चेन्न[1]। 'आत्मनेपदमि'त्यस्यैव[2] सिद्धान्त्युक्तित्वात्। ततो वार्त्तिकाऽनुसारिणैकदेशिना 'अनुदात्तङित' इत्येवेदं सिद्धमि'[3]ति शङ्किते, तदनुसार्येकदेशिन एव तत्समाधानमित्यदोषात्।

न च 'यत्र प्रत्ययस्य विशेष्यत्वं, तत्रैवे'ति नियमशरीरमस्तु। एवं चेदं भाष्यं[4] सिद्धान्त्युक्तिरेवाऽस्त्विति वाच्यम्। 'राजे'त्यादौ पदत्वाऽनापत्तेः। वार्त्तिककृन्मते 'वर्णाऽऽश्रये न प्रत्ययलक्षणमि'ति वर्णप्राधान्यविषयकम्। वर्णप्राधान्यं चेतराऽविशेषणत्वरूपं, प्रत्ययनिरूपितविशेष्यत्वरूपं चेति न[5] दोषः। तेन गवे हितं 'गोहितमि'त्यत्राऽव्, 'सुयशा' इत्यत्र विसर्जनीयस्य सत्वं, 'सुवृडसी'त्यत्र 'खरि चे'ति चर्त्वं, 'चित्रायां जाता चित्रे'त्यादौ 'अण्योऽकारस्तदन्तात्प्रातिपदिकान्ङीबि'ति ङीप् च न।

न च 'गोहितमि'त्यत्र 'न लुमताऽङ्गस्ये'ति निषेधान्नाऽवः प्राप्तिरिति वाच्यम्। लुप्तप्रत्ययनिमित्ताऽङ्गोद्देश्यककार्ये एव तन्निषेधात्। अत एव 'उत्क्रामे'त्यादौ 'क्रमः परस्मैपदेष्वि'ति दीर्घसिद्धिः। परस्मैपदपरशिन्निरूपिताऽङ्गस्य तेन दीर्घविधानात्। प्रकृते[6] चाऽवादेशो वर्णमात्रोद्देश्यको, नाऽङ्गोद्देश्यक इति न कश्चिद्दोषः। 'तस्मिन्नि'तिन्यासेऽपि उपस्थितप्रत्ययाऽऽक्षिप्तप्रकृत्युद्देश्यककार्ये एव प्रवृत्तिरिति दिक्।

---

१ 'इति चेन्न। 'नियमार्थं तर्हि भविष्यती'ति वदता भाष्यकारेण समाधानेऽनास्थां बोधयता तस्य प्रौढिवादत्वबोधनात्। तदुक्तं यङ्लुगन्तमनोरमायां 'दाधर्तीति सूत्रभाष्यन्तु विधिपक्षाऽभिप्रायेणेति'—इति ख. ग. पाठः।

२ 'आत्मनेपदम्' इत्यारभ्य 'इत्यदोषात्' इत्यन्तः क. ग. पाठः।

३ 'इत्येव सिद्धम्' इति क. पाठः।

४ 'भाष्यं मुख्यपक्षाभिप्रायकमेवाऽस्त्विति' ख. ग. पाठः।

५ 'इति न दोषः' इति क. नास्ति।

६ 'एवं च प्रकृतेऽवादेशो वर्ण' इति ख. पाठः।

न च 'प्रत्ययजं प्रत्ययवदि'ति[1] सिद्धे 'लक्षण'ग्रहणं व्यर्थम् । 'प्रत्ययनिमित्तकमेव, न तु प्रत्ययस्थानिकमि'त्यर्थलाभार्थं तत् । तेन नखैर्भिन्नो 'नखभिन्न' इत्यादावैसादिकं न । 'अतिदेशेनाऽऽहार्यतद्बुद्धिसम्पादनेऽप्युच्चारणप्रसङ्ग(रूप[2])षष्ठ्यर्थाऽभावान्नै[3]सादीति व्यर्थमेव लक्षणग्रहणमि'त्यन्ये । ध्वनितं चेदं 'सुप्तिङन्तमि'ति सूत्रे भाष्ये । स्पष्टं च कैयटे ।

**कार्यमिति** । कार्याऽतिदेशोऽयमिति भावः । नन्वेवं 'परिवीरि'त्यत्र तुग्दीर्घौ पर्यायेण स्याताम्, कार्याऽतिदेशेऽनेनैवोभयोरपि विधानात्, 'विप्रतिषेधे परमि'त्यस्याऽप्रवृत्तेरिति चेन्न । 'सति प्रत्यये यत्कार्यं भवितुमर्हति, तदेवाऽतिदिश्यते' इति 'परिवीये'त्यादाविव, 'परिवीरि'त्यत्राऽपि दीर्घ एव, न तु तुगिति न दोषः । कार्याऽतिदेशेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेशस्यैव देशत्वाऽङ्गीकाराद्वा न दोषः[4] ।

**न लुमताङ्ग** । 'लु'शब्दो वर्त्तते येषु ते लुमन्तः । 'ते के' इत्याकाङ्क्षायामाह—**लुक्श्लुलुप इति** । **अङ्गकार्यमिति**[5] । 'लुमप्रत्यये परतः पूर्वस्य यत्कार्यम्, आङ्गमनाङ्गं चे'त्यर्थः । तेन 'पञ्च'त्यादौ 'सुबन्तमि'ति पदसंज्ञा भवति । 'राजपुरुष' इत्यादौ भसंज्ञा च न । अङ्गाऽधिकारनिर्देशे हि सा स्यादेव । न च 'संजिगमिषे'त्यत्र 'अतो हेरि'ति लुकि, 'गमेरिट् परस्मैपदेष्वि'तीण्न स्यादिति वाच्यम् । तत्र तृचि 'संजिगमिषिते'त्यादिसिद्ध्यर्थं 'परस्मैपद'शब्दस्य तङानयोरभावोपलक्षणत्वेन दोषाऽभावात् ।

1 'इति वा सिद्धे' ख. ग. पाठः । 2 'रूप' इति क. नास्ति ।

3 'षष्ठ्यर्थाऽभावाच्च । ध्वनितं चेदम्' इति ख. पाठः ।

4 इतोऽग्रे—'न च प्रत्यये सत्यप्यङ्गाऽधिकारस्थदीर्घाऽपेक्षया तुकोऽन्तरङ्गत्वेन स एव प्राप्नोतीति वाच्यम् । वार्णादाङ्गस्य बलीयस्त्वादित्याहुः । 'लक्ष्याऽनुरोधादीदृशेषु शास्त्राऽतिदेश एवे'त्यन्ये । तद् ध्वनयन्नाह—इति जसि चेति'—इति ख. ग. पाठः ।

5 'आङ्गमनाङ्गं चेत्यर्थः' ख. ग. पाठः ।

किञ्च परस्मैपदनिमित्ताऽङ्गसंज्ञकस्य कार्याऽभावान्न दोषः। अङ्गसंज्ञा तु लुक्यपि भवति। अनित्यत्वात् 'न लुमते'तिनिषेधस्याऽङ्गसंज्ञायामप्रवृत्तेः। अत एव 'गुणो यङ्लुकोरि'त्यादीनामङ्गाऽधिकारे पाठः सङ्गच्छते। अत एव 'पञ्चभिः क्रोष्टुभिः क्रीतं कुलमि'ति 'तद्धितार्थे'ति-समासे, ठको'ऽध्यर्धे'ति लुकि, 'लुक्तद्धितलुकी'ति स्त्रीप्रत्ययलुकि, 'पञ्चक्रोष्टु' इत्यङ्गसंज्ञानिमित्ततृज्वद्भावसिद्धिः। इदमेवाऽभिप्रेत्य 'न चाऽपरं निमित्तमाश्रीयते—'अस्मिन्परतः क्रोष्टुस्तृज्वदि'ति। किं तर्हि?। 'अङ्गस्य क्रोष्टुस्तृज्वदि'ति। अङ्गसंज्ञा च भवति प्रत्ययलक्षणेने'ति भाष्यं 'तृज्वत्क्रोष्टुरि'त्यत्र[1]। कार्यकालपक्षेऽपि 'क्रोष्टुशब्दः प्रत्ययेऽङ्गसञ्ज्ञो भवति, अङ्गसंज्ञकस्य च तस्य तृज्वद्भाव' इत्यर्थात् तृज्वत्त्वमनैमित्तिकमेव। लक्ष्याऽनुरोधाच्चोरदित्यादौ यथाऽत्त्वं प्रत्यपि निमित्तता आवृत्त्या, न तथा प्रकृते, लक्ष्याऽनुरोधादेवेति तदाशयः।

'चर्करीति' 'अजर्घा' इत्यादौ तु 'न लुमते' ति निषेधाऽनित्यत्वादत्त्वप्रवृत्तिः। 'वव्रश्चे'ति सिद्धये च तस्य प्रत्ययनिमित्तताऽऽवश्यकीति दिक्[2]।

केचित्त्वङ्गाऽऽक्षिप्तप्रत्ययनिमित्तकं कार्यं लुकि भवत्येव। प्रकाराऽन्तरेणाऽपि लब्धप्रत्ययस्य निमित्तत्वे तु निषेधो भवत्येव। यथा 'अवं' 'गव' इत्यादौ त्रादेशो न, 'असार्व'ति पर्युदासेनाऽपि प्रत्ययस्य निमित्तत्वादिति वदन्ति। अत्र पक्षे भ्रुवे हितं 'भ्रूहितमि'त्यादावुवङ्भावश्चिन्त्यः।

त्रिषु सरूपा इति। 'ङे प्रथमयोरि'तिसूत्रस्थेन 'युष्मानि'त्यादौ

---

१ इतोऽग्रे—'यथोद्देशे इदम्। कार्यकाले तु प्रत्ययनिमित्तत्वं स्यात्। यथा वव्रश्चाऽऽदौ। एवं च 'स्त्रियां चे'ति सूत्रे 'यथोद्देशपक्ष एवाऽऽश्रीयते' इति कैयटादयः। अत्र पक्षे 'चर्करीती'त्यादावुरदत्त्वं कथमिति चेन्न। 'अजर्घा' इति भाष्योदाहरणेन प्रत्ययत्वेन प्रत्ययनिमित्तकाऽभ्यासकार्ये 'न लुमते'ति-निषेधस्याऽनित्यत्वेनाऽप्रवृत्त्यङ्गीकारादिति बोध्यम्'—इति ख. पाठः।

२ 'कार्यकालपक्षेऽपि' इत्यारभ्य 'इति दिक' इत्यन्तः क. ग. पाठः।

'तस्माच्छसो न' इत्युपन्यासपरभाष्येण, 'स्वमोर्नपुंसकादि'ति सूत्रे शिशीनुमादिभिर्युष्मदस्मदादेशानां विप्रतिषेधपरवार्त्तिकेन, तद्भाष्येण च, 'न षडि'ति निषेधेन च लिङ्गसत्ताबोधनेऽपि, लिङ्गबोधकप्रत्यया-ऽनुत्पत्त्या रूपे न विशेष इत्यर्थः। 'साम आकमि'ति सूत्रस्थस्य 'अलिङ्गे युष्मदस्मदी' इति भाष्यस्य तु 'पदाऽन्तरसन्निधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दमात्रान्न प्रतीयते' इत्यर्थ इति दिक्।

त्रेस्त्रयः। त्रयाऽऽदेशो न सान्तः। 'निजां त्रयाणामि'ति निर्देशात्। न च त्रेरयङेव कुतो न कृत इति वाच्यम्। 'अयङ् यि क्ङिति' 'अनङि'-त्यादाविवाऽकारस्योच्चारणाऽर्थत्वशङ्कावारणाऽर्थं तथोक्तेः। केचिदिति। 'आमि सर्वनाम्न' इति साहचर्यादिति भावः। वस्तुतस्त्विति। साह-चर्यस्याऽसार्वत्रिकत्वात्सूत्राऽन्तरस्थतदाश्रयणे दृढतरप्रमाणाऽभावाच्चेति भावः। न च गौणमुख्यन्यायेनाऽत्र न भवतीति वाच्यम्। अप्रसिद्धत्वस्य, गौणलाक्षणिकत्वस्य वा तत्र गौणपदार्थत्वात्। स्पष्टं चेदं सर्वनामसंज्ञासूत्रे कैयटे। ( अत्र ह्यङ्गाऽधिकारात्त्रिशब्दाऽन्तत्वेन प्राप्तिः )। प्रकृते च त्रि-

---

१ 'उपन्यासपरतद्भाष्येण' ख. पाठः।

२ इतोऽग्रे—'अत एवाऽव्ययानामत्राऽग्रहणम्। तेषां लिङ्गाऽभावात्। अव्ययी-भावस्य क्लीबत्वेऽपि लिङ्गाऽन्तराऽभावाच्च। विभक्तिप्रतिरूपकाणां लिङ्ग-योगेऽपि, त्रिषु सारूप्याऽभावात्। इदमेव ध्वनयितुं मनोरमायाम् 'अव्य-यानां प्रायेण निर्लिङ्गत्वादि'त्युक्तम्'—इति क. कुण्डलितः, ख. ग. पाठः।

३ 'सूत्रस्थाऽलिङ्गे' इति ख. ग. पाठः।

४ 'वस्त्विति। बहुवचनादेरर्थप्राधान्यद्योतकस्याऽभावादिति भावः। साह-चर्यस्याऽसार्वत्रिकत्वात्' इति ख. ग. पाठः।

५ 'प्रमाणाभावाच्चेति बोध्यम्' ख. ग. पाठः।

६ 'भविष्यतीति वाच्यम्' इति ख. पाठः।

७ 'अप्रसिद्धत्वं, गौणलाक्षणिकत्वं वा तत्र गौणत्वम्' ख. ग. पाठः।

८ क. नास्ति।

शब्दस्त्रित्वसङ्ख्यारूपमुख्याऽर्थप्रतिपादक[1] एव। इतरविशेषणीभूत इत्यन्यदेतत्। न हीतरविशेषणतामात्रेणाऽप्रसिद्धत्वं, गौणलाक्षणिकत्वं वा भवति। अत एव 'प्रियतिसे'त्यादौ तिस्रादय आदेशा भाष्याद्युदाहृताः सङ्गच्छते।

किञ्च गौणमुख्यन्यायो न प्रातिपदिककार्ये, किन्तूपात्तं[2] विशिष्याऽर्थोपस्थापकं[3] विशिष्टरूपं यत्र तादृशपदकार्ये एव। परिनिष्ठितस्य[4] पदाऽन्तरसम्बन्धे हि 'गौर्वाहीक' इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधाऽयोगः प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम्। 'श्वशुरसदृशस्याऽपत्यमि'त्यर्थे 'श्वाशुरिरि'त्यादावत इञः सिद्धये 'उपात्ते'त्यादि। न च प्रातिपदिकपदं तादृशम्। तेन हि प्रातिपदिकशब्दवदर्थवच्छब्दत्वेनोपस्थितिरिति[5] तस्य विशिष्याऽर्थोपस्थापकत्वाऽभावात्[6]।

निपातपदं तु निपातपदवच्चादित्वेनैव[7] चादीनामुपस्थापकमिति तदुद्देश्यककार्येऽर्थोपस्थापकचादिर्निमित्तत्वात्तत्र न दोषः।

( पदशब्देन[8] च कार्यप्रवृत्तिवेलायां गौणाऽर्थोपस्थापकं पदमुच्यते। अत एव ) 'अग्नीषोमौ माणवका'वित्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वे[9] ईत्वषत्वे भवत एव। [10]तत्प्रवृत्तिवेलायां गौणा-

---

१ 'तत्र ह्येतद्घटकीभूतत्रिशब्दस्त्रित्वसंख्यारूप' ख. पाठः।

२ 'किन्तूपात्तार्थोपस्थापकम्' ख. पाठः।

३ 'पस्थापकविशिष्टरूपकपदकार्ये' इति ख. ग. पाठः।

४ 'परिनिष्ठितस्य पदस्य पदान्तरसम्बन्धे हि' ख. ग. पाठः।

५ 'प्रातिपदिकशब्दवत्त्वेन, अर्थवच्छब्दत्वेन वोपस्थितिरिति' ख. ग. पाठः।

६ 'विशिष्टार्थोपस्थापकत्वाऽभावात्' ख. पाठः।

७ 'निपातपदवत्' इति क. ग. पाठः।

८ ख. ग. पाठः। ९ 'परत्वेऽपि' ख. पाठः।

१० 'तत्प्रवृत्ति' इत्यारभ्य 'उपस्थापकत्वाऽभावात्' इत्यन्तः पाठः क. नास्ति।

ऽर्थोपस्थापकत्वाऽभावात् । यदा त्वयं माणवकोऽग्निरयं सोम इत्युक्ते, परेण 'अग्निसोमौ भोजये'ति प्रयुक्ते, सदृशपराऽग्निसोमपदयोर्द्वन्द्वस्तदा न षत्वं, तन्नामकावित्यर्थके च । अत एव 'अग्नीसोमौ माणवकावि'त्यत्र गौणमुख्यन्यायेन षत्ववारणपरं भाष्यमष्टमे सङ्गच्छते । एवं च 'गां पाठये'-त्यादौ मुख्यगोपदाऽर्थस्य पाठनकर्मत्वाऽसम्भवेन, विभक्त्युत्पत्तिवेलायां प्रयोक्तृभिर्गौणाऽर्थत्वप्रतीतावपि, अपदस्याऽप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणाऽर्थकत्वग्रहेण, 'अत्वं त्वं सम्पद्यते' 'अमहान्महान्भूतः' 'त्वद्व-वती'त्यादिभाष्यप्रयोगे त्वाऽऽद्यादेशदीर्घादीनां करणेन चाऽस्य न्यायस्य पदकार्यविषयत्वमेवोचितम् । अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः ।

किञ्च 'शुक्लामि'त्युक्ते कर्म निर्दिष्टं, कर्त्ता, क्रिया चाऽनिर्दिष्ट' इत्यु-क्त्वा, 'इहेदानीं गामभ्याज कृष्णां देवदत्ते'त्यादौ सर्वं निर्दिष्टम् , गामेव कर्म, देवदत्त एव कर्त्ता, अभ्याजैव क्रिया इत्यर्थकभाष्येण, कारका-ऽऽदिमात्रप्रयोगे, योग्यसर्वक्रियाऽऽद्यध्याहारे प्रसक्ते, नियमाऽर्थः क्रिया-वाचकादिप्रयोग' इत्येतत्तात्पर्यकेण, सामान्यतः क्रियाजन्यफलाश्रयत्वमात्र-विवक्षायां द्वितीयायाः सत्त्वेन, पाठनक्रियाऽन्वयकाले पदस्यैव गौणाऽर्थ-त्वप्रतीतिः प्रयोक्तुरपि ।

( किञ्च 'गामि'त्यादावात्ववृद्ध्यादिकं भवत्येव । विशिष्टरूपोपादाना-

---

१ 'यदा त्वयम्' इत्यारभ्य 'अत एव' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

२ 'अग्नीषोमौ' इत्येव सर्वेषु पुस्तकेषु पाठो दृश्यते । परन्तु भाष्यानुसारेणा-ऽस्माभिः स शोधितः ।

३ 'षत्ववारणपरं भाष्यमग्नीषोमनामकावित्यर्थकोदाहरणपरम्' ख. पाठः ।

४ 'पदकार्यमात्रविषयत्वमेव' ख. पाठः ।

५ 'गौणार्थत्वमिति तत्त्वम्' ख. ग. पाठः ।

६ 'ओकारोपलक्षणत्वात्' इत्यन्तः क. कुण्डलितः ख. पाठः । अस्य ख. पाठस्य स्थाने—'किञ्चात्ववृद्ध्यादौ विशिष्टरूपोपादानाऽभावेन तन्न्यायाप्रवृत्त्या गामित्यादौ न दोषः' इति ग. पाठः । क. कुण्डलितः ।

ऽभावेन तद्विषये तन्न्यायाऽप्रवृत्तेः । 'अर्थाऽऽश्रये एतदेवं भवति, शब्दाऽऽश्रये च वृद्धात्वे' इत्योदादिसूत्रस्थभाष्यस्याऽप्यर्थरहितवर्णरूपशब्दाऽऽश्रय इत्येवाऽर्थः । 'गोत' इत्यस्याऽपि ओकारोपलक्षणत्वात् ) ।

'गौणलाक्षणिकत्वमेव गौणत्वमत्रे'तिमते एतदतिरिक्तोऽभिव्यक्तेतिन्यायोऽपि पदकार्यविषयकः । ध्वनितं चेदं सर्वादिसूत्रे संज्ञाभूतानां प्रतिषेधमारभता वार्त्तिककृता, 'पूर्वाऽपरे'ति सूत्रे'ऽसंज्ञायामि'ति वदता सूत्रकृता, अन्वर्थसंज्ञाऽऽदिभिस्तत्प्रत्याख्यानं कुर्वता भाष्यकृता च ।

(शब्दपरेषु तु शास्त्रीयकार्यप्रवृत्ति-तदभावौ यथालक्ष्यं 'यत्तदेतेभ्य' इत्यादिज्ञापकाद्भवत इति बोध्यम् ) । एतत्परिभाषाफलन्तु 'महद्भूतश्चन्द्रमा' इत्यादावात्वाऽभावः, संज्ञाश्वशुराऽऽदौ यदभावश्चेति बोध्यम् ।

अत एव एषा परिभाषा लौकिकेनाऽर्थेनाऽर्थवद्ग्रहणविषया । सोऽर्थश्च लोके प्रयुज्यमानपदस्यैव । न हि प्रातिपदिकं लोके प्रयुज्यते । कल्पिता हि तस्याऽर्थवत्ता । तत्र च न गौणमुख्यत्वमिति पदकार्ये एवाऽयं न्याय इत्यष्टमे कैयट इत्यलम् ।

त्यदादीनामः । 'अष्टन आ विभक्तावि'त्यतो 'विभक्तावि'त्यनुवर्त्तते । तत्फलन्तु तत्कुलम् । सोर्लुकि अत्वं न ।

इष्टिरिति । 'भाष्यकारस्ये'ति शेषः । 'वार्त्तिकमिदमि'त्यन्ये ।

---

१ 'एवमभिव्यक्तेतिन्यायोऽपि पदकार्यविषयकः' इति ख. पाठः ।

२ क. नास्ति । ३ 'यदभावश्चेति तत्त्वम्' ख. पाठः ।

४ 'यत्त्वेषा' ख. ग. पाठः ।

५ 'अर्थवद्विषयैव' ख. पाठः ।

६ 'प्रयुज्यमानस्य पदस्यैव' ख. पाठः ।

७ 'पदकार्ये एवाऽयं न्याय इति । तन्न । कल्पिताऽर्थवत्त्वमादायाऽर्थवत्परिभाषाया इव, कल्पितगौणमुख्यत्वमादायैतन्न्यायस्याऽपि प्रवृत्तेरौचित्यादित्यष्टमे कैयट इत्यलम्' इति क. कुण्डलितः ख. ग. पाठः ।

द्विपर्यन्तानां किमिति । युष्मदस्मदोरात्वयत्वलोपैर्विशेषविहितै-रत्वस्य बाधात्, किमः काऽऽदेशस्य विधानाच्चेति प्रश्नः । ननु व्यक्तिपक्षे 'अत्वसन्तस्ये'ति सूत्रेऽस्याऽप्यतोरुपस्थितिसामर्थ्यात्सौ न 'त्यदादीनाम' इत्यस्य प्राप्तिरित्यपि शङ्का स्यादत आह—भवन्ताविति ।

इञोऽपवाद इति । अनेन बहुवचनमात्रविषयोऽकारान्त इकारान्ताद्भिन्न एवेति ध्वनयति । यद्यपि हरिशब्दनिरूपणेन इकारान्ताऽन्यकृत्तद्धितान्तवत् अयमपि उपन्यस्तप्रायः, तथाऽप्यत्र निरूपणम् 'इकारान्तस्य बहुत्वेऽकारान्तत्वमि'ति जरदनुसारिणां भ्रमनिवृत्त्यर्थम् ।

यत्तु 'इञ्यपि, तस्य बहुत्वे 'बह्वच इञः प्राच्यभरतेष्वि'ति लुकि, अन्तर्वर्त्तिविभक्त्या पदत्वेन लोपसिद्धेरिदं व्यर्थम् । भसंज्ञा तु वर्णाऽऽश्रयत्वाल्लुका लुप्तत्वाच्च प्रत्ययलक्षणेन ने'ति । तन्न । प्राच्यभरतेभ्योऽन्यत्र लुगभावात् । सुब्विधौ नलोपाऽसिद्धत्वेन 'उडुलोमान्', 'उडुलोमैरि'त्याद्यसिद्ध्यापत्तेश्च । इतीदन्ताः ।

ङौ तु सवर्णदीर्घ इति । यथा चाऽस्य ङौ प्रयोगेऽपि 'ईदूतौ च सप्तम्यर्थे' इति सूत्रस्थभाष्यविरोधो न भवति, तथा भाष्यप्रदीपोद्द्योते स्पष्टम् । 'ईदूतौ चे'त्यत्र अत्राऽपि ग्रन्थे ध्वनितम्[1] ।

क्विबन्तवातेति । 'मीङ्[2] माने' इति ईकारान्तात्क्विप् । 'माङ् माने' इत्यस्मात्क्विपि त्वीत्वम् । ईत्वविधौ 'अवकारादावि'त्यस्य भाष्ये प्रत्याख्यानात् । 'शंस्था' शब्दे तु भाष्यप्रयोगादेव ईत्वाऽभाव इति

---

१ 'ध्वनितं च' ख. ग. पाठः ।

२ 'यत्तु मीङ् माने' इति ईकारान्तात् क्विप् । 'माङ् माने' इत्यस्मात् क्विपि त्वीत्वं दुर्लभम् । तस्य वकारादौ प्रतिषेधात् । अत एव शंस्थाशब्दे ईत्वं नेति वक्ष्यामः । किञ्च सत्यपि ईत्वे 'एरनेकाच' इति यण् दुर्लभः । ईत्वविधावनुवर्त्तमानेन 'असिद्धवदि'त्यनेन यणि तस्याऽसिद्धत्वादिति । तन्न । 'अवकारादावि'त्यस्य भाष्ये प्रत्याख्यानात् ।' इति ख. ग. पाठः ।

'स्थः क चे'ति सूत्रे हरदत्तादय इत्यग्रे निरूपयिष्यामः। यणि ईत्वस्याऽसिद्धत्वन्तु न प्राप्नोति। क्वावीत्वं, विभक्तौ यणादेश इति व्याश्रयत्वादिति दिक्[1]।

वातप्रमीः। निःश्रृङ्गो मृगाऽऽकृतिर्जन्तुविशेषः।

बहुश्रेयसीति। 'ईयसश्चे'ति निषेधान्न कप्। न च समासान्तविधौ लिङ्गविशिष्टपरिभाषाऽभावस्य 'ङ्याप्प्रातिपदिकादि'ति सूत्रे भाष्ये उक्तत्वात्, ईयसन्तोत्तरपदत्वाऽभावाच्च कथं निषेधः?। किञ्च 'ईयसश्चे'ति-निषेधो'ऽनन्तरस्ये'ति न्यायेन 'शेषाद्विभाषे'त्यस्यैव बाधकः स्यात्, न तु 'नद्यृतश्चे'त्यस्येति वाच्यम्। 'गोस्त्रियोरि'ति सूत्रे 'बहुश्रेयसी'ति भाष्योदाहरणात्समासान्तविधौ लिङ्गविशिष्टपरिभाषाया अप्रवृत्तावपि, तन्निषेधविधौ तत्प्रवृत्तेः। अत एवाऽनन्तरस्येति न्यायोऽप्यत्र न प्रवर्त्तत इति बोध्यम्। 'ईयसो बहुव्रीहेर्ने'ति निषेधान्नोपसर्जनह्रस्वः।

यू स्त्र्या। 'यू' इति दीर्घयोरेव ग्रहणम्। व्याख्यानात्। 'यू' इत्यत्र 'वा च्छन्दसी'त्यनेन 'दीर्घाज्जसी'ति निषेधस्य पाक्षिकत्वात्पूर्वसवर्णदीर्घः। यू किम्?। मात्रे। मातुः। 'आण्नद्या' इति स्यात्।

स्त्रियमाचक्षाते-'स्त्र्याख्यौ'। मूलविभुजादित्वात्कः।

अत्र केचित्—वर्णयोरेव संज्ञा। 'आच्छीनद्योरि'ति सूत्रस्वरसात्। 'स्त्र्याख्या'विति तु ईदूतोर्विशेषणम्। तयोः स्त्र्याख्यत्वन्तु ङ्यादौ स्वतः। मनोरमायां 'ङ्यादिष्वि'ति बहुवचनन्तु प्रयोगभेदाऽभिप्रायेण। क्वचित्तु

---

१ इतोऽग्रे—'अत एव[1] प्रविगणय्ये'त्यादौ 'अतो लोपोऽयादेशे नाऽसिद्ध' इति भाष्यं सङ्गच्छते। एवं च माङोऽपि निर्बाधमिति दिक्' इति क. कुण्डलितः ख. पाठः।

२ 'हे बहुश्रेयसीति' इति ख. पाठः।

---

1 'अत एव विगणय्येत्यादौ' इति ख. पाठः।

स्त्रीवाचकवर्णसमुदाये घटकत्वेन प्रवेशात्, शक्तिपर्याप्त्यधिकरणत्वस्या-ऽविवक्षितत्वादिति वदन्ति ।

अन्ये तु तदन्तयोरिति वदन्ति । 'स्त्र्याख्या'वित्युपस्थापितस्त्रीवाचकस्य विशेष्यत्वात्तदन्तविधिरित्यभिप्रेत्याऽऽह—**ईदूदन्ताविति** । 'आच्छीनद्यो-रि'त्यादौ तु नदीशब्दस्य तदवयवे लक्षणा बोध्या । 'आख्या'ग्रहणा-न्नित्यत्वलाभः । तदाह—**नित्यस्त्रीलिङ्गाविति** । तत्फलन्तु ग्रामणीशब्दा-दिष्व्याप्तिः । नित्यस्त्रीत्वं च लिङ्गाऽन्तरविशिष्टाऽर्थाऽनभिधायकत्वम् । 'स्त्रीविषयावेव यौ नित्यमि'ति भाष्यस्वरसतस्तथैव लाभात् ।

नन्वेवं ङ्यन्तकुमार्यादिशब्दानामपि नदीत्वं न स्यात् । क्यच्-क्विपो-र्निर्वृत्तेन त्रिलिङ्गेन समानाऽऽकारतया, नित्यस्त्रीत्वाऽभावादिति चेन्न । प्रत्यासत्तिन्यायेन, 'स्त्र्याख्या'विति विशेषणसामर्थ्येन च प्रवृत्तिनिमि-त्तैक्ये नित्यस्त्रीत्वस्याऽऽश्रयणात् ।

नन्वेवं 'बहुश्रेयसी'शब्दस्य नदीत्वं न स्यादत आह—**प्रथमेति** । 'अर्थान्तरसंक्रमात्पूर्वं विद्यमाननित्यस्त्रीत्वमादाय नदीत्वमर्थान्तर-सङ्क्रमेऽपि तस्य कर्त्तव्यमि'त्यर्थः । 'प्रकृष्टा धीर्यस्ये'ति विग्रहे 'प्रध्यै ब्राह्मणाये'त्यत्र 'नेयङि'ति निषेधस्तु न । अत्राऽङ्गे इयङुवङोः स्थित्य-भावात् । बहुव्रीहित्वेऽपि 'नद्युत' इति कप् न । ऋकारसाहचर्येण यस्य वृत्तेः प्राङ् नदीत्वं, तदुत्तरपदक एव तत्प्रवृत्तेः । प्रतिपदोक्तगतिसमासाऽभावे-ऽपि यथा यण्, तथाऽग्रे निरूपयिष्यामः ।

इदं च 'यूस्त्र्ये'ति सूत्रविषयमेव, न तु 'ङिति ह्रस्वश्चे'त्येतद्विषयम् । अत एव 'अतिश्रिये ब्राह्मणाये'त्यत्र विकल्पो न । महासंज्ञाबललब्ध-स्त्रीत्वेन तत्राऽङ्गस्याऽपि विशेषणात् । यथोद्देशपक्षे त्वन्तरङ्गत्वात्पूर्वप्रवृत्त-नदीसंज्ञयैव नद्यन्तत्वात्समुदाये कार्यसिद्ध्या इदं न कार्यम् ।

( नदीसंज्ञायां च लक्ष्याऽनुरोधाद्यथोद्देश एवाऽऽश्रयणीयः )[1] ।

---

1 क. नास्ति, ख. ग. पाठः ।

कार्यकालेऽपि अजहत्स्वार्थायामवयवस्य नित्यस्त्रीत्वविशिष्टाऽर्थबोधकत्वेन तस्यैव सञ्ज्ञया, नद्यन्तत्वात्समुदाये कार्यसिद्धिः। इदमेवाऽभिप्रेत्य भगवता भाष्यकारेण प्रत्याख्यातम्—'अवयवस्त्रीविषयत्वात्सिद्धमि'ति। 'अवयवशब्देन चाऽत्र वृत्तिप्रकृतिभूतशब्दग्रहणम्। अत एव क्यजाद्यन्ते न दोषः। तत्रापि[2] कुमारीशब्दस्येच्छाविशेषणतया स्त्र्याख्याऽर्थबोधकत्वात् कार्यकालपक्षे न दोषः।

हे बहुश्रेयसीति। ह्रस्वे कृते गुणस्तु न। प्रक्रियालाघवाय 'अम्बाऽर्थानां ह्रस्वः' 'ह्रस्वनद्योर्गुणः' इत्येव वक्तव्ये, ह्रस्वविधानसामर्थ्यात्। 'जसि चे'त्यत्र तु ह्रस्वग्रहणमेवाऽनुवर्त्तते, न 'नदी'ग्रहणम्, एकदेशे स्वरितत्वप्रतिज्ञानादिति भाष्यकृतः।

'अम्बाऽर्थनद्योर्गुण' इति वक्तव्ये ह्रस्वविधानसामर्थ्यान्न गुण' इति न युक्तम्। 'अनः क्लीबं जले, शोके, मातृस्यन्दनयोरपी'ति रभस-रुद्र-विश्वादिकोशेषूक्तस्य मातृपर्यायस्याऽनःशब्दस्याऽम्बार्थकत्वेन गुणाऽऽपत्तेः। ह्रस्वग्रहणे तु 'अचश्चे'त्युपस्थितावजन्तस्याऽम्बार्थकस्य ग्रहणान्न दोषः। मातरि तस्य नपुंसकत्वेऽपि 'हे वारे' इतिवत्पक्षे गुणाऽऽपत्तिरिति बोध्यम्। अत एव 'अम्बाऽर्थनद्योरणि'त्येव सूत्रयितुमुचितमि'त्यपास्तम्। ह्रस्वश्चाऽयमनन्तरस्येति न्यायात् 'ह्रस्वस्य गुण' इत्यस्यैव बाधकः। तेन 'मातः' इत्यत्र 'ऋतो ङी'ति गुणो भवत्येवेत्याहुः।

आण्नद्याः। 'अ'डेव वक्तुं युक्तः, 'अजादीनामटा सिद्धमि'तिवत्। पररूपन्तु न। 'अटश्चे'ति पुनर्विधानाऽर्थेन चेन पररूपबाधादित्याहुः। तन्न। तत्पक्षे 'अटश्चे'त्यत्र 'धाता'वित्यपकर्षेण वृद्ध्यनापत्तेः। अत एव तत्पक्षे 'अस्वपो हसती'त्यत्र न दोषः।

आटश्च। यद्यपि 'वृद्धिरेची'ति सिद्धम्, अत एव 'न माङ्योगे'

---

१ 'कार्यकालेऽपि' इत्यारभ्य 'कार्यसिद्धिः' इत्यन्तः क. पाठः, ख. ग. नास्ति।

२ 'तत्रापि' इत्यारभ्य 'न दोषः' इत्यन्तः क. ग. पाठः।

इति सूत्रस्थषाष्ठभाष्योक्ते 'अटश्चे'ति न्यासे न दोषः, तथाऽपि परत्वेन न्याय्यत्वादुपन्यस्तमिदम् ।

ङेराम् । 'ङेरि'ति सप्तम्येकवचनम् । 'स्त्रियामि'त्यादिनिर्देशात् । इह परत्वादिति । सकृद्गतिन्यायाऽऽश्रयणादिति भावः । अत एव 'स्त्रियामि'त्यादिनिर्देशाः सङ्गच्छन्ते । स्पष्टं चेदं 'ह्रस्वनद्याप' इत्यत्र भाष्ये ।

([1]एतेन नित्यत्वात्पूर्वमाटि, 'रमायामि'त्यादौ याटि च, तेन व्यवधानादाम् दुर्लभ' इत्यपास्तम् । शब्दाऽन्तरप्राप्त्योभयोरप्यनित्यत्वेन, परत्वादाम एव प्रवृत्तेः) ।

नच नपुंसक'ग्रामणि'शब्दान्ङावेकदेशविकृतन्यायेन 'नी'शब्दत्वादामि नुडापत्तिरिति वाच्यम् । परस्यौत्त्वस्य प्राप्त्या, आमो दुर्लभत्वात् । औत्त्वमपि नुमा पूर्वविप्रतिषेधेन बाधितमित्यन्यदेतत् । तस्मात् 'ग्रामणिनी'त्येवेति बोध्यम् । पुंवत्त्वपक्षे तु ह्रस्वस्याऽप्यभावात् 'ग्रामण्यामि'त्येवेत्याहुः । न च येन नाप्राप्तिन्यायेन नद्याम आडपवादत्वात्कथं तद्विषये आटः प्रवृत्तिरिति वाच्यम् । क्वचिदपवादप्रवृत्तिविषयेऽपि तत्प्रवृत्त्यनन्तरमुत्सर्गप्रवृत्त्यङ्गीकाराददोषः । अत्र च 'स्त्रियामि'त्यादिनिर्देशा लिङ्गम् । स्पष्टं चेदं 'पादः पदि'ति सूत्रे कैयटे ।

[2]यत्त्वागमादेशयोर्न बाध्य-बाधकभावो, भिन्नफलत्वात् । अत एव 'ब्राह्मणे दधि दीयतां, कम्बलं कौण्डिन्याये'त्यादौ कम्बलेन न दधिदानबाधः । बाधितस्य हि न प्रवृत्तिः । एवञ्च पूर्वमाडादौ व्यवधनादाम्शास्त्रस्य वैयर्थ्येन पूर्वं तत्र प्रवृत्ते, पुनराडादि भवत्येव । स्पष्टा चेयं रीतिः 'च्छ्वोः शूडि'ति सूत्रे कैयटे इत्याहुः । तन्न । 'अपवादो नुग्दीर्घत्वस्ये'ति 'दीर्घोऽकित' इति सूत्रस्थभाष्यविरोधात् ।

---

१ 'एतेन' इत्यारभ्य 'एव प्रवृत्तेः' इत्यन्तः क. कुण्डलितः ख. पाठः ।

२ 'यत्त्वागमादेशयोः' इत्यारभ्य 'भाष्यविरोधात्' इत्यन्तः क. ग. पाठः ।

अङ्न्यन्तत्वादिति। 'लक्षेर्मुट् चे'त्यौणादिकेप्रत्ययान्तत्वादिति भावः। अत एवोपसर्जनह्रस्वो[2] न। गोस्त्रियोरि'त्यत्र स्वरितत्वेन ङ्यधिकारोक्तस्यैव ग्रहणात्।

कुमारीति। यद्यपि क्विबर्थं प्रति ङ्यन्तस्योपसर्जनत्वात् ह्रस्वत्वं प्राप्तम्, तथापि ह्रस्वविधायके शास्त्रीयोपसर्जनग्रहणादुपसर्जनह्रस्वो न।

अचि श्नु। यद्यपि[3] 'ऊङ् च गमादीनामि'तिवार्त्तिकेन क्विपि, अनुनासिकलोपे, ऊङि च, निष्पन्न 'भ्रू'शब्दस्य धातुत्वादेव सिद्धं, तथाऽपि 'भ्रमेश्च डूरि'त्युणादिनिष्पन्न'भ्रू'शब्दस्य यणभावार्थं ग्रहणमित्याहुः।

इह 'य्वोरि'ति धातोरेव विशेषणं, न त्वन्ययोः, अव्यभिचारात्। तदपि समानाधिकरणमेव। विभिन्न[4]वचनत्वेऽपि 'वेदाः प्रमाणमि'त्यादौ तथा दर्शनात्।

( [5]'श्नुप्रभृत्यन्ताऽङ्गावयवेवर्णोवर्णयो'रिति व्याख्यानं त्वयुक्तमेव। वैयधिकरण्यस्याऽन्याय्यत्वात्। ङित्त्वस्य वैयर्थ्याऽऽपत्तेश्च। श्न्वादीनामङ्गस्य च स्थानषष्ठ्या निर्देशाऽभावात्। 'क्षिपति' 'अद्युतदि'त्यादावियङा[6]पत्तिश्च। 'दिदिवतुरि'त्यत्र 'एरनेकाच' इति यणापत्तिश्च। यण्शास्त्रे 'इवर्णान्ताङ्गस्ये'त्येवाऽर्थोऽङ्गीकारे तु तत्राऽपीयङापत्तिर्बोध्या। 'अजादौ[7] प्रत्यये' इत्यस्य अङ्गविशेषणताया न्याय्यत्वात्। न चाऽत्र 'लोपो व्योरि'ति

---

१ अत्र 'ई'प्रत्ययान्तत्वात्' इति च्छेदो बोध्यः।

२ 'उपसर्जनग्रहणादुपसर्जनह्रस्वो न' ग. पाठः।

३ 'यद्यपि' इत्यारभ्य 'तथापि' इत्यन्तः क. ग. पाठः।

४ 'विभिन्न' इत्यारभ्य 'तथा दर्शनात्' इत्यन्तः क. ग. पाठः।

५ 'श्नु' इत्यारभ्य 'अवलपरे दोषाच्च' इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

६ 'इयङाद्यापत्तिश्च' ख. पाठः।

७ 'न चाऽजादौ प्रत्यये इत्यनेन य्वोर्विशेषणान्न दोषः। अङ्गविशेषणताया न्याय्यत्वात्' इति ख. पाठः।

लोपेन निर्वाहः । प्रत्ययनिमित्तेयङुवङोरसिद्धत्वात् । 'ऊयतुरि'त्यादौ-अवल्परे दोषाच्च )। तदाह—इवर्णोवर्णान्तधातोरिति ।

इत्येतस्येति । इत्येतदन्तस्येत्यर्थः । तेन 'सुभ्रुवावि'त्यादिसिद्धिः ।

ननु 'धातोरुच्यमानं कार्यं धातुप्रत्यये' इति 'मृजेर्वृद्धिरि'तिसूत्र-पठितपरिभाषया सुपि इयङादीनामनापत्तिरिति चेन्न । 'सुधी'शब्दे यण्निषेधाऽऽरम्भसामर्थ्येनाऽत्र प्रकरणे परिभाषाया अप्रवृत्तिकल्पनात् । 'क्षियो दीर्घात्' 'भुवः संज्ञाऽन्तरयोरि'त्यादिनिर्देशाच्च । य्वोः[1] षट्त्रिंशदिति[2], यथासङ्ख्याऽप्राप्तेराह–आन्तरेति । स्थानत इति भावः । य्वोरिति किम् ? । वव्रे । अचि किम् ? । युयात् ।

एरने(का) । 'अचि श्नुव'त्यत एकदेशे स्वरितत्वप्रतिज्ञाबलादनुवृत्त-धातुग्रहणं चाऽऽवृत्त्या संयोगाऽङ्गयोर्विशेषणम्, व्याख्यानात्, लक्ष्याऽनु-साराच्च, एकदेशाऽन्वयेऽपि सौत्रत्वाद्वृत्तिः । न च 'उन्न्यावि'त्यादौ यणभावे इष्टाऽऽपत्तिरेवाऽस्तु । 'स्वरपूर्वा, पदपूर्वा चोपधा यस्येवर्णस्य तस्य यणि'त्यर्थकेन 'स्वरपद-पूर्वोपधस्ये'ति वार्त्तिकेन तत्र यण इष्टत्वा-ऽनुमानात् । उक्तोपायेन[3] प्रत्याख्यातं च। ('उन्नी'[4] शब्दादिभ्यः[5] क्यजन्तेभ्य[6], आचार[7]क्विबन्तेभ्यो वा कर्त्तृक्विप्तु न, अनभिधानादिति न तत्र भाष्य-वार्त्तिकयोः फलभेदः । केचित्तु भाष्याऽनुरोधेन वार्त्तिके 'पद'पदेन 'धात्ववयवत्वाऽनधिकरणं पदमेवे'ति नाऽभिधानेऽपि फलभेदः, उभय-मतेऽपि यणभावादित्याहुः) । इत्यभिप्रेत्याह—धात्ववयवेत्यादि । अङ्ग-विशेषणफलन्तु 'हरी' इत्यादि । अङ्गस्य, धात्ववयवसंयोगपूर्वो न भवति

---

१ इकारोकारयोः षट्त्रिंशद्भदसत्त्वादियङुवङ्भ्यां यथासङ्ख्याऽप्राप्तिरित्यर्थः ।

२ 'य्वोः षट्त्रिंशत्' इति ख. पाठः ।  ३ उक्तोपायेन = आवृत्त्या ।

४ क. कुण्डलितः ख. ग. पाठः ।  ५ 'तन्त्रीशब्दादिभ्यः' इति ग. पाठः ।

६ 'क्यजाद्यन्तेभ्यः' इति ग. पाठः ।

७ 'आचारक्विबन्तेभ्यो वा' इति ख. पाठः, क. ग. नास्ति ।

य इवर्णस्तदन्तत्वात्। (न[1] च धात्ववयवसंयोगपूर्वत्वस्य धात्ववयवेकार एव सम्भवेन, संयोगवद्विप्रयोगस्याऽपि विशेषाऽवगतिहेतुतया तद्भिन्नस्याऽपि धात्ववयवस्यैव ग्रहणान्न दोष इति वाच्यम्। 'तन्त्रारि'त्यादौ धात्ववयवसंयोगपूर्वस्याऽधात्ववयवस्याऽपि सम्भवात्)। यद्यपि 'इको गुणवृद्धी' इति निर्देशेन प्रत्यासत्त्या धात्ववयवसंयोगपूर्वभिन्नस्येवर्णस्य धात्ववयवस्यैव ग्रहणेन 'हरी' इत्यादौ न दोषस्तथाऽपि स्पष्टप्रतिपत्तये'धातोरि'त्यस्याऽऽवृत्तिरेवाऽऽश्रिता।

'उत्सर्गसमानदेशा अपवादा' इति न्यायेन तु न निर्वाहः। अङ्गांऽशे तदसम्बन्धे 'हरिभि'त्यादावपि प्राप्त्या, तेन येन नाप्राप्त्यभावेन, तदपवादत्वस्यैवाऽभावादिति दिक्।

एः किम्?। असंयोगपूर्वग्रहणम् इवर्णविशेषणं यथा स्यात्, अङ्गविशेषणं मा भूदिति। तेन 'यवक्रियावि'त्यादौ नाऽतिप्रसङ्गः। न च तदभावे 'लुलुवतुरि'त्यादावतिप्रसङ्गः। 'ओः सुपी'ति नियमाऽऽश्रयणात्। विपरीतनियमस्तु न। 'सुधी'शब्देऽचि सुपि यण्निषेधाऽऽरम्भादित्याहुः।

यत्तु 'अनेकाचोऽसंयोगादि'त्येव सूत्रं कार्यम्। 'य्वोरि'त्यनुवर्त्य 'धात्ववयवसंयोगभिन्नात्परौ यौ यू, तदन्तस्ये'त्यर्थः। 'ओः सुपी'ति 'उवर्णान्तस्य चेत्सुप्येवे'ति नियमार्थम्। अतो 'लुलुवतुरि'त्यादौ न दोष' इति। तन्न। 'यवक्रियावि'त्यादावपि धात्ववयवसंयोगभिन्नरेफात्परत्वेनाऽतिप्रसङ्गात्। सिद्धान्ते तु 'धात्ववयवसंयोगपूर्वभिन्नस्ये'त्यर्थान्न दोषः।

यदि तु[2]–'असंयोगादि'तिविशेषणसामर्थ्यात् 'धात्ववयवसंयोगात्परस्य ने'ति व्याख्यायते, तदा 'उदियावि'त्यादौ दोषः। मम तु पूर्वग्रहणसामर्थ्येन, पर्युदासवृत्त्या च तद्भिन्नस्य धात्ववयवपूर्वस्यैव ग्रहणान्न दोषः। (वा[3]र्त्तिकेऽपि पदपूर्वोपधासाहचर्यात्स्वरपूर्वोपधाऽपि धात्ववयवभूतैव गृह्यते इति नाऽत्र दोषः।)

---

१ क. कुण्डलितः ख. ग. पाठः। २ 'यदि हि' ख. पाठः।

३ क. कुण्डलितः ख. ग. पाठः।

कुमार्याविति । 'नः क्ये' इति पदत्वनिषेधादन्तर्वर्त्तिविभक्त्या पदत्वमाश्रित्य शाकलं नेति बोध्यम् । प्रधीरिति । 'प्रकृष्टं ध्यायती'ति विग्रहः । अत एव न नदीत्वम् । ध्यानकर्त्तृत्वस्य लिङ्गत्रयसाधारण्येन नित्यस्त्रीत्वाऽभावात् । 'प्रकृष्टा धीर्यस्ये'ति विग्रहे तु नदीत्वं भवत्येव ।

संयोगस्य धातुना विशेषणे फलमाह–उन्न्याविति । ग्रामणीरिति । क्विपि 'अग्रग्रामाभ्यां नयतेरि'ति णत्वम् ।

'गतिकारकपूर्वस्यैवे'ति भाष्ये पठ्यते । स च नियमः । तेन 'गतिकारकपूर्वभिन्नस्य ने'त्यर्थः । यत्तु–'इदं वचनं यण्विधिनैकवाक्यतयाऽन्वेति, अतो न नियामकत्वमि'ति । तन्न । एवकारस्याऽनन्वयाऽऽपत्तेः । 'निन्यतुरि'त्यसिद्ध्यापत्तेश्च । गतिकारकपूर्वभिन्नं च तत्सदृशं सपूर्वपदमेव गृह्यते । तेन बहुच्पूर्वे, 'निन्यतु'रित्यादौ च यण् । तदेतदाह–गतिकारकेतरेति । शुद्धधियाविति । 'शुद्धा धीर्यस्ये'ति विग्रहः । 'शुद्धं ध्यायती'ति विग्रहे यण् भवत्येव । न चाऽऽद्यविग्रहेऽप्यस्तीत्यध्याहारेण कारकत्वमस्त्येवेति वाच्यम् । वृत्तौ शुद्धधीपुरुषपरत्वेनाऽकारकत्वात् । (प्रत्यासत्त्या यण्स्थान्यवयवकधात्वर्थकारकस्यैव ग्रहणाच्च ) ।

कथं तर्हीति । 'दुर्ध्यायती'ति, 'दुष्टा धीर्येषा'मिति, 'वृश्चिकाङ्घ्री'रिति विग्रहाऽभिप्रायेण प्रश्नः । यत्तु 'भाष्यवचने 'गतिकारकपूर्वपदे'त्यत्र प्रतिपदोक्तत्वाद्गतिसमासस्य नित्याऽधिकारस्थस्यैव ग्रहणम् , तत्साहचर्यात्कारकांशेऽपि 'कर्त्तृकरणे'इत्यादेरेव । एवं च प्रागुक्तविग्रहेऽपि न दोषः । 'दुर्ध्यायती'ति विग्रहे तु यण् भवत्येवे'ति श्रीपतिदत्तादयः । तन्न । भाष्ये 'पूर्वपद'ग्रहणाऽभावेन शब्दप्रयोज्यसमासोपस्थितेरभावात् । लक्षणप्रतिपदोक्तपरिभाषायाश्च विशिष्टरूपोपादानविषयत्वेन, तत्प्रवृत्तौ माना-

---

१ 'बहुच्पूर्वे' इति लघुशब्देन्दुशेखरे नास्ति ।

२ चकारः क. ग., लघुशब्देन्दुशेखरे च नास्ति ।

३ क. कुण्डलितः ख. ग. पाठः ।

ऽभावात् । अत एव 'यू स्त्र्याख्यावि'ति सूत्रस्थः 'प्रकृष्टा धीरि'ति विग्रहाऽभिप्रायकः 'प्रध्यै ब्राह्मण्यै' इति भाष्यप्रयोगः सङ्गच्छते । एवञ्चोक्तप्रयोगयोरुक्तविग्रहे यणेव प्राप्नोतीत्याशयेनाऽऽह—दुःस्थितेति ।

न च 'प्रकृष्टा धीरि'ति विग्रहेऽपि 'प्रध्यमि'त्यत्र यण् न स्यात् । 'प्र'-शब्दस्य कृषिं प्रति गतित्वेऽपि, धीशब्दं प्रति तत्त्वाऽभावादिति वाच्यम् । प्रशब्दोपात्तप्रकर्षस्य धीशब्दोपात्तधात्वर्थविशेषणत्वेनैव बोधात्[1] । प्रकृते दुःशब्दोपात्तदुष्टत्वस्य तु स्थितिक्रि[2]याया विशेषणत्वेन वैषम्यादित्याहुः ।

यत्क्रियायुक्ता इति । 'या चासौ क्रिये'ति विग्रहः । तं प्रतीति । तद्वाचकं प्रतीत्यर्थः । यद्वा 'यस्य धातोर्वाच्यया क्रियया युक्ता' इत्यर्थः । अयं चाऽर्थ 'उपसर्गाः क्रियायोगे' इति सूत्रे 'योग'ग्रहणेन बोधित इत्यवोचाम ।

नेहेति । ततश्च सम्बन्धसामान्यषष्ठ्यैव समासः[3] । 'भीत्राऽर्थानामि'ति सूत्रन्तु हेतुत्वप्रकारकबोधे तृतीयाबाधनार्थम् । विभक्तिप्रकरणे तु न कृतम् । कारकत्वप्रयुक्तकार्याऽनापत्तेः[4] । किञ्च[5] हेतुत्वाऽविवक्षायां, सम्बन्धत्वेन विवक्षायां, षष्ठी सूत्रारम्भेऽपीति भावः । ये तु वैतण्डिकतया 'भीत्रार्थानामि'त्यस्य षष्ठीबाधनार्थत्वमिच्छन्ति, तैः सूत्रमते षष्ठी दुर्लभा ।

भाष्यरीत्या बुद्धिकृताऽपायमाश्रित्य सूत्रप्रत्याख्यानेऽपि, फलभेदे प्रत्याख्यानाऽयोगादनभिधानेन तदभावोऽङ्गीकार्यः[6],तन्मतेऽप्याह—वृश्चिकसम्बन्धिनीति ।

---

१ 'धात्वर्थ एवान्वयात्' ख. पाठः ।

२ 'स्थितिक्रियायामन्वयेन वैषम्यात्' ख. पाठः ।

३ 'समास इति भावः' खः पाठः ।

४ 'कार्यानापत्तेरिति तात्पर्यम् । केचित्तु सूत्रमते 'भीत्रार्थानामि'त्यस्य षष्ठीबाधनार्थत्वात्षष्ठी दुर्लभा । भाष्यरीत्या बुद्धिकृताऽपायमाश्रित्य'इति ख. पाठः ।

५ 'किञ्च' इत्यारभ्य 'षष्ठी दुर्लभा' इत्यन्तः क. ग. पाठः ।

६ 'अङ्गीकार्य इति तन्मतेऽप्याह' ख. पाठः ।

उत्तरपदेति । पूर्वपदाऽन्तर्गतस्येत्यर्थः । शाकपार्थिवाऽऽदित्वादिति भावः । 'परमदीध्याव'त्यादौ तु च्छान्दसत्वाद्यण् ।

न भू । 'अनन्तरस्ये'ति न्यायेन 'एरनेकाचः' 'ओः सुपी'तिसूत्रद्वय-प्रापितस्यैवाऽयं निषेधः। अङ्गेन च प्रत्ययाऽऽक्षेपः। तथा च सुप्येव फलितः। तदाह—सुपीति । सुधियाविति । 'शोभना धीर्यस्ये'ति विग्रहे ऽप्युत्तर-पदत्वे चाऽपदादिविधावि'तिप्रत्ययलक्षणप्रतिषेधात् शाकलं न ।

लोपाविति । 'अतो लोपः' 'लोपो व्योरि'त्याभ्यामिति भावः। न चाऽल्लोपः स्थानिवत् । यलोपे तन्निषेधात् । न च परत्वाद्वेरपृक्तलोपे, वल्परत्वाऽभावाद्य[1]लोपो न प्राप्नोतीति वाच्यम् ।

'लोपो व्योर्वलि' । ततो 'वेः' । पूर्वसूत्रमनुवर्त्तते । व्यन्तस्य व्योर्लोपो भवति वलि । वल् च प्रत्यासत्तिन्यायेन वेरेव[2]। त[3]त्सामर्थ्यात्पूर्वं वलि लोपः । ततो'ऽपृक्तस्ये'तियोगविभागेन भाष्यकृता साधित्वाच्च । अत एव 'कौ लोपो वक्तव्य' इति एतत्सा[4]धनाय प्रवृत्ते वार्त्तिके ककारो-ऽविवक्षित इत्याहुः । 'विचोऽत्यल्पविषयताध्वननाय ककारोक्तिरि'त्यन्ये ।

स्थानिवत्त्वादिति । एवं च यणादेशे, यलोपे स्थानिवत्त्वनिषेधाद् यलोपे, 'सख्' इत्येव प्रातिपदिकं स्यादिति भावः। न चाऽन्तवर्त्तिविभक्त्या पदत्वात् 'न पदान्ते'ति निषेधः । 'नः क्ये' इति नियमेनाऽस्याऽपदत्वात् । ननु नियमस्य सजातीयाऽपेक्षत्वेन हलन्त एव प्रवृत्तिरिति न दोषः ।

---

१ 'यलोपो न प्राप्नोतीति वाच्यम् । 'लोपो व्यो'रिति सूत्रे विधेयस्य प्रमथ-निर्देशेन 'वेरपृक्तलोपाद्वलि लोपस्य बलवत्त्वज्ञापनात्' ख. ग. पाठः ।

२ 'वेरेव । तत्र परत्वादपृक्तलोपेऽपि वचनसामर्थ्यात्प्रत्ययलक्षणम्' इति ख. ग. पाठः । क. कुण्डलितः ।

३ 'तत्सामर्थ्यात्पूर्वं वलि लोपः' इति क. पाठः । ख. ग. नास्ति ।

४ 'एतत्साधनाय प्रवृत्ते' इति क. पाठः, ख. ग. नास्ति ।

किञ्चाऽन्तर्भूतक्यजकाराऽपेक्षेऽन्तरङ्गे यणि बहिर्भूतकिब्रपेक्षक्यच्सम्बन्धियलोपस्य बहिरङ्गतयाऽसिद्धत्वाद्व्यवधानेन यणोऽप्राप्तेरिति चेन्न। बहिरङ्गपरिभाषाया 'नाऽजानन्तर्ये' इति निषेधात्। प्रमाणानां सामान्ये पक्षपातेन सामान्याऽपेक्षनियमस्यैव युक्तत्वाच्च। अत एव 'गव्यतो'त्यादौ न 'लोपः शाकल्यस्ये'ति वलोपः।

क्कौ लुप्तमिति। भावे क्तः। लोप इत्यर्थः। प्रत्ययलक्षणसत्त्वाद्दीर्घस्य न निवृत्तिः। 'किलुगुपधे'ति वार्त्तिके 'क्कौ'त्यंशस्य 'क्कौ लुप्तं न स्थानिवदि'त्यर्थं प्रदर्श्य, लवमाचक्षाणो लौरित्यसिद्धिमाशङ्क्य, एवं तर्हि 'क्कौ विधिं प्रति न स्थानिवदि'ति भाष्ये उक्तत्वेनाऽस्य क्काचित्कत्वम्। न चाऽभाव एवाऽस्याऽस्तु। गोमत्यतेरप्रत्यये 'गोमानि'त्यादिभाष्यविरोधाऽऽपत्तेः। तेन क्येऽस्य[1] प्रवृत्तिः। 'ण्यन्तेऽपि पादयतेः पात्, 'पद्'इति[2] 'येन विधिरि'ति सूत्रभाष्याण्ण्यन्तेऽपि[3]। [4]अस्याऽसार्वत्रिकत्वादेव पिपठिषतेरप्रत्यये नपुंसके, शौ, 'पिपठिषी'त्येवेत्युक्तं कैयटेन 'दीधीवेवीटामि'ति सूत्रे। ध्वनितं च भाष्ये इत्याहुः।

अनन्यतयेति। गौणत्वेऽप्यनङ्णित्त्वयोः प्रवृत्तेरुक्तत्वाच्चेति बोध्यम्। 'अभिव्यक्तपदार्था ये' इति न्यायस्तु गौणमुख्यन्यायवत्पदकार्यविषयक एवेत्युक्तम्।

( केचित्तु[6] तत्र पदशब्देन[7] कार्यप्रवृत्तिवेलायामनभिव्यक्ताऽर्थोप-

१ 'तेन क्यणिच्सु अस्य' ख. पाठः।

२ 'ण्यन्तपादयतेः पात्, पद इति' इति ख. ग. पाठः।

३ 'येन विधिरितिसूत्रभाष्यात्, प्रागुक्तभाष्याच्च' ख. पाठः।

४ 'अत एव पिपठिषतेरप्रत्यये' ख. पाठः।

५ 'इत्याहुः' इत्यारभ्य' 'इति बोध्यम्' इत्यन्तः ख. ग. पाठः, क. नास्ति।

६ 'केचित्त' इत्यारभ्य 'प्रयोजनप्रदर्शनपरभाष्यविरोधात्' इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

७ 'तत्र पदशब्देन' इति क. नास्ति।

स्थापकत्वा[1]देवंविधानां तेन न्यायेनाऽनङादिविधावग्रहणम् । [2]प्राति-पदिककार्येऽप्रवृत्तौ हि तन्मात्रात्तदर्थाऽनुपस्थितिरेव बीजम्। न च प्रसिद्धा-ऽर्थस्याऽपि तत्र विशेषणतया भानान्न दोषः । न्याये 'पदार्थे'त्यनेन पद-जन्यप्रतीतिविशेष्यस्यैव ग्रहणात्। अत एव 'ख्यत्या'त्सूत्रे 'सखिपतिभ्या-मि'तिन्यासे 'सखीयतेरप्रत्यये सख्युरि'त्यत्राऽव्याप्तिप्रतिपादनपरभाष्यं विना सङ्कोचमुपपद्यते । 'सह खेन सखस्तामिच्छतो'ति [3]कैयटादिकृतं सङ्कोचेन व्याख्यानं चिन्त्यमेव । तस्मात् 'सखीः' 'सख्यावि'त्येवेत्याहुः । तन्न । 'मपर्यन्तस्येति सूत्रे 'परि'ग्रहणस्य युष्मयतेरस्मयतेश्चाऽप्रत्यये प्रयोजनप्रदर्शनपरभाष्यविरोधात् ) ।

दीर्घस्यापीति । 'खितेः परस्ये'ति वक्तव्ये कृतयणा निर्देशादिति भावः । ननु 'अतिसखेः' 'भूपतेरि'त्यादिगुणविषये व्यावृत्त्यर्थं यणा निर्देशः । न चाऽत्र गुणे कृतेऽपि, खितिशब्दयोर्गुणस्यानित्वे माना-ऽभावेन, खितिशब्दाऽभावेन, तदप्राप्तिः । एकदेशविकृतन्यायोऽपि न । अर्द्धस्य, तदधिकस्य वा विकारेण प्रत्यभिज्ञाऽभावादिति वाच्यम् । घित्वा-ऽङ्गत्वसापेक्षगुणाऽपेक्षयाऽस्याऽन्तरङ्गत्वादिति चेन्न । तदर्थं कृतस्याऽन्य-सङ्ग्राहकत्वेपि बाधकाऽभावात् । न च [4]यणा निर्देशस्य दीर्घसङ्ग्राहक-तया चारितार्थ्येन, वाक्याऽर्थान्वयित्वे मानाऽभावेन, यण्विषये उत्वं, न गुणविषये' इत्यर्थाऽसिद्धिरिति वाच्यम् । भाष्यप्रामाण्येन यकारान्ता-ऽनुकरणस्य सूत्रेऽङ्गीकारेणाऽदोषात् । अत एवोच्चारणार्थोऽकार इत्याहु-र्नतु यणर्थ इति । एवं च गुणविषयेऽप्राप्तिः सिद्धैव । दीर्घप्रकृतिकग्रहणं च सिद्धम् । ङस्यादिपरस्तादृशः खि-खी-ति-ती-शब्दप्रकृतिक एव सम्भवती-

---

१ 'गौणार्थोपस्थापकोपलक्षणत्वादेवंविधानाम्' इति ख. ग. पाठः ।

२ 'प्रातिपदिककार्ये' इत्यारभ्य 'बीजम्' इत्यन्तः क. पाठः ।

३ 'कैयटादिकृतं भङ्क्त्वा व्याख्यानम्' ख. ग. पाठः ।

४ 'यणादिनिर्देशस्य' ख. पाठः ।

त्याशयेन मूले 'खिखी'त्याद्युक्तम्। अपत्यादिशब्देभ्य आचक्षाणण्यन्तेभ्यः क्विपोऽनभिधानमेवेति बोध्यम्।

शुष्किय इति। न चाऽत्राऽऽभीयेत्वेनाऽतो लोपस्याऽसिद्धत्वम्। व्याश्रयत्वात्। न चाऽत्र यणापत्तिः। संयोगपूर्वत्वात्। इतीदन्ताः।

तृज्वत्। 'क्रुश आह्वाने' इत्यतस्तुनि, 'क्रोष्टु'शब्दः। तृचि 'क्रोष्टृ' शब्दः। द्वावपि शृगालाऽर्थौ। तत्राऽविशेषेण द्वयोः प्रयोगे प्राप्ते, 'सर्वनामस्थाने, स्त्रियां च तृजन्त एव, तृतीयादावच्युभयम्, अन्यत्र तुन्नन्त एवे'ति फलतः प्रयोगनियमाऽर्था त्रिसूत्री।

'क्रोष्टु'रिति तुन्नन्तात्प्रथमा। 'तृज्वदि'ति तृतीयान्ताद्वतिः। 'तृजन्तेन तुल्यमि'ति।

नाऽयं 'सुबामन्त्रिते पराऽङ्गवदि'तिवत् तादात्म्याऽतिदेशः। तद्वत्-सहप्रयोगाऽभावात्। नाऽपि 'पूर्ववत्सन'इतिवन्निमित्ताऽतिदेशः। तस्या-ऽशक्याऽतिदेशत्वात्, ब्राह्मणत्ववत्। न हि ब्राह्मणस्य श्राद्धभोजनाऽऽदौ निमित्तभूतं ब्राह्मण्यं वचनशतेनाऽप्यतिदेष्टुं शक्यते। यद्यप्याहार्यारो-पेणाऽपि शास्त्रप्रवृत्तेर्निमित्ताऽतिदेशोऽपि वक्तुं शक्यः। ब्राह्मण्यन्त्वना-रोपितमेव श्राद्धभोजने निमित्तमिति लोके न दोषः, तथाऽपि तृजन्तत्वरूप-निमित्ताऽतिदेशाऽऽश्रयणे [1]आहत्य तृच्छब्दमुच्चार्य विहितकार्यस्यैवापत्तौ, जसि गुणेऽवादेशे, तृजन्तोद्देश्यका'ऽप्तृन्नि'ति दीर्घ [2]एव स्यात्। सौ, औजसादौ चाऽनङ्गुणौ न स्याताम्[3]।

---

१ 'आहत्य' इत्यारभ्य 'आपत्तौ' इत्यन्तः क. पाठः। ख. ग. नास्ति।

२ 'दीर्घ एव स्यात्, न त्वनङ्गुणौ' इति ख. ग. पाठः।

३ इतोऽग्रे–'ननु तयोरभावे उपधायामचोऽभावाद्दीर्घाऽप्रवृत्तावतिदेशवैयर्थ्यम्। न च 'देवदत्तस्य क्रोष्टे'त्यादौ 'तृजकाभ्यामि'तिषष्ठीसमासनिषेधेन चारि-तार्थ्यम्। अस्य शृगाले रूढत्वेन कर्मणि षष्ठ्या असम्भवात्। कर्त्तुरुक्तत्वेन कर्तृषष्ठ्या अप्यसम्भवाच्चेति चेन्न। जसि गुणेऽवादेशे चारितार्थ्यात्। किञ्चो-

एतेन 'आद्यन्तवदि'तिवत्तृजन्तत्वरूपव्यपदेशस्याऽतिदेश' इति परास्तम् । यदि तूत्तरसूत्रद्वयस्य सामर्थ्यादप्तृन्नित्यत्र क्रोष्टुग्रहणेनैव सिद्धावस्याऽपि सामर्थ्यात्कार्यमात्रप्रवृत्त्यङ्गीकार इत्युच्यते, तर्हि शास्त्र-कार्ययोरतिदेश एव ज्ञापयितुं युक्तः । स्त्रियां चे'ति सामर्थ्याच्चाऽनाङ्ग्योरपि सः ।

वस्तुनो न तयोरपि सः । 'क्रोष्टा' इत्यादौ तुन्नन्तस्याऽऽद्युदात्ततया उदात्तस्थानिकयणोऽभावेन 'उदात्तयणो हल्पूर्वादि'ति स्वराऽनापत्तेः । अर्थोऽतिदेशस्त्वसम्भव्येव । तुन्नन्ततृजन्तयोरर्थैक्यस्य स्वत एव सत्त्वात्, तत्सत्त्वे मानाऽभावाच्चेति 'जात्याख्यायामि'त्यादौ निरूपयिष्यामः ।

तस्माद्रूपाऽतिदेशोऽयम् । प्राधान्याच्च । तत्राऽपि न प्रयोगसमवायि- 'क्रोष्टार्' इत्यादिरूपग्रहणम् । अनेकत्वात् । उदात्तस्थाने यणोऽभावात्, 'उदात्तयणो हल्पूर्वादि'ति स्वराऽनापत्तेश्च । किन्तु 'क्रोष्टृ' इति । 'तृज्वदि'त्यत्र ऋकारस्योपस्थितत्वेन तद्विशिष्टस्यैवाऽतिदेशात् । तत्र 'तृज्वदि'ति चकारग्रहणसामर्थ्यात्स्वरविशिष्टरूपस्याऽतिदेशेन, ऋकारस्योदात्तत्वात्, 'उदात्तयण' इत्यादिस्वरसिद्धिरित्यभिप्रेत्याह—क्रोष्टुशब्देति । पञ्चादेस्तु नाऽतिदेशः । अर्थत आन्तर्याऽभावात् । (न च 'दयते दिगी'तिवत्स्थान्यादेशभावबोधकमेवाऽस्त्विति वाच्यम् । वत्करणवैयर्थ्यापत्तेः । 'दिगि'वदस्य मानान्तरेणाऽसिद्धभावाच्चेति दिक् ) ।

---

त्तरसूत्रद्वयवैयर्थ्यापत्तिः । 'अप्तृन्नि'तिसूत्रे क्रोष्टुग्रहणेनैव सिद्धावस्यापि वैयर्थ्यापत्तेश्च' इति क. कुण्डलितः पाठः ।

१ इतोऽग्रे–'नाऽपि तयोरपि वक्तुं शक्यः' इति ख. पाठः ।

२ 'क्रोष्टा इत्यादौ' इति क. पाठः । ख. नास्ति ।

३ 'किन्तु शास्त्रीयं 'क्रोष्टृ' इति । तृजन्तत्वबोधाऽर्थं शास्त्राऽन्वेषणस्याऽऽवश्यकत्वेन तस्यैवोपस्थितत्वात्, प्रत्यासन्नत्वाच्च'–इति क. कुण्डलितः, ख. ग. पाठः ।

४ 'न च' इत्यारभ्य 'दिक' इत्यन्तः क. कुण्डलितः पाठः ।

ऋतो ङि । 'ऋ्' 'ॠ्' इत्यनयोरनुकरणवारणाय तपरत्वमिति केचित्[1] ।

अप्तृन् । 'तृ' इति वक्तव्ये द्वयोरुपादानं क्वचित्सामान्योपादानेऽपि विशेषग्रहणाऽर्थम् । तेन 'न कोपधायाः' इति सूत्रे तद्धितवुग्रहणं सिद्ध-मित्याहुः । तन्न । विनिगमनाविरहेण विशेषद्वयस्याऽपि ग्रहणाऽऽपत्तौ, ज्ञापितेऽपि चारितार्थ्याऽभावात् ।

केचित्त्वर्थवत्परिभाषाऽनित्यत्वज्ञापनद्वारा 'अर्वणस्तृ'व्यावृत्त्यर्थम् । तेन 'अनिनस्मन्ग्रहणान्यर्थवते'ति सिद्धमित्याहुः । तन्न । 'प्रत्ययाऽप्रत्यय-योरि'ति परिभाषयाऽऽदेशवारणात् । तस्मात् 'तृ' इति वक्तुं शक्यम् । स्पष्टं चेदं 'ण्वुल्तृचावि'ति सूत्रे भाष्ये ।

ननु 'ण्वुल्तृचावि'तिसूत्रस्थभाष्यबोधितव्युत्पत्तिपक्षे तृन्नन्तत्वात्, तृजन्तत्वाद्वा दीर्घे सिद्धे, नप्त्रादिग्रहणं व्यर्थमत आह—**नियमार्थमिति** । 'अन्येषामुणादिव्युत्पन्नानां संज्ञाशब्दानां ने'ति । तेन 'धातृ'शब्दे दीर्घो भवत्येव । तस्योणादिव्युत्पन्नत्वाऽभावात् । नेष्ट्रादयोऽप्युणादय[2] इत्यभि-मानः । वस्तुतस्तृन्निति सूत्रस्थवार्त्तिकेन तेषां व्युत्पादनात् 'नप्त्रादी'त्यादि-ग्रहणेन प्रशास्तृशब्दस्यैव ग्रहणम् । अव्युत्पत्तिपक्षे तु विध्यर्थमेव बोध्यम् । स च पक्षोऽतः कृकमी'ति सूत्रे 'कमि'ग्रहणेनैव सिद्धे 'कंस'-ग्रहणेन ज्ञाप्यते । न च दन्त्यान्त्यकसेरेवेदं रूपम् । 'प्रत्ययस्य लुक्श्लुलुप' इतिसूत्रस्थकैयटहरदत्तादिप्रामाण्येन तस्येदृशे[3] विषये प्रयोगाऽभावा-ऽनुमानादित्याहुः । 'उणादिषु मात्रादयो निरनुबन्धक'तृ'प्रत्ययान्ताः, वेदे[4] क्वचिद्विपरीतस्वरस्तु व्यत्ययात्साध्यः' इति 'ण्वुल्तृचावि'तिसूत्रस्थभाष्य-

---

१ 'इति केचित्' इति ख. नास्ति । क. ग. पाठः ।

२ 'नेष्ट्रादयः' इत्यारभ्य 'ग्रहणम्' इत्यन्तः क. पाठः ।

३ 'ईदृशे विशेषविषये' इति ख. पाठः ।

४ 'वेदे क्वचित्' इत्यारभ्य 'साध्यः' इत्यन्तः क. पाठः ।

स्वरसः, तदाऽपि विध्यर्थमेव नाऽत्रादिग्रहणं बोध्यम् । (शंस्रादेराद्युदात्तत्व-सिद्धये 'तृन्तृचौ शंसि क्षदादिभ्य' इत्युणादिसूत्रेऽनुबन्धोच्चारणमाव-श्यकम् । व्यत्ययाऽऽदिना तत्साधनस्याऽगतिकगतित्वादिति तु मूलाऽऽशयः) ।

**भाष्यप्रयोगादिति** । एवं चोणादिष्वस्य व्युत्पादनमप्रामाणिकमिति भावः । पङ्कजपदवत् अष्टाध्यायीव्युत्पन्नत्वेऽपि योगरूढिस्वीकारे बाधका-ऽभावादिति तत्त्वम् । **क्रोष्टेति** । अनङ् । हल्ङ्याब्भ्यो दीर्घात्-इत्यादिलोपात्परत्वादुपधा-दीर्घः । स च 'सर्वनामस्थाने चे'त्यनेन यद्यपि सिद्ध्यति, तथाऽपि कृता-ऽनङः स्थानिवत्त्वेन तृजन्तत्वेन परत्वाद'तृन्नित्येव न्याय्यः । कार्यैक्येऽपि विप्रतिषेधप्रवृत्ते'र्नपुंसकस्य झलच' इत्यादिसूत्रस्थभाष्येषु बहुशो-दर्शनात् । तत्र हि भाष्ये 'गोमन्ति' इत्यादावुगिल्लक्षणनुमः परत्वाज्झल्लक्षण उक्तः । केचित्तु तत्रैकनुमि अन्त्यादचः परे जाते, न द्वितीयस्या-ऽन्त्यादचः परत्वसम्भव इत्यसम्भवो विप्रतिषेधबीजमस्ति । प्रकृते च नाऽसम्भवः । अतोऽत्र 'सर्वनामस्थाने चे'त्येव दीर्घः । प्रथमोपस्थि-तत्वात् । तदनन्तरं पर्जन्यवल्लक्षणप्रवृत्त्याऽस्यापि प्रवृत्तिरित्याशय इत्याहुः ।

**विभाषा तृतीयादिषु** । अयमपि नियम एव'तृतीयादावच्येवोभयमि'ति । तेन भ्यामादौ, शसि च, 'क्रोष्टुपुत्र' इत्यादौ च न दोषः । सर्वत्र विशिष्टाऽभावस्य सुलभत्वात् । ननु 'तृज्वत्सर्वनामस्थाने एवे'ति नियमं स्वीकृत्याऽस्य विध्यर्थतैवोचिता । न च सर्वनामस्थाने तुन्नन्त-प्रयोगस्याऽप्यापत्तिः । 'क्रोष्टृ' इत्येव सूत्रयितव्ये, क्रोष्टुशब्दोद्देशेन तृजन्त-

---

१ 'शंस्रादेः' इत्यारभ्य 'मूलाशयः' इत्यन्तः ख. पाठः ।

२ 'कृताऽनङः स्थानिवत्त्वेन तृजन्तत्वेन' इति क. ग. पाठः । ख. नास्ति ।

३ 'बहुशो दर्शनात् । कृतेऽप्यनङि एकदेशविकृतन्यायेन, स्थानिवद्भावेन वा तृजन्तत्वादिति भावः'—इति ख. पाठः ।

४ 'तत्र हि' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः ।

रूपाऽतिदेशबोधकगुरुतरन्यासेन वाच्याऽर्थविरोधान्न तत्प्रयोगाऽऽपत्ति-रिति चेन्न। सर्वनामस्थाने, स्त्रियां च क्रोष्टुशब्दे तृजन्तवद्रूपाऽति-देशेनाऽर्थात्तुन्नन्तस्याऽप्रयोगवत्, अन्यत्र तुन्नन्ते तद्रूपाऽतिदेशका-ऽभावेनोभयोः प्रयोगस्य सिद्धत्वेन, एवमपि विध्यर्थताया दुरुपपादत्वात्। आद्यसूत्रयोर्नियमत्वोक्तिस्तु नियमफलकत्वादिति बोध्यम्। नन्वेवमपि 'क्रोष्टूनि'त्याद्यसङ्गतम्, अन्यत्र तृजन्तस्यैव प्रयोगेणाऽप्युक्तनियमस्य चारितार्थ्यादिति चेन्न। 'तृज्वत् क्रोष्टुरि'ति योगविभागस्य वैयर्थ्या-ऽऽपत्तेः। न[1] च 'तद्धितेष्वचामादेरि'तिसूत्रस्थः 'क्रौष्ट्र' इति भाष्य-प्रयोगो, 'वृद्धिरादैच्'सूत्रस्थः 'क्रोष्ट्रीया' इति च भाष्यप्रयोगोऽसङ्गतः स्यादिति वाच्यम्। 'क्रोष्ट्र्[2]या अयमि'ति विग्रहेणाऽदोषात्। 'क्रोष्ट्री'ति कस्याश्चिदृषिमातुर्नाम। 'वा नामधेयस्ये'ति च वा वृद्ध[3]त्वम्। शुद्ध-संज्ञात्वेन भाषितपुंस्कत्वाऽभावात् 'भस्याऽढे' इति न पुंवत्त्वम्। ईकारस्यैव 'यस्ये'तिलोपात्परत्वाद्वृद्धिप्राप्त्या, न 'अचामादिवृद्धावन्त्यो-पधावृद्धिप्रतिषेध' इति तत्रत्यवा[4]र्त्तिकोदाहरणविरोध इत्याहुः।

'भाष्यप्रयोगादेव साधुत्वमि'त्यन्ये[5]।

ऋत उत्। तपरकरणं 'भाव्यमानोऽप्यण् क्वचित्सवर्णग्राहक' इत्यर्थज्ञापनद्वाराऽऽन्तर्यतो द्विमात्रनिवृत्त्यर्थमिति 'ह्ळारि'ति सूत्रे कैयटः। ज्ञापनफलन्तु 'अमूभ्यामि'त्यादिसिद्धिरिति तत्रैव निरूपयिष्यामः।

सस्यैवेति। संयोगान्तलोपेनैव सिद्धे नियमाऽर्थमिति भावः। तेन ऊर्गित्यादौ लोपो न। 'रादेव सस्ये'ति विपरीतनियमस्तु न। 'पुमान् स्त्रिये'ति निर्देशात्। परत्वादिति। न च नुट् नित्यः। सन्निपातपरिभाषया[6] तदप्राप्तेः। इत्युदन्ताः।

---

१ 'न चैवम्' ख. पाठः। २ 'क्रोष्ट्र्या अपत्यमिति विग्रहेण' ख. पाठः।

३ 'वृद्धत्वमस्य' ख. पाठः। ४ 'न तत्रत्योदाहरणविरोधः' ख. पाठः।

५ 'इति केचित्' ख. पाठः।

६ 'तृज्वद्भावे संनिपातपरिभाषया' ख. पाठः।

